# नैषधचरितम् ।

द्वितीयखण्डम् ।

[ दशमावधि द्वाविंशसर्गपर्य्यन्तम् ]

महाकवि श्रीहर्षविरचितम् ।

मल्लिनाथकृतां व्याख्यामवलम्ब्य

बि, ए, उपाधिधारिणा पण्डितकुलपतिना

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया तथा तदात्मजाभ्यां

पण्डित-श्रीमदाशुबोधविद्याभूषण-पण्डित-श्रीमन्नित्यबोध-

विद्यारत्नाभ्यां परिवर्द्धितया प्रतिसंस्कृतया च व्याख्यया

समुद्भासितं ताभ्यामेव प्रकाशितञ्च ।

चतुर्थसंस्करणम् ।

कलिकातामहानगर्य्यां

वाचस्पत्ययन्त्रे

मुद्रितम् ।

ई १८११ ।

प्रकाशक— पण्डित-श्रीआशुबोधविद्याभूषण
तथा
पण्डित-श्रीनित्यबोधविद्यारत्न ।

प्राप्तिस्थान— [illegible], रमानाथ मजुमदार ष्ट्रीट्, आम्हार्ष्ट
ष्ट्रीट् पोष्ट-अफिस । कलिकाता ।

प्रिण्टर—वि, वि, मुखर्जी ।

२ नं०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता ।

# नैषधचरितम्।

## दशमः सर्गः।

रथैरथायुः कुलजाः कुमाराः शस्त्रेषु शास्त्रेषु च दृष्टपाराः।
स्वयंवरं शम्बरवैरिकायव्यूहश्रियः श्रीजितयक्षराजाः॥ १॥
नाभूदभूमिः स्मरसायकानां नासीदगन्ता कुलजः कुमारः।
नास्थादपन्था धरणेः कणोऽपि व्रजेषु राज्ञां युगपत् व्रजत्सु॥२॥

---

अथ स्वयंवरवृत्तान्तं वर्णयति, रथैरित्यादि।—अथ नल-प्रयाणानन्तरं, कुलजाः कुलीनाः, शस्त्रेषु शस्त्रविद्यासु, शास्त्रेषु त्रय्यादिषु च, दृष्टं पारं यैस्ते दृष्टपाराः पारदृश्वानः, शम्बर-वैरिणः कामस्य, यः कायव्यूहः शम्बरासुरजयार्थं मायया गृहीतो यः शरीरसमूहः, तस्य श्रीरिव श्रीः शोभा येषां ते कन्दर्पकल्पा इत्यर्थः, श्रिया सम्पदा, जितो यक्षराजः कुबेरो यैस्ते, कुमाराः राजकुमाराः, "कन्या वरयते रूपम्" इत्याद्युक्त-समग्रगुणसम्पन्नाः इत्यर्थः, रथैः साधनैः, स्वयं व्रियतेऽस्मिन्निति स्वयंवरस्तं स्वयंवरभुवं, तदा आयुः आयाताः, [ आङ्पूर्वात् यातेर्लङि "लङः शाकटायनस्यैव" इति वैकल्पिको झेर्जुसादेशः ] अत्र कायव्यूहश्रिय इति निदर्शना, श्रीजितयक्षराजाश्च व्यतिरेकः इत्यलङ्कारयोः संसृष्टिः। अस्मिन् सर्गे उपेन्द्रवज्रेन्द्र-वज्रा-तदुपजातयश्च वृत्तानि॥ १॥

नेति।—कुलजः कुलीनः, कोऽपीति शेषः, कुमारः स्मर-सायकानामभूमिरविषयः, नाभूत्, तथा अगन्ता स्वयंवराप्रयाता च, नाभूत्। किञ्च राज्ञां व्रजेषु युगपत् व्रजत्सु सत्सु धरणेः कणोऽपि भूलेशोऽपि, अपन्था अपथं, मार्गशून्य इत्यर्थः, [ "पथो

योग्यैर्व्रजद्भिर्नृपजां वरीतुं वीरैरनर्हैः प्रसभेन हर्त्तुम्।
द्रष्टुं परैस्ताननुरोद्धुमन्यैः स्वमात्रशेषाः ककुभो बभूवुः ॥३॥
लोकैरशेषैरवनिश्रियं तामुद्दिश्य दिश्यैर्विहिते प्रयाणे।
स्ववर्त्तितत्तज्जनयन्त्रणार्त्तिविश्रान्तिमापुः ककुभां विभागाः ॥४॥
तलं यथेयुर्न तिला विकीर्णाः सैन्यैस्तथा राजपथा बभूवुः।
भैमीं स लब्धामिव तत्र मेने यः प्राप भूभृत् भवितुं पुरस्तात् ॥५॥

विभाषा" इति विकल्पात् समासान्ताभावः] नास्थात् न स्थितः, [ "गातिस्था—" इत्यादिना सिचो लुक्]। अत्र राज्ञां कार्त्स्न्येन स्मरेषुविषयत्व-स्वयंवरगन्तृत्वाभ्यां सकलभूमेः पथित्वेन चासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिर्भेदः ॥ २ ॥

योग्यैरिति।—योग्यैः रूपयौवनादिना सम्बन्धार्हैः, नृपजां भैमीं, वरीतुं [ "वृतो वा" इति दीर्घः ] अनर्हैः रूपयौवनादि-शून्यैः, वीरैः प्रसभेन बलेन, हर्त्तुं, परैः केश्चिन्निःस्पृहैः, केवलं द्रष्टुमेव, स्वयंवरमिति शेषः, अन्यैस्तु तान् राजन्यादीन्, अनुरोद्धु-मुपासितुं, व्रजद्भिः कर्णैस्तद्राजन्यैरित्यर्थः, ककुभो दिशः, स्वमात्रशेषाः स्वरूपमात्रावशिष्टाः, लोकशून्या इत्यर्थः, बभूवः। अत्रापि ककुभां स्वमात्रशेषत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्ति-भेदः। अनुरोद्धुमित्यत्र उपरोद्धुमिति च पाठः ॥ ३ ॥

लोकैरिति।—अवनिश्रियं भूलोकलक्ष्मीं, तां भैमीम्, उद्दिश्याभिसन्धाय, दिश्यैर्दिक्षु भवैः, [ दिगादिभ्यो यत् ] अशेषैर्लोकैर्जनैः, प्रयाणे विहिते सति ककुभां विभागाः प्रदेशाः, स्ववर्त्तिनां स्वनिष्ठानां, तेषां तेषां जनानां यन्त्रणया सम्बन्धेन आर्त्तेः पीड़ायाः, विश्रान्तिं विरतिम्, आपुः, भाररहित्यात् सुखावस्थानं चक्रुरित्यर्थः। तद्दलच्यतेत्युत्प्रेक्षा गम्या ॥ ४ ॥

तलमिति।—यथा विकीर्णा उपरि क्षिप्ताः, तिलास्तलं,

नृपः पुरःस्थैः प्रतिरुद्धवर्त्मा पश्चात्तनैः कश्चन नुद्यमानः ।
यन्त्रस्थसिद्धार्थपदाभिषेकं लब्ध्वाऽप्यसिद्धार्थममन्यत स्वम् ॥६॥
राज्ञां पथि स्त्यानतयाऽऽनुपूर्वीविलङ्घनाशक्तिविलम्बभाजाम् ।
आह्वानसंज्ञानमिवाग्रकम्पैर्दधुर्विदर्भेन्द्रपुरीपताकाः ॥७॥

---

भूतलं, नेयुः नाप्नुयुः, सैन्यैः सैनिकैः, ("सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते" इत्यमरः) ["सेनाया वा" इति ण्यप्रत्ययः] राजपथा राजमार्गाः, तथा तिलमात्रावकाशरहिताः, बभूवुः, तादृक्सम्बन्धासम्बन्धेऽपि सम्बन्धस्योक्तेरतिशयोक्तिभेदः । किञ्च तत्र समये, यो भूभृद्राजा, पुरस्ताद्भवितुं गन्तुं, प्राप शशाक, स राजा, भैमीं लब्धामिव मेने पूर्वमुपस्थितं मामेव भैमी वरीष्यते इति ज्ञानादहंपूर्विकया सर्वे समाजग्मुरित्यर्थः ॥ ५ ॥

नृप इति ।—पुरःस्थैर्जनैः, प्रतिरुद्धवर्त्मा निरुद्धमार्गः, पश्चात्तनैः पश्चाद्भवैः, पृष्ठत आगतैरित्यर्थः, ["सायं चिरम्—" इत्यादिना ट्युल्प्रत्ययस्तुडागमश्च] नुद्यमानः प्रेर्यमाणः, कश्चन नृपः, यन्त्रस्थस्य तैलाकर्षणयन्त्रलग्नस्य, सिद्धार्थस्य सर्षपस्य, पदे स्थाने, अभिषेकं लब्ध्वाऽपि सर्षपत्वं प्राप्यापीत्यर्थः, स्वमात्मानम्, असिद्धार्थमसर्षपम्, अमन्यतेति विरोधः; अपिशब्दो विरोधद्योतनार्थः; असिद्धार्थं भैमीप्राप्तिरूपसिद्धिरहितममन्यतेत्यविरोधाद्विरोधाभासोऽलङ्कारः । अत्र सम्मर्दे यन्त्रस्थसर्षपवद्विशीर्णस्य मे कुतोऽर्थसिद्धिरित्यमन्यतेत्यर्थः ॥ ६ ॥

राज्ञामिति ।—विदर्भेन्द्रपुरी कुण्डिनपुरं, तस्याः पताकाः अग्रकम्पैः स्वाग्रचलनैः, पथि मार्गे, स्त्यानतया संहततया, सैन्यसङ्कीर्णतयेत्यर्थः, ["संयोगादेरातो धातोर्यण्वतः" इति स्त्यायतेर्निष्ठानत्वम्] आनुपूर्वीविलङ्घनाशक्त्या अक्रमचङ्क्रमणाशक्त्या,

प्राग्भूय कर्कोऽटक आचकर्ष सकम्बलं नागबलं यदुच्चैः ।
भुवस्तले कुण्डिनगामिराज्ञां तद्वासुकेश्वाश्वतरोऽन्वगच्छत् ॥८॥

विलम्बभाजां राज्ञाम् आह्वानसंज्ञानम् आकारणचेष्टां, दधुरिवेत्युत्प्रेक्षा ॥ ७ ॥

प्रागिति ।—भुवस्तले भूपृष्ठे, कुण्डिनगामिनां [श्रितादिषु गमिगामिनामुपसङ्ख्यानात् द्वितीयासमासः] राज्ञां सम्बन्धि, सकम्बलं सप्रावारम्,उच्चैर्महत्,यन्नागबलं गजबलं,[कर्म]अटतीत्यटकः शीघ्रं गन्ता,द्रुयगतिर्वा,["बहुलमन्यत्रापि"इत्यौणादिकः क्वन्प्रत्ययः] कर्कः श्वेताश्वः, ("पृष्ठ्यः स्थौरी सितः कर्कः" इत्यमरः) [जातावेकवचनम्] प्राग्भूय अग्रसरो भूत्वा, [प्रागिति सुबन्तस्य गतित्वाद्गतिसमासे क्त्वो ल्यप्] आचकर्ष आकृष्टवान् ; अश्वपूर्वं गजा गच्छन्तीति प्रसिद्धम्। तन्नागबलम्, अश्वतरो गर्दभादश्वायामुत्पन्नो वेसराख्यो वाहनविशेषः, ["वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे"इति ष्टरच्प्रत्ययः,"तस्य तनुत्वमन्यपितृकता"इति काशिका] सोऽन्वगच्छत् । [अत्रापि जातावेकवचनम्] अग्रतोऽश्वास्ततो गजास्ततोऽश्वतरा जग्मुरित्यर्थः । अन्यत्र—भुवस्तले रसातले,कुण्डिनगामिनः वासुकेर्वासुकिमहानागस्य सम्बन्धि, सकम्बलं कम्बलाख्यनागेन्द्रसहितं, ("कम्बलो नागराजे स्यात् सास्नाप्रावारयोरपि" इति विश्वः) यदुच्चैर्नागबलमहिसैन्यं, ("नागश्चाहौ गजे च ना" इति वैजयन्ती) कर्कोटकनामनागविशेषः प्राग्भूयाचकर्ष, तन्नागबलमश्वतरो नाम नागराजविशेषोऽन्वगच्छत्, ("अश्वतरो वेसरे च नागराजान्तरेऽपि च" इति विश्वः) कम्बलकर्कोटकाश्वतरादियुक्तो वासुकिश्च सबल आगत इत्यर्थः । अत्रोभयोः अहि-करिबलयोः प्रकृतत्वात् केवलं प्रकृतिश्लेषः ॥ ८ ॥

आगच्छदुर्वीन्द्रचमूसमुत्थैर्भूरेणुभिः पाण्डुरिता मुखश्रीः।
विस्पष्टमाचष्ट दिशां जनेषु रूपं पतित्यागदशानुरूपम्॥९॥
आखण्डलो दण्डधरः कृशानुः पाशीति नाथैः ककुभां चतुर्भिः।
भैम्येव बद्धा स्वगुणेन कृष्टैर्ययै तदुद्वाहरसान्न शेषैः॥१०॥
मन्त्रैः पुरं भीमपुरोहितस्य तद्बद्धरक्षं विशति क्व रक्षः?।
तत्रोद्यमं दिक्पतिराततान यातुं ततो जातु न यातुधानः॥११॥

आगच्छदिति।—आगच्छतामुर्वीन्द्राणां राज्ञां, चमूसमुत्थैर्भूरेणुभिः पाण्डुरिता धूसरीकृता, दिशां मुखश्रीः पतित्यागदशानुरूपं भर्त्तृप्रवासावस्थोचितं, रूपं "प्रोषिते मलिना कृशा" इत्युक्ताकारं, जनेषु विषये,विस्पष्टम् आचष्ट जनेभ्यः प्रकटीचकारेत्यर्थः। अत्रान्यधर्मस्यान्यत्रासम्भवाद्दिशां प्रोषितभर्त्तृकारूपसदृशरूपमिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धाख्यो निदर्शनाभेदः। हरिद्वधूनामिति पाठे रूपकं व्यक्तम्॥ ९॥

अथेन्द्रादिलोकपालवृत्तान्तमाह, आखण्डल इति।—आखण्डलः इन्द्रः,दण्डधरो यमः, कृशानुः अग्निः, पाशी वरुणः, इति प्रसिद्धैः चतुर्भिः ककुभां नाथैः भैम्या स्वगुणेन स्वसौन्दर्यगुणेनैव, गुणरज्ज्वेति श्लिष्टरूपकं, बद्धा कृष्टैरिवेत्युत्प्रेक्षा, तदुद्वाहरसाद्भैमीपरिणयरागादेव, ययै कुण्डिनं प्रति यातं, [यातेर्भावे लिट्] शेषैरवशिष्टैः नैर्ऋतादिभिः षड्भिः,न ययै॥१०॥

अथ षड्भिर्नैर्ऋताद्यनागमने कारणमाह, मन्त्रैरित्यादि।—भीमस्य भीमभूपतेः, पुरोहितस्य मन्त्रैः रक्षोभयनाशकमन्त्रैः, बद्धरक्षं कृतरक्षणं, तत् पुरं कुण्डिनपुरं, रक्षो राक्षसः, क्व कुतः, विशति? न कथञ्चिदपीत्यर्थः; ततः रक्षोबन्धाद्धेतोः, यातुधानो नैर्ऋतः, दिक्पतिः जातु कदापि, तत्र पुरे, यातुं गन्तुम्, उद्यमं न आततान न चकार॥११॥

कर्त्तुं शशाकाभिमुखं न भैम्या मृगं दृगम्भोरुहनिर्जितं यत्।
तस्या विवाहाय ययौ विदर्भान् तद्वाहनस्तेन न गन्धवाहः ॥१२॥
जातौ न वित्ते न गुणे न कामः सौन्दर्य्य एव प्रवणः स वामः।
स्वच्छस्वशैलेचितकुत्सबेरस्तां प्रत्यगान्न स्त्रितरां कुबेरः ॥१३॥
भैमीविवाहं सहतेऽस्य कस्मादर्द्धं तनुर्या गिरिजा स्वभर्त्तुः?।
तेनाग्रजन्मा विदधे विदर्भानीशानयानाय तयान्तरायः ॥१४॥

कर्त्तुमिति।—गन्धवाहो वायुः,भैम्याः दृगम्भोरुहाभ्यां नयनारविन्दाभ्यां,निर्जितं मृगं स्ववाहनमृगम्,अभिमुखं कर्त्तुं न शशाकेति यत् तेनाशक्तत्वेन, तद्वाहनो मृगवाहनः, स इति शेषः, तस्याः भैम्याः, विवाहाय विदर्भान् जनपदान्, न ययौ वाहनं विना गन्तुमशक्यत्वादन्यवाहनाभावाच्च तत्र न गत इति भावः ॥१२॥

ननु श्रुतवित्तादिसम्पन्नः कुबेरः किमिति न यातस्तत्राह, जाताविति।—कामः कुमार्य्याः अभिलाषः, जातौ अभिजने, कौलीन्ये इत्यर्थः, न प्रवणो न तत्परः, वित्ते धने च, न प्रवणः, गुणे विद्याशीलादौ च, न प्रवणः, किन्तु सौन्दर्य्ये एव प्रवणः; कुतः? स कामः, वामो वक्रः सुन्दरश्च इत्यर्थः; अत एव भणन्ति —"कन्या वरयते रूपम्" इति। इति विचार्य्य स्वच्छे स्फटिकमयत्वाद्दिम्बग्राहिणि, स्वशैले कैलासे, ईचिता कुत्सा गर्हा, यस्य तादृशं बेरं शरीरं यस्य सः सम्यगवगतस्वकौरूप्य इत्यर्थः, कुबेरः स्त्रितराम् उत्कृष्टस्त्रीं, त्रैलोक्यसुन्दरीमित्यर्थः, [ "नद्याः शेषस्यान्यतरस्याम्" इति घादिपरो ह्रस्वः] तां दमयन्तीं प्रति, न अगात् कौरूप्यलज्जया न गत इत्यर्थः ॥ १३ ॥

भैमीति।—गिरिजा पार्वती,स्वभर्त्तुः ईश्वरस्य, भैमीविवाहं कस्मात् सहते? न कस्मादपीत्यर्थः। असहने कारणमाह,—या अस्य भर्त्तुः, अर्द्धं तनुः [ समांशपरत्वान्नपुंसकत्वम् ] ("पुंस्यर्द्धोऽर्द्धं

स्वयंवरं भीमनरेन्द्रजाया दिशः पतिर्न प्रविवेश शेषः ।
प्रयातु भारं स निवेश्य कस्मिन्नहिर्महीगौरवमासहिः कः ? ॥१५॥
ययौ विमृश्योर्द्ध्वदिशः पतिर्न स्वयंवरं वीचितधर्मशास्त्रः ।
व्यलोकि लोके श्रुतिषु श्रुतौ वा समं विवाहः क्व पितामहेन ? ॥१६॥

समेंऽशके" इत्यमरः ) भर्त्तुरर्द्धाङ्गभूता कथं सापत्न्यं सहते ? इति भावः । तेनासहनेन निमित्तेन, विदर्भान् जनपदान्, अव्रजन्त्या अगच्छन्त्या, तया देव्या, ईशानस्य ईश्वरस्य, यानाय विदर्भान् प्रति प्रयाणाय, अन्तरायो विघ्नः, विदधे विहितः ; अचलत्यर्द्धं कथमर्द्धं चलेत् ? चलने वा शरीरं विशीर्य्येत निष्क्रियं स्यात् तस्मात् ईशानदिक्पालो नायात इत्यर्थः ॥ १४ ॥

स्वयंवरमिति ।—दिशः पतिरधोदिक्पालः, शेषः शेषाहिः, भीमनरेन्द्रजायाः भैम्याः, स्वयंवरं न प्रविवेश । कुतः ? स शेषः, भारं भूभारं, कस्मिन् निवेश्य निधाय, प्रयातु ? न कस्मिन्नपीत्यर्थः ; तथा हि, महीगौरवं महीभारं, सासहिर्भृशं सोढ़ा, [ सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ इति किकिनौ, तयोर्लिङ्वद्भावात् लोकेत्यादिना षष्ठीप्रति-षेधात् कर्मणि द्वितीया ] अहिः अन्यः सर्पः, कोऽस्ति ? न कोऽपीत्यर्थः ॥ १५ ॥

ययाविति ।—वीचितं सम्यक् परिशीलितं, धर्मशास्त्रं येन सः, ऊर्द्ध्वदिशः पतिर्ब्रह्मा, विमृश्यायुक्तमिति निश्चित्यैव, स्वयं-वरं न ययौ । तथा हि, पितामहेन ब्रह्मणा पितुः पित्रा च, सम विवाहः, ("पितामहो विरिञ्चिः स्यात्तातस्य जनकोऽपि च" इति विश्वः) लोके क्व व्यलोकि दृष्टः ? श्रुतिषु वेदेषु, वा क्व श्रुतः ? न क्वापीत्यर्थः, "असपिण्डां यवीयसीम्" इति स्मरणादिति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १६ ॥

भैमीनिरस्तं स्वमवेत्य दूत्या मुखात् किलेन्द्रप्रमुखा दिगीशाः ।
स्पन्दे मुखेन्दौ च वितत्य मान्द्यं चित्तस्य ते राजसमाजमीयुः ॥१७॥
नलभ्रमेणापि भजेत भैमी कदाचिदस्मानिति शेषिताशा ।
अभूत्महेन्द्रादिचतुष्टयी सा चतुर्नली काचिदलीकरूपा ॥ १८ ॥
प्रयस्यतां तद्भवितुं सुराणां दृष्टेन पृष्टेन परस्परेण ।
तद्द्वैतसिद्धिर्न वतानुमेने स्वाभाविकात् कृत्रिममन्यदेव ॥ १९ ॥

भैमीति ।—अथ ते पूर्वोक्ताश्चत्वार एव, इन्द्रप्रमुखा दिगीशाः दूत्याः स्वप्रेषितदूतिकायाः, मुखात् स्वमात्मानं, भैम्या निरस्तं परिहृतम्, अवेत्य ज्ञात्वा, चित्तस्य मान्द्यं विषादजाड्यं, स्पन्दे गत्यां, मुखेन्दौ च वितत्य विषादात् मन्दगतयो विवर्णमुखाश्च भूत्वेत्यर्थः ; एतेन सानुभावो विषाद उक्तः ; राजसमाजमीयुः किल ॥ १७ ॥

अथोपायान्तरवैफल्यादिन्द्रादयः तां वञ्चयित्वा गृहीतुं प्रवृत्ता इत्याह, नलेति ।—अथ राजसभाप्राप्त्यनन्तरं सा महेन्द्रादीनां चतुष्टयी भैमी कदाचित् कस्याञ्चिद्वेलायां, नल इति भ्रमेण भ्रान्त्यापि, अस्मान् भजेत वृणीत, इत्येव शेषिताशा एतावन्मात्रावशेषितमनोरथा सती, उपायान्तरापगमादिति भावः ; अलीकरूपा काल्पनिकस्वरूपा, अत एव काचिदनिर्वाच्या, चतुर्नली नलचतुष्टयी, अभूत् चत्वारोऽपि नलरूप दधुरित्यर्थः । [तद्धितार्थेत्यादिना समाहारद्विगावकारान्तोत्तरपदत्वात् स्त्रियां "द्विगोः" इति ङीप् ] ॥ १८ ॥

प्रयस्यतामिति ।—असः स भवितुं तद्भवितुं नलीभवितुं, [तच्छब्दादभूततद्भावे च्विः ] प्रयस्यतां प्रयतमानानां, [ यस्यतेः दैवादिकाल्लटः शत्रादेशः ] सुराणां सम्बन्धिनी, द्वयोर्भावो द्विता, द्वितेव द्वैतं, [प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः ] तस्य नलस्य,

पूर्णेन्दुमास्यं विदधुः पुनस्ते पुनर्मुखोचक्रुरनिद्रमब्जम्।
स्ववक्त्रमादर्शतलेऽथ दर्शं दर्शं बभञ्जुर्न तथाऽतिमञ्जु ॥२०॥
तेषां तथा लब्धुमनीश्वराणां श्रियं निजास्येन नलाननस्य।
नालं तरीतुं पुनरुक्तिदोषं वह्निर्मुखानामनलाननत्वम् ॥२१॥

---

द्वैतं तस्मिन्द्विद्वितीयनलत्वसिद्धिः, तदत्यन्तसारूप्यसिद्धिरिति यावत्, दृष्टेन असौ नलतुल्यो जातो न वेत्यवलोकितेन, तथा पृष्टेन अहं नलतुल्यो जातो न वेति जिज्ञासितेन, परस्परेण नानुमिते अतिप्रयासेनापि नलतुलां नारोहदेवेति भावः, वर्त्तते खेदे। तथा हि, स्वाभाविकात् स्वभावसिद्धाद्रूपात्, क्रियया निर्वृत्तं कृत्रिमं कृतकं रूपं, [ "ड्वितः क्त्रिः" "क्त्रेर्मप् नित्यम्" इति क्त्रिर्मप् च ] अन्यद्विलक्षणमेव, हीनमेवेत्यर्थः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १९ ॥

पूर्णेन्दुमिति।—ते देवाः, पुनः पूर्णेन्दुं पूर्णचन्द्रमिव, आस्यं विदधुः मुखं चक्रुः, तथा पुनरनिद्रं विकचम्, अब्जं पद्मं, मुखोचक्रुः, नलमुखसाम्यलाभाय पुनश्चन्द्रेण पद्मेन च मुखानि निर्ममुरित्यर्थः; अथानन्तरं, स्ववक्त्रमादर्शतले दर्पणान्तः, दर्शं दर्शं दृष्ट्वा दृष्ट्वा, पुनः पुनर्दृष्ट्वेत्यर्थः, [ आभीक्ष्ण्ये णमुल् द्विर्वचनञ्च ] तथा नलमुखवत्, अतिमञ्जु अतिसुन्दरं, नेति बभञ्जुर्भग्नं चक्रुः, निनिन्दुरित्यर्थः। अत्र पूर्णेन्द्वादिकारणसामान्येऽपि विवक्षितकार्य्यानुत्पत्तिकथनाद्विशेषोक्तिरलङ्कारः। "तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते" इति लक्षणात् ॥२०॥

तेषामिति।—तथा तेन प्रकारेण, निजास्येन प्रयोज्येन, नलाननस्य श्रियं लब्धुं लम्भयितुम्, [ इति णिजर्थो ग्राह्यः ] यद्वा—निजास्येन साधनेन, तां श्रियं लब्धुं प्राप्तुम्, अनीश्वराणाम-

प्रियावियोगक्कथितात् किमैलाच्चन्द्रात् गृहीतैर्ग्रहपीड़िताच्चै ।
ध्यातात्तवेन स्मरतोऽपि सारैः स्वं कल्पयन्ति स्म नलानुकल्पम्?॥२२॥

समर्थानां, वह्निर्मुखानामग्निवक्त्राणाम्, "अग्निमुखा वै देवाः" इति श्रुतेः ( "वह्निर्मुखाः क्रतुभुजः" "वह्निः शुष्मा कृष्णवर्त्मा" इति चामरः ) तेषामिन्द्रादीनां सम्बन्धि, अनलाननत्वं वह्निमुखत्वम्, अथच नलस्याननमिव आननं येषां ते नलाननाः, [ इत्युपमानपूर्वपदो बहुव्रीहिः ] ते न भवन्तीत्यनलाननास्तेषां भाव इत्यनलाननत्वं नलाननतुल्याननराहित्यं, पुनरुक्तिदोषम् "अग्निमुखा वै देवाः"इति श्रुत्या तेषां वह्निमुखत्वे पूर्वं सिद्धेऽपि पुनर्वह्निमुखत्वमम्पादनमिति पुनरुक्तिः, अथच पूर्वं नलरूपाप्राप्त्या नलाननतुल्याननराहित्ये सिद्धेऽपि पुनरवलोकनलोभूत्वा चन्द्रादिनाऽपि नलसदृशाननत्वाप्राप्त्या अनलाननत्वमिति पुनरुक्तिरित्येतादृशपुनरुक्तिदोषमित्यर्थः, तरीतुं परिहर्तुं, नालं न समर्थं, न तु नलाननत्वसम्भावनाऽपीत्यर्थः । द्वयोरप्यनलाननत्वयोर्भेदेऽपि श्लिष्टपदोपादानमहिम्नैकत्वाभिधानात् पौनरुक्त्यव्यपदेशः । अत्र नलाननश्रीलिप्सूनां तेषां न केवलं तदभावः, प्रत्युत दुस्तरतरपुनरुक्तिदोषरूपानर्थोत्पत्तिश्चेति द्वितीयविषमालङ्कारभेदः, "यत्रानर्थस्य वा भवेत्" इति लक्षणात् ॥ २१ ॥

प्रियेति ।—ते देवाः, प्रियावियोगेन उर्वशीविरहाग्निना, क्कथितात् निष्पक्वात्, ऐलादिलात्मजात् पुरूरवसः, कर्पूरादेरिवेति भावः ; तथा ग्रहपीड़ितात् राहुनिष्पीड़ितात्, चन्द्राच्च, यन्त्रनिष्पीडितात्तिलसर्षपादेरिवेति भावः ; भवेन हरेण, ध्यातात् स्मरतोऽपि कामाच्च, मुखमारुतसन्धुक्षिताग्निदग्धात् खदिरकाष्ठादेरिवेति भावः ; गृहीतैरुपात्तैः, सारैः साधनैः, स्वम् आत्मानं, नलस्यानुकल्पं प्रतिनिधिं, कल्पयन्ति स्म किम्?

नलस्य पश्यत्वियदन्तरं तैर्भैमीति भूपान् विधिराह्वतास्थे।
स्पर्द्धां दिगीशानपि कारयित्वा तस्यैव तेभ्यः प्रथिमानमाख्यत्॥२३॥
सभा नलश्रीयमकैर्यमाद्यैर्नलं विनाऽभूद्धृतदिव्यरत्नैः।
भामाऽङ्गणप्राघुणिके चतुर्भिर्देवद्रुमैर्द्यौरिव पारिजाते॥ २४॥

त्युत्प्रेक्षा, अन्यथा तदनुकल्पताऽपि कुत इति भावः। अन्येनापि कथननिष्पीड़नाग्निदाहादिना वस्तुसारः समाकृष्यते। एतेन प्रियावियोगादिजन्यकथनादिरहितेलचन्द्रादितोऽपि नलस्य सौन्दर्य्याधिक्यं व्यज्यते। ("मुख्यः स्यात् प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः" इत्यमरः)॥ २२॥

नलस्येति।—विधिर्ब्रह्मा, नलस्य तैर्भूपैः सह, इयत् एतत्परिमितम्, अन्तरं तारतम्यम्, इयं भैमी पश्यत्विति हेतोः, एतान् भूपानाह्वत आह्वतवान्, [ह्वयतेर्लुङि तङ्, "कृत्वादङ्गात्" इति तकारलोपः] किञ्च दिगीशानपि स्पर्द्धां कारयित्वा नलरूपधारणादिद्वारा दिगीशानपि नलेन सह मत्सरं कारयित्वेत्यर्थः, [ "हृक्रोरन्यतरस्याम्" इति विकल्पादणिकर्त्तुः कर्मत्वम् ] तस्य नलस्यैव, तेभ्य इन्द्रादिभ्योऽपि, ["पञ्चमी विभक्ते" इति पञ्चमी] प्रथिमानमाधिक्यम्, अस्यै भैम्यै,आख्यदाख्यातवान्, [ख्यातेर्लुङि "अस्यतिवक्तिख्यातिभ्योऽङ्" इति च्लेरङादेशः] त्रैलोक्यातिशायि लावण्यमस्येति भैमीं प्रत्याययितुमेव ब्रह्मा स्वयंवरव्याजेन त्रिलोकीमेकत्राचकर्षेत्युत्प्रेक्षा॥ २३॥

सभेति।—सभा सा राजसभा, नलश्रियो यमकैः पुनरुक्ताकारैः, तद्रूपधारिभिरित्यर्थः, धृतानि दिव्यानि रत्नानि यैस्तैः रत्नाभरणधारिभिरित्यर्थः, यमाद्यैश्चतुर्भिर्नलं विना तदा नलस्यानागमनात्तद्विनाभूतैरित्यर्थः, अत एव पारिजाते पारिजाताख्ये देवद्रुमे, भामायाः सत्यभामायाः, अङ्गणस्य चत्व-

तत्रागमद्वासुकिरीशभूषा-भस्मोपलेहस्फुटगौरदेहः।
फणीन्द्रवृन्दप्रणिगद्यमानः प्रसीदजीवाद्यनुजीविवादः॥२५॥
द्वीपान्तरेभ्यः पुटभेदनं तत् क्षणादवापे सुरभूमिपालैः।
तत्कालमालम्बि न केन यूना स्मरेषुपक्षानिलतूललीला॥२६॥

---

यस्य, प्राघुणिके अतिथौ सति, तया उपाहृते सतीत्यर्थः, ("आवेशिकः प्राघुणिक आगन्तुरतिथिः स्मृतः" इति हलायुधः) धृतदिव्यरत्नैर्मूलादग्रपर्य्यन्तं धृतमुक्तादिदिव्यरत्नैः, चतुर्भिर्देवद्रुमैर्मन्दारादिभिः, ("पञ्चैते देवतरवो मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्" इत्यमरः) द्यौः स्वर्ग इव, अभूत् अभादित्यर्थः, मन्दारादिषु सत्स्वपि पारिजातं विना यथा द्यौर्न शोभते, तथा नलरूपधारिषु यमादिषु सत्स्वपि नलं विना स्वयंवरसभा न शुशुभे। सभायामिन्द्रादयः समागता नलो नागत इति भावः॥ २४॥

तत्रेति।—ईशभूषा योगपट्टसम्पादनार्थं तत्र वासात् ईश्वराभरणभूतः, अत एव भस्मनः उपलेहेन उपलेपेन, तदङ्गरागभस्मसङ्क्रमणेन, स्फुटगौरदेहः शुभ्राङ्गः, वासुकिः फणीन्द्रवृन्दैः सर्पराजगणैः, प्रणिगद्यमानो व्याक्रियमाणः, ["नेर्गदनद—" इत्यादिना णत्वम्] प्रसीदजीवशब्दावादिर्यस्य सोऽनुजीविवादः सेवकजनकोलाहलः यस्य सः, आदिशब्दाज्जयादिशब्दसङ्ग्रहः; वासुकिः तत्र स्वयंवरे, आगमत् आगतः॥ २५॥

द्वीपान्तरेभ्य इति।—तत् पुटभेदनं कुण्डिनपुरं, द्वीपान्तरेभ्यः प्लक्षादिभ्यः, [अपादाने पञ्चमी] सुराश्च भूमिपालाश्च तैः, अथवा सुरभूमयः देवभूमयः द्वीपान्तरलक्षणाः, देवानां भोगदेशशालित्वेन द्वीपान्तराणाञ्च भोगभूमित्वेन सुरभूमित्वं

रम्येषु हर्म्येषु निवेशनेन सपर्य्यया कुण्डिननाकनाथः ।
प्रियोक्तिदानादरनम्रताद्यैरुपाचरच्चारु स राजचक्रम् ॥ २७ ॥
चतुःसमुद्रीपरिखे नृपाणामन्तःपुरे वासितकीर्त्तिदारे ।
औदार्य्यदाक्षिण्यदयादमानां चतुष्टयी रक्षणसौविदल्लाः ॥ २८ ॥

व्यपदेश इति भावः, ताः पालयन्ति ये तैः राजभिरित्यर्थः, क्षणादवापि अवाप्तम् । तथा हि, तस्मिन् काले तत्कालं स्वयंवरकालमित्यर्थः, [ अत्यन्तसंयोगे द्वितीया ] केन यूना स्मरेषूणां पक्षानिलेन तूलस्य कार्पासादेः, लीला इव लीला विलासः, नालम्भि ? न प्राप्तः ? [ "चिण् भावकर्मणोः" इति लभेः कर्म्मणि लुङि चिण्, "विभाषा चिण्णमुलोः" इत्युपसृष्टाद्वैभाषिको नुमागमः ]। अत्राखिलयूनां कामुकत्वेन कुण्डिनप्राप्तिरूपकारणेन द्वीपान्तरस्थभूपानां झटिति कुण्डिनप्राप्तिरूपकार्य्यसमर्थनरूपोऽर्थान्तरन्यासः, स च तूलेति निदर्शनासङ्कीर्णः ॥२६॥

रम्येष्विति ।—सः कुण्डिननाकनाथः कुण्डिनेन्द्रो भीमः, राजचक्रं राजमण्डलं, रम्येषु हर्म्येषु निवेशनेन स्थापनेन, सपर्य्यया अर्घ्यपाद्यादिपूजया, तथा प्रियोक्तिः प्रियवचनं दानं गन्धमाल्यताम्बूलादिसमर्पणम्, आदरः समादरः सम्मानो वा, नम्रता विनयाचरणम्, एवमाद्यैरुपचारैः, आद्यशब्दाद्भोजनादिसंविधानसङ्ग्रहः ; चारु सम्यक्, उपाचरत् सन्तोषितवान् ॥२७॥

युक्तश्चैतदित्याह, चतुरिति ।—चतुर्णां समुद्राणां समाहारः चतुःसमुद्री,सा परिखा वलयं यस्य तस्मिन्,वासिताः स्थापिताः, कीर्त्तय एव दाराः कलत्राणि यस्मिन्, नृपाणां राज्ञाम्, अन्तःपुरे पृथिवीरूपे इति भावः, औदार्य्यं त्यागः, दाक्षिण्यं परचित्तानुवर्त्तनं, दया कृपा, दमः इन्द्रियसंयमनं, तेषां चतुष्टयी एव रक्षणे रक्षणार्थं, सौविदल्लाः कञ्चुकिनः, ("सौविदल्लाः कञ्चुकिनः'

अभ्यागतैः कुण्डिनवासवस्य परोक्षवृत्तेष्वपि तेषु तेषु।
जिज्ञासितस्वेप्सितलाभलिङ्गं स्वल्पोऽपि नावापि नृपैर्विशेषः ॥२९॥
अङ्के विदर्भेन्द्रपुरस्य शङ्के न सम्भ्रमी नैष तथा समाजः।
यथा पयोराशिरगस्त्यहस्ते यथा जगद्वा जठरे मुरारेः ॥३०॥

---

इत्यमरः)। औदार्य्यादिगुणचतुष्टयेन नृपाणां कीर्त्तिः रक्ष्यते, तद्विहीनानां कुतः कीर्त्तिरिति भावः। स्वकीर्त्तिरक्षणार्थं तेन राज्ञा भीमेन ते राजानः सत्कृता इति तात्पर्य्यम्। रूपकालङ्कारः॥ २८॥

अभ्यागतैरिति।—अभ्यागतैर्नृपैः कुण्डिनवासवस्य कुण्डिनेन्द्रस्य भीमस्य सम्बन्धिषु, परोक्षवृत्तेषु गूढ़निष्पन्नेषु अपि, अविना प्रत्यक्षवृत्तानां परिग्रहः; तेषु तेषु प्रियातिथ्युपचारेषु, जिज्ञासितस्य ज्ञातुमिष्टस्य, प्रयत्नान्वेषणीयस्य इत्यर्थः, [सनन्तात् कर्मणि क्तः] स्वेप्सितलाभस्य भैमीलाभस्य, लिङ्गं चिह्नं, गमकभूतः इति भावः, स्वल्पोऽपि विशेष उपचारतारतम्यं, नावापि न लब्धः; यस्मिन् नृपे उपचारविशेषः परिलक्ष्येत तस्मै एव भैमीं दास्यतीति हेतोः मदनुपचारविशेषः कस्य क्रियते इति परिज्ञानेच्छायां नृपैः कुत्रापि तद्विशेषो नावगतः; भीमेन सर्वेषां राज्ञां तुल्य एव समादरः कृतः, तत एव सर्वेऽप्यमंसत यत् भैमीलाभो ममैव भविष्यतीति भावः॥ २९॥

सर्वेषां राज्ञां कुण्डिननगरे समावेशो जात इत्याह, अङ्के इति।—विदर्भेन्द्रपुरस्य कुण्डिनपुरस्य, अङ्के अभ्यन्तरे, एष समाजो राजसङ्घः, अगस्त्यहस्ते पयोराशिः समुद्रः यथा, मुरारेः नारायणस्य, जठरे उदरे, जगद्वा यथा, तथा न सम्भ्रमी न सम्मितः इति न, किन्तु सम्भ्रमावित्यर्थः; शङ्के इत्युत्प्रेक्षायां, मुनिकुक्षिहरिकुक्ष्यौपम्येन अल्पेऽपि पुरे समाजस्य महतः सम्मितः

पुरे पथिद्वारगृहाणि तत्र चित्रीकृतान्युत्सववाञ्छयैव ।
नभोऽपि किर्मीरमकारि तेषां महीभुजामाभरणप्रभाभिः ॥३१॥
विलासवैदग्ध्यविभूषणश्रीस्तेषां तथाऽभूत् परिचारकेऽपि ।
अज्ञासिषुः स्त्रीशिशुबालिशास्तं यथागतं नायकमेव कञ्चित् ॥३२॥
अस्वेदगात्राश्चलचामरौघैरमीलनेत्राः प्रतिवस्तुचित्रैः ।
अम्लानमाला विपुलातपत्रैर्देवा नृदेवाश्च भिदां न भेजुः ॥३३॥

त्वोत्प्रेक्षणादुपमोत्प्रेक्षयोः सङ्करः, तेनाधारापेक्षया आधेयस्याधिक्यलक्षणाधिकालङ्कारः नगरस्य महत्त्वमत्यद्भुतं वस्तु च व्यज्यते ॥ ३० ॥

पुरे इति ।—तत्र पुरे उत्सववाञ्छया विवाहोत्सवाभिलाषेण, पन्थानो द्वाराणि गृहाणि च तान्येव चित्रीकृतानि, तेषामभ्यागतानां, महीभुजामाभरणप्रभाभिः नभः अपि तद्देशवर्त्ति इति भावः, किर्मीरं चित्रम्, अकारि, अपिशब्दात् पथिद्वारगृहाणि च चित्रीकृतानीति किं वाच्यम् ? । ("चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे" इत्यमरः )। अत्र समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारः ॥ ३१ ॥

विलासेति ।—तेषां राज्ञां, परिचारके सेवकेऽपि, विलासानां कटाक्षविक्षेपादिशृङ्गारचेष्टानां, वैदग्ध्यस्य वक्रोक्त्यादिभाषणे चातुर्य्यस्य, विभूषणानाञ्च श्रीः सम्पत्तिः, तथा अभूत्, यथा स्त्रियः शिशवो बालिशाः अज्ञाश्च, ("शिशावज्ञे च बालिशः" इत्यमरः ) तं परिचारकम्, आगतं कञ्चिन्नायकं राजानमेव, अज्ञासिषुः अमंसत; विवेकिनस्तु तत्त्वत एव जानन्तीति भावः । राजभृत्याश्च राजकल्पा इति राज्ञामैश्वर्य्योक्तेरतिशयोक्तिः ॥३२॥

अथ श्लोकद्वयेन राज्ञां देवानाञ्च भेदो दुर्लक्ष्य इत्याह, अस्वेदेत्यादि ।—चलचामराणाम् ओघैः अस्वेदानि गात्राणि येषां

अन्योऽन्यभाषानवबोधभीतेः संस्कृत्रिमाभिर्व्यवहारवत्सु।
दिग्भ्यः समेतेषु नरेषु वाग्भिः सौवर्गवर्गो न जनैरचिह्नि ॥३४॥

---

ते तथोक्ताः, वस्तुनि वस्तुनि प्रतिवस्तु, [ वीप्सायामव्ययीभावः ] चित्रैरद्भुतैः, ( "विस्मयोऽद्भुतमाश्चर्यं चित्रम्" इत्यमरः ) मीला मीलकाः [ "गुरोश्च हलः" इति स्त्रियामप्रत्यये टाप् ] तदग्रहीतानि अमीलानि अनिमिषाणि, यद्वा—न मीलन्तीत्यमीलानि, [ पचाद्यच् ] तानि नेत्राणि येषां ते तथोक्ताः अनिमिषदृष्टय इत्यर्थः, तथा विपुलैः आतपत्रैर्निमित्तैः अम्लानमाला देवाः इन्द्रादयः, नृदेवाः राजानश्च, भिदा भेदं, [ षिद्भिदादिभ्योऽङ् ] न भेजुः ; [ देवपक्षे सर्वत्र उपलक्षणे तृतीया, राजपक्षे हेतौ तृतीया ] देवानां स्वेदाद्यभावस्य स्वाभाविकत्वात् चामरीघादीनामुपलक्षितत्वं, राजपक्षे तु स्वेदाभावस्यास्वाभाविकत्वेन चामरौघादीनां तत्तत्साधनत्वं बोध्यम्। अत्रास्वेदगात्रादिपदार्थानां विशेषणगत्या देवभेदाभावहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ३३ ॥

अन्योऽन्येति।—दिग्भ्यः समेतेषु समागतेषु, नरेषु मनुष्येषु, अन्योऽन्यासां भाषाणाम् अनवबोधेन निमित्तेन भीतिः सङ्कोचात्, संस्कारेण निर्वृत्ताः संस्कृत्रिमाः, [ "ड्वितः क्त्रिः" "क्त्रेर्मप् च नित्यम्" ] ताभिर्वाग्भिर्व्यवहारोऽभिवादनव्यापारः, तद्वत्सु देवभाषयैव भाषमाणेष्वित्यर्थः, स्वर्गे भवाः इति सौवर्गा देवाः, [ भवार्थे "तत्र भवः" इत्यण्, "द्वारादीनाञ्च" इत्यैजागमः आद्यस्वरस्य वृद्धिनिषेधश्च ] तेषां वर्गः समूहः सौवर्गवर्गो देवसमूहः, नरैः कुण्डिनवासिभिः, नाचिह्नि देवत्वेन नाज्ञायि, [ चिह्नशब्दात् "तत्करोति" इति ण्यन्ताल्लुङि णाविष्ठवद्भावे "विन्मतोर्लुक्" इति मतुपो लुक् ]। भेदे अभेदलक्षणाऽतिशयोक्तिः ॥३४॥

ते तत्र भैम्याश्चरितानि चित्रे चित्राणि पौरैः पुरि लेखितानि ।
निरीक्ष्य निन्युर्दिवसं निशाश्च तत्स्वप्नसम्भोगकलाविलासैः ॥३५॥
सा विभ्रमं स्वप्नगताऽपि तस्यां निशि स्वलाभस्य ददे यदेभ्यः ।
तदर्थिनां भूमिभुजां वदान्या सती सती पूरयति स्म कामम् ॥३६॥
वैदर्भदूतानुनयोपहूतैः शृङ्गारभङ्गीष्वनुभाववत्सु ।
स्वयंवरस्थानजनाश्रयस्तैर्दिने परत्रालमकारि वीरैः ॥३७॥

त इति ।—ते सर्वे देवा नृपाश्च, तत्र तस्यां, पुरि कुण्डिने, पौरैः चित्रे आलेख्ये, लेखितानि चित्राणि नानाविधानि आश्चर्य्याणि, ( "आलेख्याश्चर्य्ययोश्चित्रम्" इत्यमरः ) भैम्याश्चरितानि निरीक्ष्य दिवसं निन्युः ; तस्याः सम्बन्धिभिः स्वप्नयाः सम्भोगकलाः सुरतचेष्टाः, ता एव विलासाः विनोदास्तैः, निशाश्च निन्युः । एतेन जागरावस्थोक्ता ॥३५॥

सेति ।—सती सा भैमी, तस्या निशि स्वयंवरात् पूर्वरात्रौ, स्वप्नगताऽपि अपि सम्भावनाया, जागरेऽसम्भावितत्वादिति भावः, एभ्यो देवेभ्यो राजभ्यश्च, स्वलाभस्य स्वप्राप्तेः, विभ्रमं भ्रान्तिम्, अलीकसङ्गतिमित्यर्थः, ददे दत्तवतीति यत्, तत् तस्मादलीकदानाद्धेतोः, वदान्या दात्री, सती भवन्ती, स्वप्राप्तिदानाद्वदान्यत्वं प्राप्नोति मिथ्यात्वात् पतिव्रता च सतीत्यर्थः, अर्थिनां देवानां भूमिभुजाञ्च कामं मनोरथं, पूरयति स्म, एवं स्वकामुकानेकलोकोत्तरयुवसमुदायेऽपि सा नलैकजीवितेव सती स्थितेत्यर्थः । पतिव्रतायाः स्वकामुकानां सर्वेषां कामपूरकत्वं विरुद्धं, तस्याः स्वप्नदर्शनस्य अलीकत्वात् तेन तथाविधसर्वकामपूरणेऽपि दोषाभावात् परिहारः ॥ ३६ ॥

वैदर्भेति ।—परत्र दिने परेऽहनि, वैदर्भस्य भीमनृपतेः, दूतैरनुनयेन प्रार्थनेन, उपहूतैः शृङ्गारभङ्गीषु रतिभाव-

भूषाभिरुच्चैरपि संस्कृतं यं वीक्ष्याकृत प्राकृतबुद्धिमेव।
प्रसूनबाणे विबुधाधिनाथस्तेनाथ साऽशोभि सभा नलेन ॥३८॥
धृताङ्गरागे कलितद्युशोभां तस्मिन् सभां चुम्बति राजचन्द्रे ।
गता वताच्णोर्विषयं विलङ्घ्य क्व चत्तनचत्रकुलस्य लक्ष्मीः ? ॥३९॥

---

विजृम्भणेषु, येऽनुभावाः कटाक्षविक्षेपादयः तद्वत्सु, शृङ्गारभङ्गीषु अनुभाववद्भिरिति पाठे—शृङ्गारचेष्टाः प्रकाशयद्भिरित्यर्थः; तैर्दिगन्तागतैः वीरैः, स्वयंवरस्थानभूतो जनाश्रयो मण्डपः, ("मण्डपोऽस्त्री जनाश्रयः" इत्यमरः) अलमकारि अलङ्कृतं, स्वयंवरस्थानं प्राप्तमित्यर्थः ॥ ३७ ॥

भूषाभिरिति।—विबुधाधिनाथ इन्द्रः, यं नलं, वीक्ष्य भूषाभिर्भूषणैः, उच्चैरतिशयेन, संस्कृतेऽलङ्कृतेऽपि, प्रसूनबाणे मन्मथे, प्राकृतबुद्धिं पृथग्जनबुद्धिमेव, नीचबुद्धिमेवेत्यर्थः, ("प्राकृतस्तु पृथग्जनः" इत्यमरः) अकृत कृतवान्, न तु सुन्दरबुद्धिमित्यर्थः, [ कृञः कर्त्तरि लुङि तङ् "ह्रस्वादङ्गात्" इति सकारलोपः ] अथ राजागमनानन्तरं, तेन नलेन सा सभा अशोभि शोभा गमिता, अलङ्कृतेत्यर्थः, [ शोभयतेः कर्मणि लुङ् | विबुधाधिनाथः पण्डितश्रेष्ठः सन्नपि संस्कृते प्राकृतबुद्धिं संस्कृतभाषिते प्राकृतभाषितत्वबुद्धिमकृतेति विरोधाभासः सूच्यते ॥ ३८ ॥

धृतेति।—धृतोऽङ्गरागोऽनुलेपनमेवाङ्गरागः अङ्गस्य चन्द्रबिम्बस्य, रागो रक्तता येन तस्मिन्, राजचन्द्रे नले, कलितद्युशोभा कलिता प्राप्ता, द्युशोभा स्वर्गीयशोभा आकाशशोभा च यया तां, सभां चुम्बति प्राप्ते सति, क्षत्राणि क्षत्रिया एव, नक्षत्राणि तत्कुलस्य लक्ष्मीरक्ष्णोर्विषयं विलङ्घ्य दृष्टिपथमतीत्य, क्व कुत्र,गता ? वतेत्याश्चर्य्ये ; नक्षत्रकुलमिव नलोदये सर्वं क्षत्र-

प्राक् दृष्टयः चोणिभुजाममुष्मिन्नाश्चर्य्यपर्य्युत्सुकिता निपेतुः।
अनन्तरं दन्तुरितभ्रुवान्तु नितान्तमीर्ष्याकलुषा दृगन्ताः॥४०॥
सुधांशुरेष प्रथमो भुवीति स्मरो द्वितीयः किमसावितीमम्।
दस्रस्तृतीयोऽयमिति चितीशाः स्तुतिच्छलान्मत्सरिणो निनिन्दुः॥
४१॥

कुलं निष्प्रभं जातमित्यर्थः। द्युशोभेत्यत्र शोभेव शोभेति सादृश्याक्षेपात निदर्शना, तया सहाङ्गाङ्गिभावेन रूपकस्य सङ्करः॥३९॥

प्रागिति।—प्राक् पूर्वम्, अमुष्मिन्नले, चोणीभुजां राज्ञां, दृष्टयः पूर्णदृष्टयः, आश्चर्य्येण विस्मयपारवश्येन, पर्य्युत्सुकिताः उत्कण्ठिताः सत्यः, निपेतुः, अनन्तरं तु दन्तुरितभ्रुवां द्वेषाद्विषमितभ्रुवा, दृगन्ताः कोणदृष्टयः, नितान्तमीर्ष्यया कलुषाः सन्तो निपेतुः। अत्रौत्सुक्येर्ष्याप्रयुक्तानां पूर्णापूर्णदृष्टीनां द्वयोना क्रमेणैकस्मिन्नले निपतनोक्तेर्द्वितीयः पर्य्यायभेदः। एक-मनेकस्मिन् अनेकमेकस्मिन् वा क्रमेण पर्य्याय इति सूत्रणात् तथौत्सुक्येर्ष्यालक्षणविस्मयद्वेषसञ्चारिभावनिबन्धनात् भावा-लङ्कारः प्रियोऽपरपर्य्याय इति द्वयोः संसृष्टिः॥ ४० ॥

सुधांशुरिति।—मत्सरिणः परशुभद्वेषिणः, चितीशाः भुवीति किमिति च पदद्वयस्य सर्वत्रान्वयः कार्य्यः; भुवि भूतले, एषः प्रथमः नवावतीर्णः, सुधांशुः मुख्यचन्द्रः, किम्? इति, असौ भुवि द्वितीयः स्मरः किम्? इति, अयं तृतीयः दस्रः आश्विनेयः, भुवि किम्? इति च, [दस्रयोर्द्वित्वेऽप्येकत्वविवक्षया एकवचनं, द्वेरकत्वेऽपि द्वित्वविवक्षाया द्वौ चन्द्रावविरुद्धम्; पुष्यवत् दारादिशब्देर्वाऽनियतवचनत्वाभावात्] इतीत्थम्, इमं नलं, स्तुतिच्छलात् निनिन्दुः असमानसमीकरणेन स्तुति-

आद्यं विधोर्जन्म स एष भूमौ द्वैतं युवाऽसौ रतिवल्लभस्य।
नासत्ययोर्मूर्त्तिरियं तृतीया इति स्तुतस्तैः किल मत्सरैः सः ॥४२॥
इहेदृशाः सन्ति कतीति दुष्टैर्दृष्टान्तितालीकनलावली तैः।
आत्मापकर्षे किल मत्सराणां द्विषः परस्पर्द्धनया समाधिः ॥४३॥

लोकोत्तरस्य निन्देवेति भावः। चन्द्रत्वाद्युत्प्रेक्षात्रयस्य संसृष्टिः ॥ ४१ ॥

आद्यमिति।—स एष नलः, भूमौ भूतले, विधोरिन्दोः, आद्यं जन्म प्रथमावतार इत्यर्थः, युवाऽसौ रतिवल्लभस्य कामस्य, द्वैतं द्वित्वं,द्वितीयकाम इत्यर्थः,इयं नलरूपा, नासत्ययोरश्विनोः, तृतीया मूर्त्तिः, इति स नलः, मत्सरैर्मत्सरवद्भिः, ("मत्सरोऽन्यशुभद्वेषस्तद्वत् कृपणयोरपि" इत्यमरः) "अर्श आदिभ्योऽच्" इति मत्वर्थीयोऽकारः ] तैः स्तुतः किल? स्तुतः खलु? पूर्वश्लोकेन पुनरुक्तमपि कविना लिखितत्वात् स्थितं पूर्ववत् ॥४२॥

इहेति।—दुष्टैः खलैः, तैर्नृपैः, इह सभायाम्, ईदृशाः नलसदृशाः, कति कियन्तोऽपि, सन्तीति अलीकनलावली इन्द्रवरुणयमानलपङ्क्तिः, दृष्टान्तिता दृष्टान्तीकृता, तथा च अलीकनलावलीं निर्दिश्य अत्र सभायां बहवो नलेन तुल्यरूपा विद्यन्ते, तत् कथ नलमेव पुनः पुनः वर्णयथ? इति भावः। ननु नलसदृशानां बहूनां सत्त्वेऽपि स्वस्य कथं रूपोत्कर्षः? इत्यत आह—मत्सराणां मत्सरिणाम्, आत्मनोऽपकर्षे शत्रुसकाशात् न्यूनत्वे सति, द्विषः प्रतिपक्षस्य, परेण पुरुषान्तरेण, स्पर्द्धनया सङ्घर्षणया, काव्यन्तरसाधारण्यापादनेनेत्यर्थः, [ स्वार्थे ण्यन्तात् युच् ] समाधिः किल आत्मापकर्षपरिहारः खल्वित्यर्थः, एतादृशाः कति सन्तीति समानकोट्यन्तरोद्घाटनेन दूषयित्वा तुष्यन्तीति समुदायार्थः। अर्थान्तरन्यासः ॥ ४३ ॥

गुणेन केनापि जनेऽनवद्ये दोषान्तरोक्तिः खलु तत्खलत्वम्।
रूपेण तत्संसददूषितस्य सुरैर्नरत्वं यददूषि तस्य॥ ४४॥
नलानसत्यानवदत् स सत्यः कृतोपवेशान् सविधे सुरेशान्।
नोभाविलाभूः किमु दर्पकश्च भवन्ति नासत्ययुजो भवन्तः?॥४५॥

गुणेनेति।—केनापि गुणेन अनवद्ये अगर्ह्ये, सर्वगुणसम्पन्ने इत्यर्थः, [ अवद्यपण्येत्यादिना निपातनात् साधुः ] जने दोषान्तरोक्तिः कस्यचिदनवद्यधर्मस्य दोषत्वेनोद्घाटनमित्यर्थः, तत्खलत्वं तदेव तस्य वक्तुर्दुष्टत्वं खलु; कुतः? यत् यस्मात्, रूपेण सौन्दर्य्येण, तस्यां संसदि तया संसदा वा अदूषितस्य, प्रत्युत स्तुतस्यैवेति भावः, तस्य नलस्य सम्बन्धि, नरत्वं मनुष्यत्वं, सुरैरिन्द्रादिभिः, अदूषि अतिसौन्दर्य्यशाली अपि नरोऽयं न तु देव इति दोषत्वेनोद्घाटितमित्यर्थः। [ दूषयतेः कर्मणि लुङ् ]। सामान्योक्तस्य खलत्वस्य नरत्वदूषणेन समर्थनाद्विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ४४॥

नलानिति।—सत्यः स नलो यथार्थनलः, असत्यान् नलान् अलीकभूतान्, नलरूपधारिणः इत्यर्थः, सविधे समीपे, कृतोपवेशान् उपविष्टान्, सुरेशान् सुरेन्द्रादीन्, अवदत्; किमिति? — हे धन्याः! भवन्तः असत्यौ सत्यरहितौ न भवत इति नासत्यौ अश्विनौ दस्रौ [इति निपातनान्नञो नलोपाभावः] ताभ्यां युज्येते इति तद्युजौ तद्युक्तौ, [ "सत्सूद्विष—" इत्यादिना क्विप् ] उभाविलायामिलादव्या भवति इति इलाभूरैलः पुरूरवाः, [ क्विप् ] दर्पकः कामश्च, न भवन्ति किमु? इति प्रश्नः। [ "शेषे प्रथमः" इति प्रथमपुरुषः ] चत्वारो यूयमश्विनौ पुरूरवाः कामश्च किं न भवथ इत्यपृच्छदित्यर्थः, तेषु निजरूपदर्शनादन्येषामिव स्वस्यापि विस्मयावेशाच्च इत्थमप्राक्षीदिति भावः॥४५॥

अमी तमाहुः स्म यदत्र मध्ये कस्यापि नोत्पत्तिरभूदिलायाम् ।
अदर्पकाः स्मः सविधे स्थितास्ते नासत्यतां नापि बिभर्त्ति कश्चित्
॥ ४६ ॥

तेभ्यः परान्नः परिभावयस्व श्रिया विदूरीकृतकामदेवान् ।
अस्मिन् समाजे बहुषु भ्रमन्तो भैमी किलास्मासु घटिष्यतेऽसौ
॥ ४७ ॥

अमी इति ।—अथामी देवाः, तं नलम्, आहुः स्म ऊचुः, [ "लट् स्मे" इति भूते लट् ] उत्तरश्लोके "तेभ्यः परान्नः परिभावयस्व" इति वक्ष्यते, तत्र हेतुमाह, यदिति ।—यत् यस्मात् कारणात्, ते तव, सविधे समीपे, स्थिताः, ये वयमिति शेषः, अत्रैतेषु चतुर्षु अस्मासु, मध्ये कस्यापि इलायां बुधकलत्रे इलादेव्यां, भूमौ च, उत्पत्तिर्नाभूत्, अत्र न कोऽप्यैकः पुरूरवाः न कोऽपि च भौमः इत्यर्थः, किन्तु अदर्पका दर्पकात् कामाद्भिन्नाः, दर्पशून्याश्च, तव सौन्दर्य्यातिशयदर्शनेन गर्वशून्या इत्यर्थः, स्मः भवामः ; कश्चिन्नासत्यताम् आश्विनेयत्वं सत्यत्वञ्च, न बिभर्त्ति अस्मासु न कोऽपि नासत्यः, अथ च तव रूपधारणात् न कोऽपि सत्यः किन्तु सर्वे वयमसत्या इत्यर्थः । ( "नासत्या-वश्विनौ दस्रौ" इत्यमरः ) नासत्यतां सत्यतां न बिभर्त्तीति किन्त्वसत्यनला वयमित्यर्थान्तरम् ॥ ४६ ॥

तेभ्य इति ।—पूर्वश्लोकस्थयच्छब्दापेक्षया तदो व्यवहारः । तत्तस्मादिलाभवत्वाद्यभावात्, श्रिया सौन्दर्य्येण, विदूरीकृत-कामदेवान् अधरीकृतमन्मथान्, नोऽस्मान्, तेभ्यः ऐलादिभ्यः, परानन्यान्, परिभावयस्व निश्चिनुष्व; अन्यच्च—हे सौम्य ! श्रिया विदूरीकृतकामदेवान्नोऽस्मांस्तेभ्यः परानुत्कृष्टान्, विद्धि । अस्तु तावत्, अत्र किमर्थमागताः ? तत्राह—असौ भैमी अस्मिन्

असाम यन्नाम तवेह रूपं स्वेनाधिगत्य स्मितमुग्धभावाः ।
तन्नो धिगाशापतितान्नरेन्द्र ! धिक् चेदमस्माद्विबुधत्वमस्तु ॥४८॥
सा वागवाज्ञायितमां नलेन तेषामनाशङ्कितवाक्छलेन ।
स्वोरत्नलाभोचितयत्नमग्नमिनं न हि स्म प्रतिभाति किञ्चित् ॥४९॥

समाजे राजसङ्घे, बहुषु मध्ये भ्रमन्तौ पर्य्यटन्तौ, अस्मासु घटिष्यते संयोक्ष्यते, तथा बहुषु अस्मासु नलरूपेष्वपि भावः, अत एव भ्रमन्तौ नल इति भ्रान्तिमती सती, अस्मासु घटिष्यते सङ्गमिष्यति, किल इति सम्भावनायाम्, इत्याशयेनावास्माकमागमनमिति भावः । अत्रार्थद्वयस्यापि विवक्षितत्वात् केवलप्रकृतश्लेषः ॥ ४७ ॥

असामेति ।—हे नरेन्द्र ! यत् यस्मात्, तव नाम रूपञ्च स्वेन आत्मना, अधिगत्य ज्ञात्वाऽपि, स्मितमुग्धभावाः स्वीकृतमूढ़भावाः सन्तः, इह स्वयंवरे, असाम भवाम, तिष्ठामेति यावत्, [ अस्तेर्लोट् ] तत्तस्मात्, आशापतितान् भैमीलाभाशया आपतितानागतान्, नः अस्मान्, धिक्, इदञ्चास्माकं विबुधत्वं देवत्वं विपश्चित्त्वञ्च धिगस्तु ; अन्यच्च—यत्तव रूपमधिगत्य त्वद्वेशं धारयित्वा, स्मितमुग्धभावाः लब्धसौन्दर्य्याः सन्तः, ( "मुग्धः सुन्दरमूढ़योः" इति विश्वः ) असाम नाम दिव्यामहे खलु, [ अस गतिदीप्त्यादानेष्विति धातोर्लोट् ] तत्तस्मात्, नोऽस्माकम्, आशापतिता दिक्पतित्व, धिक्, ("आशा तृष्णादिशोरपि" इति विश्वः ) इदमस्माद्विबुधत्वञ्च धिक्, तुच्छव्यापारत्वादिति भावः । ("विबुधः पण्डिते देव" इति विश्वः )। पूर्ववदेवालङ्कारः ॥४८॥

सेति ।—अनाशङ्कितवाक्छलेन अनाकलितदेववाक्कपटेन, नलेन तेषां देवानां, सा वाक् पूर्वोक्ता व्याजोक्तिः, अवाज्ञायितमाम् अतिशयेनावज्ञाता, देववाक्यस्य पुरःस्फूर्त्तिक

यः स्पर्द्धया येन निजप्रतिष्ठां लिप्सुः स एवाह तदुन्नतत्वम् ।
कः स्पर्द्धितुः स्वाभिहितस्वहानेः स्थानेऽवहेलां बहुलां न कुर्य्यात् ?
॥ ५० ॥

गौर्द्दैवतागीतयशःप्रशस्तिः श्रिया तड़िल्लल्लिताभिनेता ।
मुदा तदाऽवैक्षत केशवस्तं स्वयंवराडम्बरमम्बरस्थः ॥ ५१ ॥

---

एवार्थो गृहीतो न तु तात्त्विक इत्यर्थः । [ जानातेरवपूर्वात् कर्मणि लुङि "तिङश्च" इत्यनेनातिशयार्थे तमप् प्रत्ययः, ततस्तस्य घसंज्ञा, ततः "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" इत्यनेनामुप्रत्ययः ] कुतः ? हि यस्मात्, स्त्रीरत्नलाभे यः उचित-यत्नो योग्यव्यापारो देवताऽनुध्यानादिः, तत्र मग्नम् आसक्तम्, एनं नलं प्रति, किञ्चित् किमप्यन्यत्, न प्रतिभाति स्म न स्फुरति स्म ; व्यासङ्गो हि महान् विवेकप्रतिबन्धक इति भावः ॥४९॥

देववाक्यावज्ञां प्रति हेत्वन्तरमाह, य इति ।—योऽपकृष्टः, येनोत्कृष्टेन सह, स्पर्द्धया सङ्घर्षेण, निजप्रतिष्ठामुत्कर्षं, लिप्सुः लब्धुमिच्छुः, [ लभेः सनन्तादुप्रत्ययः । सः स्पर्द्धमान एव, तस्योत्कृष्टपुरुषस्य, उन्नतत्वमुत्कृष्टत्वम्, आह ब्रवीति, तच्चेष्टयैव तस्यापकृष्टत्व स्फुटीभवतीत्यर्थः । तथा हि, कः प्रेक्षावान्, स्वेनैवाभिहिता स्वहानिः स्वापकर्षो येन तस्य, स्पर्द्धितुर्बहुलां भूयसीम्, अवहेलामवज्ञां, न कुर्य्यात् ? कुर्य्यादेवेत्यर्थः । ("रीढ़ा-वमाननावज्ञाऽवहेलनमसूर्क्षणम्" इत्यत्रावहेलयेति क्षीरस्वामी ) स्थाने युक्तं, ( "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः ) भैमीलाभार्थं नलरूपधारणरूपया इन्द्रादिदुश्चेष्टया नलस्य महानुत्कर्ष एव आसीत्, ततः नलेन तेषामवज्ञा युक्तैवेति भावः ॥५०॥

गौरिति ।—तदा तस्मिन् काले, केशवो विष्णुः, गौर्द्दैवतया ब्राग्देवतया, गीता यशःप्रशस्तिः कीर्त्तिप्रबन्धो यस्य सः,

अष्टौ तदाऽष्टासु हरित्सु दृष्टीः सदोदिदृक्षुर्निदिदेश देवः ।
लिङ्गीमदृष्टाऽपि शिरःश्रियं यो दृष्टौ मृषावादितकेतकीकः ॥५२॥
एकेन पर्य्यस्तिपदात्मनाऽद्रिं चक्षुर्मुरारेरभवत् परेण ।
तैर्द्वादशात्मा दशभिस्तु शेषैर्दिशो दशालोकत लोकपूर्णाः ॥५३॥

श्रिया लक्ष्मीदेव्या स्वशरीरस्थया, तड़िल्वतः सविद्युतो मेघस्य, ललितस्य विलासस्य, अभिनेता अनुकर्त्ता सन्, अम्बरस्थः स स्वयंवराडम्बरं स्वयंवरसभायोजनं, मुदा हर्षेण, अवैक्षत, किमुतान्य इति भावः। लक्ष्मीसरस्वतीसहितः नारायणः स्वयंवरं द्रष्टुमाजगाम इति निष्कर्षः ॥ ५१ ॥

अष्टाविति ।—तदा तस्मिन् काले, सदः स्वयंवरसभां, दिदृक्षुः द्रष्टुमिच्छुः, आगत इति शेषः, देवश्चतुर्मुखः, अष्टासु हरित्सु दिक्षु, अष्टौ दृष्टीः निदिदेश प्रेरयामास, अष्टदिगाहूतजनताऽवलोकनार्थमित्यर्थः। यो देवः, लिङ्गीं ज्योतिर्लिङ्गसम्बन्धिनीं, शिरःश्रियं लिङ्गस्योत्तरावधिमित्यर्थः, अदृष्टाऽपि दृष्टौ लिङ्गशिरोदर्शनविषये, मृषा वदतीति मृषावादिनी सा कृता मृषावादिता मृषावादीकृतेत्यर्थः, [ मृषावादिशब्दात्तत्करोतीति ण्यन्तात् कर्मणि क्तः, पुंवद्भाव-टिलोपाद्यर्थं णाविष्ठवद्भावोपसङ्ख्यानाट्टिलोपः ] केतकी येन स कूटसाक्षीकृतकेतकीकुसुम इत्यर्थः [ "नद्यृतश्च" इति कप्समासान्तः ]। पुरा किल ब्रह्मा ज्योतिर्लिङ्गस्य शिरोदेशमदृष्टाऽप्यद्राक्षमित्यसत्यमुक्त्वा तत्र शिवशिरःपतितं केतकीकुसुम "शिवशिरःस्थितं मा ब्रह्मा तत आनीतवान्" इति कूटसाक्षीचकारेति पौराणिकी कथाऽत्रानुसन्धेया। तथा च शिवशिरःपारमिव स्वयंवरागतजनतासागरमष्टाभिर्दृष्टिभिः पश्यन्नपि नापश्यदिति निष्कर्षः ॥५२॥

एकेनेति ।- द्वादश आत्मानो रूपाणि यस्य स द्वादशात्मा

प्रदक्षिणं दैवतहर्म्म्यमद्रिं सदैव कुर्व्वन्नपि शर्व्वरीशः ।
द्रष्टा महेन्द्रानुजदृष्टिमूर्त्या न प्राप तद्दर्शनविघ्नतापम् ॥५४॥
विलोकमाना वरलोकलक्ष्मीं तात्कालिकीमप्सरसो रसोत्काः ।
जनाम्बुधौ तत्र निजाननानि वितेनुरम्भोरुहकाननानि ॥५५॥
न यक्षलक्षैः किमलक्षि ? नो सा सिद्धैः किमध्यासि सभाऽऽत्तशोभा ?।

सूर्य्यः, एकेन आत्मना रूपेण, अद्रिं मेरुं, पर्य्यक्षिपत् प्रदक्षिणीकृतवान्, परेणात्मना, मुरारेर्विष्णोः, चक्षुर्दक्षिणनेत्रम्, अभवत्, शेषैरवशिष्टैः, दशभिस्तैरात्मभिस्तु, लोकपूर्णाः जनसम्पूर्णाः, दश दिशोऽलोकत आलोकितवान् ॥ ५३ ॥

प्रदक्षिणमिति ।—शर्व्वरीशश्चन्द्रः, दैवतानां हर्म्यं वासगृहम्, अद्रिं मेरुं, सदैव प्रदक्षिणं कुर्व्वन्नपि महेन्द्रानुजस्य उपेन्द्रस्य विष्णोः, दृष्टिमूर्त्या वामनेत्ररूपेण, द्रष्टा सन् तस्य स्वयंवरस्य, दर्शनविघ्नेन यस्तापस्तं न प्राप ; चन्द्रस्य स्वयमनागतत्वेऽपि तत्र विष्णोरागतत्वात्तद्वामनयनरूपेणाद्राक्षीदेवेति कुतस्तस्यादर्शनक्लेश इत्यर्थः ॥ ५४ ॥

विलोकमाना इति ।—रसेन रागेण, उत्का उन्मनसः, दर्शनरसोत्सुकाः सत्यः, ("उत्क उन्मनाः" इत्यमरः) [ उत्क इति निपातसिद्धम् ] तात्कालिकीं तत्कालभवां, वरलोकलक्ष्मीं परिणेतृजनशोभां, विलोकमानाः अप्सरसस्तत्र जनाम्बुधौ सभास्थजनरूपार्णवे, जलाशये एव कमलसम्भवात् जनेऽम्बुधित्वारोप इति भावः ; निजाननानि स्वमुखानि, अम्भोरुहकाननानि कमलवनानि, वितेनुः दधुः ; तदन्तर्गतानि तन्मुखानि पद्मानीव रेजुरित्यर्थः, तथा चाप्सरसोऽपि स्वयंवरसभा द्रष्टुमागता इति भावः ॥ ५५ ॥

नेति ।—तदा आत्तशोभा लब्धकान्तिः, सा सभा यक्षाणां

सा किन्नरैः किं न रसादसेवि ? नादर्शि हर्षेण महर्षिभिश्च ? ॥५६॥
वाल्मीकिरश्लाघत तामनेक-शाखत्रयीभूरुहराजिभाजा ।
क्लेशं विना कण्ठपथेन यस्य दैवी दिवः प्राग्भुवमागमद्वाक् ॥५७॥
प्राशंसि संसत् गुरुणाऽपि चार्वी चार्वाकतासर्वविदूषकेण ।
आख्यानपट्टं रसनां यदीयां जानामि वाचामधिदेवतायाः ॥५८॥

---

लक्षैः शतसहस्रैः, नालक्षि नादर्शि किम् ? सिद्धैर्वा नाध्यासि नाध्यासिता किम् ? किन्नरैः रसात् रागात्, सा सभा, नासेवि न सेविता किम् ? महर्षिभिः हर्षेण नादर्शि च न दृष्टा किम् ? तथा च सर्वैरदर्शीत्यर्थः । [ सर्वत्र कर्मणि लुङ् ] ॥ ५६ ॥

वाल्मीकिरिति ।—तां सभां, वाल्मीकिर्मुनिः, अश्लाघत अस्तुत, अनेकाः शाखाः कथकाः, आश्वलायनादिवेदविभागाः इति यावत्, वृक्षावयवविशेषाश्च यस्याः सा अनेकशाखा, त्रयाणां वेदानां समाहारः त्रयी, अनेकाशाखा चासौ त्रयी च अनेकशाखत्रयी,सा एव भूरुहराजिः तरुपङ्क्तिः, ता भजतीति तद्भाक् तेन, [भजो ण्वः ] ( "शाखा वेदप्रभेदेषु बाहौ पार्श्वद्रुमाङ्गयोः" इति वैजयन्ती ) पथिकविश्रामवृक्षवतेत्यर्थः, यस्य कण्ठ एव पन्थाः तेन कण्ठपथेन दैवी वाक् छन्दोमयी सरस्वती, "मा निषाद ! प्रतिष्ठां त्वम्" इत्यादिरूपेण,क्लेशं विना अनायासेन, दिवः स्वर्गात्, प्राक् भुवं भूलोकम्, आगमत् आगता एव, छन्दोबद्धा सरस्वती येन प्रथमं भूलोकमवतारिता तेनादिकविनापि स्तुतेत्यर्थः ॥५७॥

प्राशंसीति ।—चार्वी चारुः रम्या, [ "वोतो गुणवचनात्" इति ङीप्] संसत् सभा, चार्वाकतया चार्वाकसिद्धान्तितया, नास्तिकतया हेतुना इत्यर्थः, सर्वविदूषकेण वेदादिसर्वशास्त्रखण्डकेन, गुरुणा वृहस्पतिनाऽपि, प्राशंसि, किमुत अन्यैरिति भावः, नास्तिकप्रतारणार्थं चार्वाकशास्त्रं प्रणीय वृहस्पतिना वेदादिशास्त्रं

नाकेऽपि दीव्यत्तमदिव्यवाचि वचःस्रगाचार्य्यकवित् कविर्यः ।
दैतेयनीतेः पथि सार्थवाहः काव्यः स काव्येन सभामभाणीत् ॥५९॥
अमेलयद्भीमनृपः परं न नाकर्षदेतान् दमनस्वसैव ।
इदं विधाताऽपि विचिन्त्य यूनः स्वशिल्पसर्वस्वमदर्शयन्नः ॥ ६० ॥

---

दूषितमिति प्रसिद्धिः । यदीयां रसनां जिह्वां,वाचामधिदेवतायाः सरस्वत्याः, आस्थानपट्टम् आस्थानपीठं, सिंहासनमित्यर्थः, जानामि, ("आसनान्तरपीठयोः पट्टम्"इति विश्वः) । सर्वविदूषकेण वाचस्पतिनाऽपि स्तूयते इति सभाशोभायाः परमोत्कर्ष इति भावः ॥ ५८ ॥

नाकेऽपीति ।—यः काव्यः अतिशयेन दीव्यन्त्यः दीव्यत्तमाः देदीप्यमानाः, [ "तसिलादिष्वाकृत्वसुचः" इति पुंवद्भावः ] । दिव्यवाचः संस्कृतवाचः यस्मिन् तादृशे, नाके स्वर्गेऽपि, वचःस्रजां वाग्गुम्फनानाम्, आचार्य्यकम् आचार्य्यकत्वं, ["योपधाद्गुरूपोत्तमात् वुञ्" ] तद्वित् कवितामार्गोपदेष्टा, कविः स्वयं कवयिता च, दित्याः अपत्यानि पुमांसो दैतेयाः दैत्याः, [ दितिशब्दात् "कृदिकारात्" इति ङीषन्तात् "स्त्रीभ्यो ढक्" अन्यथा "दित्यदिति—" इत्यादिना ण्यप्रत्ययस्य पूर्वविप्रतिषेधेन ढगपवादिकत्वात्, लिङ्गविशिष्टपरिभाषा त्वनित्येति गतिः, भाष्यवार्त्तिकयोरनुक्तत्वादसाधुरिति केचित्, अभियुक्तप्रयोगादभियोक्तिकप्रसिद्धेश्च तन्नाद्रियन्ते ] तेषां नीतेः पथि दैत्यनीतिमार्गे, सार्थं वहतीति सार्थवाहः,अग्रणीः, पथप्रदर्शकः इत्यर्थः, [ कर्मण्यण् ] स काव्यः कवेरपत्यं शुक्रः, [ "कुर्वादिभ्यो ण्यः" ] सभां तां स्वयंवरसभां, काव्येन प्रबन्धेन, अभाणीत् अवर्णयत् । ( "काव्यं ग्रन्थे ग्रहे काव्ये" इति विश्वः ) ॥ ५९ ॥

अथ षड्भिस्तत्काव्यमेवाह, अमेलयदित्यादि ।—एतान्

एकाकिभावेन पुरा पुरारिर्य: पञ्चतां पञ्चशरं निनाय।
तद्भीसमाधानममुष्य काय-निकायलीला: किममी युवान: ?॥६१॥
पूर्णेन्दुबिम्बाननुमासभिन्नानस्थापयत् क्वापि निधाय वेधा:।
तैरेव शिल्पी निरमादमीषां मुखानि लावण्यमयानि मन्ये ॥६२॥

---

यून: युवजनान्, भीमनृप: परं केवलं, न अमेलयत् स्वयंवरार्थं न मेलितवान्, तथा दमनस्वसा दमयन्त्येव, नाकर्षत्, स्वगुणैरिति शेष: ; किन्तु विधाताऽपि विचित्य एकत्र सङ्गृह्य, इदं पुरोवर्त्ति युवरूपं, स्वशिल्पसर्वस्वं स्वनिर्माणकौशलसम्पदं, न: अस्माकम्, अदर्शयत्। राज्ञ: प्रयत्नात् भैमीसौन्दर्य्यसम्पदा ब्रह्मण: स्वनिर्माणकौशलप्रकाशनव्यसनाच्चेदं युवमिलनं, न त्वेकस्मादित्युत्प्रेक्षा ॥ ६० ॥

एकाकीति।—य: पुरारि: पुरा एकाकिभावेन असहायत्वेन हेतुना, पञ्चशरं कन्दर्पं, पञ्चानां भाव: पञ्चता, सा च भौतिकस्य शरीरस्य स्वस्वांशस्य स्वेषु स्वेषु प्रवेश:, मरणमिति यावत्, तां निनाय, अमी युवान: अमुष्य कामस्य सम्बन्धिन्या:, तस्मात् पुरारे:, भिय: समाधानं निवारणं, निवारका इत्यर्थ:, कार्य्यकारणयोरभेदोपचार: ; कायनिकायलीला: शरीरसमूहविलासा:, कामकायव्यूहा: इति यावत्, किम् ? पूर्वं महादेव: सहायहीनं कन्दर्पं संजहार इति कन्दर्पस्यासहायत्वात् ततो भयमासीत्, इदानीम् एतद्युवशरीरैरात्मनो बहुत्वात् ततो न भयमिति भाव:। इयमुत्प्रेक्षा। सर्वे कामकल्पा इति निष्कर्ष: ॥ ६१ ॥

पूर्णेति।—शिल्पी निर्माणकुशलो, वेधा: अनुमासं मासि मासि, भिन्नान् नानाभूतान्, पूर्णेन्दुबिम्बान् संसारस्यानादित्वादसङ्ख्यानिति भाव: ; क्वापि निधाय निक्षिप्य, आच्छाद्येति

मुधाऽर्पितं मूर्द्धसु रत्नमेतैर्यन्नाम तानि स्वयमेत एव ।
स्वतः प्रकाशि परमात्मबोधे बोधान्तरं न स्फुरणार्थमर्थ्यम् ॥६३॥
प्रवेक्ष्यतः सुन्दरवृन्दमुच्चैरिदं मुदा चेदितरेतरं तत् ।
न शक्ष्यतो लक्षयितुं विमिश्रं दस्रौ सहस्रैरपि वत्सराणाम् ॥६४॥

---

यावत्, अस्थापयत् स्थापितवान्, चिरमरक्षदित्यर्थः । अथ तैः पूर्णेन्दुबिम्बैरेव, अमीषां यूनां, लावण्यमयानि मुखानि निरमात् निर्मितवानिति मन्ये । उत्प्रेक्षा ॥ ६२ ॥

मुधेति ।—एतैः नृपैः, मूर्द्धसु रत्नं मुधा अर्पितं शिरोमणिर्वृथा धृतः इत्यर्थः ; कुतः ? यत् यस्मात्, एते स्वयमेव तानि रत्नानि, नाम खलु, तथोत्कृष्टा इत्यर्थः । ("रत्नं स्वजातौ श्रेष्ठेऽपि" इत्यमरः) किं रत्नधारणेनेति वाच्यप्रतीयमानयोरभेदाध्यवसायेन वैयर्थ्योक्तिः । तथा हि, स्वतः प्रकाशि स्वयंप्रकाशि, परमात्मबोधे परमात्मविषयके तत्स्वरूपे वा ज्ञाने विषये, स्फुरणार्थं तज्ज्ञानप्रकाशनार्थं, बोधान्तरम् अनुव्यवसायादिरूप ज्ञानान्तरं, न अर्थ्यं नापेक्ष्यम् । दृष्टान्तालङ्कारः ॥ ६३ ॥

प्रवेक्ष्यत इति ।—दस्रौ अश्विनौ, उच्चैः महत्, इदं सुन्दरवृन्दं रमणीयवर्गं, मुदा कौतुकेन, प्रवेक्ष्यतः अन्तःप्रविष्टौ भविष्यतः, चेत् तत्तर्हि, विमिश्रं मिलितम्, इतरेतरम् अन्योऽन्यं स्वभ्रातृरूपं, वत्सराणां सहस्रैरपि लक्षयितुं मदीयः अयमेव भ्राता इति विविक्ततया ग्रहीतुं, न शक्ष्यतः शक्तौ न भविष्यतः ; तत्र सभायां स्थिताः सर्वे राजानः अश्विनीकुमारतुल्या इति भावः । अत्र दस्रयोः सौन्दर्य्यगुणसामान्येन सुन्दरवृन्दैकतादात्म्यात् सामान्यालङ्कारः, "सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता" इति लक्षणात् ॥ ६४ ॥

स्थितैरियद्भिर्युवभिर्विदग्धैरदग्धेऽपि कामे जगतः क्षतिः का ? ।
एकाम्बुबिन्दुव्ययमम्बुराशेः पूर्णस्य कः शंसति शोषदोषम् ? ॥६५॥
इति स्तुवन् हुङ्कृतिवर्गणाभिर्गन्धर्ववर्गेण स गायतेव ।
ओङ्कारभूम्ना पठतेव वेदान् महर्षिवृन्देन तथाऽन्वमानि ॥६६॥
न्यवीविशत्तानथ राजसिंहान् सिंहासनीयेषु विदर्भराजः ।
शृङ्गेषु यत्र त्रिदशैरिवैभिरशोभि काञ्चनभूधरस्य ॥ ६७ ॥

स्थितैरिति ।—विदग्धैः प्रगल्भैः अदग्धैश्च, स्थितैः इयद्भिः एतावद्भिः, युवभिः, उपलक्षितस्येति शेषः, जगतः कामे दग्धेऽपि का क्षतिः ? न्यूनता न काऽपीत्यर्थः । तथा हि, पूर्णस्य अम्बुराशेः एकाम्बुबिन्दुव्ययं कः शोष एव दोषस्तं शंसति ? न कोऽपि दोषत्वेन शंसतीत्यर्थः ; यथा समुद्रस्य एकबिन्दुजलव्यये समुद्रः शुष्कः इति न कोऽपि कथयति, तथा कामसदृशानां बहूनाम् एतेषां विद्यमानतायाम् एकस्य कामस्य नाशे पृथिव्याः का क्षतिः ? इति भावः । दृष्टान्तालङ्कारः ॥ ६५ ॥

इतीति ।—इतीत्थं, स्तुवन् स काव्यः, गायतेव गन्धर्ववर्गेण हुङ्कृतीनां वर्गणाः पुनः पुनरुच्चारणानीत्यर्थः, ताभिः अन्वमानि अनुमोदितः, [ कर्मणि लुङ् ] तथा वेदान् पठतेव महर्षिवृन्देन ओङ्कारभूम्ना प्रणवभूयस्त्वेन, अन्वमानि अनुमोदितः । अत्र गानार्थैर्हुङ्कारैः वेदपाठार्थैः ओङ्कारैश्च काव्यवाक्यानुमोदनं कृतमिवेत्युत्प्रेक्ष्यते । ("ओमित्यनुमतं प्रोक्तं प्रणवं चाप्युपक्रमे" इति विश्वः ) ॥ ६६ ॥

न्यवीविशदिति ।—अथ विदर्भराजः भीमः, तान् राज्ञः सिंहानिव राजसिंहान् राजश्रेष्ठान्, सिंहासनीयेषु न्यवीविशत् उपवेशयामास, [ विशेर्णौ चङ् ] यत्र येषु सिंहासनेषु, एभिः

विचिन्त्य नानाभुवनागतांस्तानमर्त्यसङ्कीर्त्यचरित्रगोत्रान्।
कथ्याः कथङ्कारममी सुतायामिति व्यषादि क्षितिपेन तेन ॥६८॥
श्रद्धालुसङ्कल्पितकल्पनायां कल्पद्रुमस्याथ रथाङ्गपाणेः।
तदाऽऽकुलोऽसौ कुलदैवतस्य स्मृतिं ततान क्षणमेकतानः ॥६९॥
तच्चिन्तनानन्तरमेव देवः सरस्वतीं सस्मितमाह स स्म।
स्वयंवरे राजकगोत्रवृत्त-वक्त्रीमिह त्वां करवाणि वाणि! ॥७०॥

राजसिंहैः, कात्तस्वरभूधरस्य हेमाद्रेः सुमेरोः, शृङ्गेषु त्रिदशैः देवैरिव, अशोभि शोभितम्। [भावे लुङ्] ॥ ६७ ॥

विचिन्त्येति।—तेन क्षितिपेन भीमेन, नानाभुवनेभ्यः नानाप्रदेशेभ्यः, आगतान् तान् यूनः, मर्त्यैः सङ्कीर्त्यानि कीर्त्तयितुं शक्यानि, चरित्राणि गोत्राणि कुलानि नामानि च, येषां ते न भवन्तीति तथोक्ताः तान् तथाविधान्, विचिन्त्य अमी युवानः, सुतायां विषये, कथङ्कारं केन प्रकारेण, [ "अन्यथैवं कथम्" इत्यादिना णमुल्] कथ्याः कथनीयाः, इति हेतोः, व्यषादि विषसेन अभावि, [ भावे लुङ्। "प्राक्सितादड्व्यवायेऽपि" "सदिरप्रतेः"इति षत्वम् ] एतेषां चरित्रगोत्रादीनि नरलोकैर्वर्णयितुमशक्यत्वात् दमयन्ती कथं ज्ञास्यतीति विषसो बभूवेति भावः ॥ ६८ ॥

श्रद्धाल्विति।—अथ विषादानन्तरम्, आकुलः असौ भीमः, तदा श्रद्धालूनां भक्तानां, [ "स्पृहिगृहि—"इत्यादिना आलुच्प्रत्ययः ] सङ्कल्पितकल्पनायाम् ईप्सितार्थसम्पादने, कल्पद्रुमस्य इच्छापूरकस्य, कुलदैवतस्य वंशपरम्परोपासितस्य, रथाङ्गपाणेः नारायणस्य, स्मृतिं स्मरणं, क्षणं व्याप्य एकतानः अनन्यवृत्तिः सन्, ततान, ( "एकतानोऽनन्यवृत्तिः" इत्यमरः ) ॥६९॥

तदिति।—तस्य भीमस्य, चिन्तनानन्तरं स्मरणानन्तरमेव,

कुलञ्च शीलञ्च बलञ्च राज्ञां जानासि नानाभुवनागतानाम्।
एषामतस्त्वं भव वावदूका मूकायितुं कः समयस्तवायम्?॥७१॥
जगत्त्रयीपण्डितमण्डितैषा सभा न भूता न च भाविनी वा।
राज्ञां गुणज्ञापनकैतवेन सङ्ख्यावतः श्रावय वाङ्मुखानि॥ ७२॥

स देवो हरिः, सरस्वतीं सस्मितमाह स्म। ["लट् स्मे" इति भूते लट्] किमिति? हे वाणि! इह स्वयंवरे त्वां राज्ञा समूहो राजकं, ["गोत्रोच—"इत्यादिना वुञ् तस्य गोत्राणां नाम्नां कुलानां, वृत्तानां चरित्राणाञ्च, वक्त्रीम् आख्यात्रीं, करवाणि, [प्रैषार्थे लोट्] अहमिति शेषः॥ ७०॥

कुलमिति।—हे वाणि! नानाभुवनागतानां राज्ञां कुलञ्च शीलञ्च बलञ्च जानासि, अतः कारणात्, त्वम् एषां वावदूका वक्त्री, वंशवीर्य्यादि गुणतो वर्णयित्रीत्यर्थः, भव, ("वावदूकोऽतिवक्तरि"इत्यमरः) [वावदूक इत्यस्य यङ्लुगन्तात् वदेः "उलूकादयश्च" इत्यनेन औणादिक ऊकप्रत्ययः, कुर्वादिगणे वावदूकशब्दपाठात् ऊकप्रत्यय इति माधवः] तथा हि, तव मूकायितुं मूकवदाचरितुं, तूष्णीं स्थातुमित्यर्थः, [मूकशब्दादाचारार्थे क्यजन्तात् "कालसमयवेलासु तुमुन्"] अयं कः समयः? को वाऽवसरः? अपि तु न कोऽपि इत्यर्थः। वाग्मिनाम् अवसरे तूष्णीम्भावो न युक्तः इत्यर्थान्तरन्यासः॥ ७१॥

वागवसरत्वमेवाह, जगदिति।—हे वाणि! जगत्त्रय्यां ये पण्डिताः वाचस्पत्यादयः, तैः अशेषैः मण्डिता एषा सभा न भूता न च भाविनी वा, अतो राज्ञां गुणज्ञापनकैतवेन गुणप्रकाशनच्छलेन, सङ्ख्यावतः पण्डितान्, वाङ्मुखानि उपन्यासान्, ("सङ्ख्यावान् पण्डितः कविः" इति, "उपन्यासस्तु वाङ्मुखम्" इति चामरः) श्रावय; पण्डितमण्डलीविलसिते

इतीरिता तच्चरणात् परागं गीर्वाणचूडामणिमृष्टशेषम्।
तस्य प्रसादेन सहाज्ञयाऽसावादाय मूर्ध्नाऽऽदरिणी बभार ॥७३॥
मध्येसभं साऽवततार बाला गन्धर्वविद्यामयकण्ठनाला।
त्रयीमयीभूतवलीविभङ्गा साहित्यनिर्वर्त्तितदृक्तरङ्गा ॥७४॥
आसीदथर्वा त्रिवलित्रिवेदी-मूलात् विनिर्गत्य वितायमाना।
नानाभिचारोचितमेचकश्रीः श्रुतिर्यदीयोदररोमरेखा ॥ ७५ ॥

---

विदुषां वाग्विजृम्भणम् उचितं, तत्रापि तूष्णीम्भावे वाग्विफलत्वमयोग्यता च स्यादिति भावः ॥ ७२ ॥

इतीति।—इति इत्थम्, ईरिता विष्णुना आज्ञप्ता, असौ वाणी, तस्य हरेः नारायणस्य, चरणात् गीर्वाणानां देवाना, चूडामणिभिः शिरोरत्नैः, मृष्टस्य प्रोञ्छितस्य, शेषं अवशिष्टं, परागं रेणुं, तस्य आज्ञया आज्ञारूपेण, प्रसादेन अनुग्रहेण, सह आदाय मूर्ध्ना आदरिणी आदरवती सती, बभार ॥७३॥

मध्येसभमिति।—सा वाणी, मध्ये सभायाः मध्येसभं ["पारे मध्ये षष्ठ्या वा" इत्यव्ययीभावः] अवततार। कीदृशी ? बाला बालस्त्रीरूपधारिणी, गन्धर्वविद्या गानविद्या, तन्मयस्तद्विकारः, कण्ठनालः यस्याः सा, त्रयीमयीभूताः त्रिधाभूताः, अन्यत्र—वेदविकारीभूताः, वलीविभङ्गाः त्रिवलीसर्वस्वानि यस्याः सा, साहित्येन कवित्वेन, निर्वर्त्तिता निष्पादिताः, दृशः दृष्टयः, तरङ्गा इव यस्याः सा ॥ ७४ ॥

अथ चतुर्दशश्लोक्या वाग्देवीमेव वर्णयति, आसीदिति।—अथर्वा श्रुतिः अथर्ववेदः, तिस्रो वलयः त्रिवलिः [त्रिवलिप्रसिद्धिः संज्ञा चेदिति वामनः] तद्रूपा त्रिवेदी, सैव मूलं तस्मात् विनिर्गत्य वितायमाना वितन्यमाना, [तनोतेरनुनासिकस्य विकल्पादात्वम्] अथर्वणस्तु त्रय्युद्धार इति प्रसिद्धिः। नानाविधानाम्

शिक्षैव साक्षाच्चरितं यदीयं कल्पश्रियाऽऽकल्पविधिर्यदीयः ।
यस्याः समस्तार्थनिरुक्तिरूपैर्निरुक्तविद्या खलु पर्य्यणंसीत् ॥७६॥
जात्या च वृत्तेन च भिद्यमानं छन्दो भुजद्वन्द्वमभूत् यदीयम् ।
श्लोकार्द्धविश्रान्तिमयीभविष्णु पर्वद्वयीसन्धिसुचिह्नमध्यम् ॥७७॥

---

अभिचाराणां हिंसाकर्मणाम्, उचिता पापातिशयात् युक्ता, मेचकश्रीः कृष्णकान्तिर्यस्याः सा, अन्यत्र—अनाभिचारो न भवतीति नानाभिचारः नाभिसञ्चरणमित्यर्थः, तस्य उचिता सा च सा मेचका श्रीर्यस्याः सा तथोक्ता, यदीया यस्याः सरस्वत्याः सम्बन्धिनी, उदरे रोमरेखा रोमराजिः, आसीत् ॥७५॥

शिक्षेति ।—शिक्षा तदाख्यग्रन्थ एव, साक्षात् स्वयमेव, यदीयं चरितम् अभूत्, परोपदेशरूपत्वादिति भावः । यदीयः आकल्पविधिः प्रसाधनविधिः, कल्पश्रिया कर्मकाण्डभूतया कल्पसूत्रलक्ष्म्या, निर्वृत्त इति शेषः । निरुक्तविद्या खलु एव यस्याः समस्तार्थानां सर्ववेदार्थानां, निरुक्तिरूपैः निर्वचनभङ्गिभिः, पर्य्यणंसीत् तद्रूपेण आसीदित्यर्थः । [ णमेर्लुङ् "अस्तिसिचोऽपृक्ते—"इतीड़ागमः, "यमरमनमातां सक् च" इति सक् इड़ागमश्च "इट ईटि" इति सिचो लोपः, "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वम् ] ॥ ७६ ॥

जात्येति ।—जात्या मात्रावृत्तरूपेण आर्य्यादिना च, वृत्तेन वर्णवृत्तरूपेण अक्षरसङ्ख्यातेन उक्थादिना च, भिद्यमानं द्विधाभूतं, तथा श्लोकार्द्धे विश्रान्तिमयीभविष्णु विश्रान्तिरूपतामापन्नं, छन्दः छन्दोग्रन्थः, यदीयं पर्वणोः कूर्परपूर्वोत्तरभागयोः, द्वयी तस्याः सन्धिः तेन सुचिह्नं सुव्यक्तं, मध्य कूर्परस्थानं यस्य तादृशं, भुजद्वन्द्वम् अभूत्, द्विविधं छन्दो भुजयुगलत्वेन श्लोकार्द्धविश्रान्तिः कूर्परत्वेन पर्य्यणंसीदित्यर्थः ॥ ७७ ॥

भास्वद्वंशकरीरतां दधदयं वीरः कथं कथ्यताम् ?
अध्यष्टापि हि कोटिरस्य समरे रोमाणि सत्त्वाङ्कुराः।
नीतः संयति वन्दिभिः श्रुतिपथं यन्नामवर्णावली-
मन्त्रः स्तम्भयति प्रतिक्षितिभृतां दोःस्तम्भकुम्भीनसान् ॥१०॥

भास्वदिति।—भास्वद्वंशकरीरतां सूर्य्यकुलाङ्कुरत्वम् उज्ज्वल-वेणवङ्कुरत्वञ्च, दधत् अतितेजस्वी ("द्वौ वंशौ कुलमस्करी" "वंशाङ्कुरे करीरोऽस्त्री"इति चामरः), वीरः शूरः, अयमृतुपर्णः, कथं कथ्यताम? वर्ण्यताम्? कथयितुमशक्य इत्यर्थः; तथा हि, समरे युद्धकाले युद्धक्षेत्रे वा, अस्य राज्ञः अध्यष्टा सार्द्धत्रिसङ्ख्याविशिष्टा कोटिः, सार्द्धत्रयकोटिरित्यर्थः, अध्यष्टेति सार्द्धत्रयस्य संज्ञा, ["तिस्रः कोट्योऽर्द्धकोटी च यानि रोमाणि मानवे" इत्यादि स्मरणात्। "विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः" इति सङ्ख्येयेऽप्येकवचनम] रोमाणि शरीरस्थानि तनूरुहाणि, सत्त्व व्यवसायः, [उत्साहवीरस्य स्थायिभावः] तस्य अङ्कुरा इवाङ्कुरा वहिरुद्गताः वीररसाङ्कुरा इत्युत्प्रेक्षा ("द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु"इत्यमरः) वंशकरीरस्य समन्तात् लोमवदङ्कुरप्रादुर्भावो युक्त इत्यर्थः; अत एव संयति युद्धे, वन्दिभिर्वैतालिकैः, श्रुतिपथं कर्णपथं, नीतः श्रावित इत्यर्थः, यस्य ऋतुपर्णस्य, नामवर्णावली ऋतुपर्णेति नामाक्षरपङ्क्तिरेव, मन्त्रः प्रतिक्षितिभृतां शत्रुभूपानां दोःस्तम्भा एव कुम्भीनसाः क्रूरसर्पाः, क्रौर्य्यादैर्घ्याच्च इति भावः, तान्, ("कुम्भीनसः क्रूरसर्पे" इति मेदिनी) स्तम्भयति प्रतिबध्नाति; सर्पा हि मान्त्रिककृतगारुडमन्त्रोच्चारणेन यथा स्तम्भिताः भवन्ति तद्वदेतन्नामस्मात्राकर्णनात् भीतानां शत्रूणां बाहवो युद्धाय न प्रसरन्तीति भावः॥ १०॥

ताद्दग्दीर्घविरिञ्चिवासरविधौ जानामि यत्कर्त्तृतां
शङ्के यत्प्रतिबिम्बमम्बुधिपयःपूरोदरे बाडवः ।
व्योमव्यापिविपक्षराजकयशस्ताराः पराभावुकः
कासामस्य न स प्रतापतपनः पारं गिरां गाहते ? ॥११॥
द्वेष्याकीर्त्तिकलिन्दशैलसुतया नद्याऽस्य यद्दोर्द्वयो-
कीर्त्तिश्रेणिमयी समागममगात् गङ्गा रणप्राङ्गणे ।

ताद्दगिति।—ताद्दग्दीर्घस्य "चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते" इत्युक्तमहापरिमाणस्य, विरिञ्चेः ब्रह्मणः, वासरस्य दिवसस्य, विधौ विधाने, यस्य प्रतापतपनस्य, न तु प्रसिद्ध-तपनस्येति भावः, कर्त्तृतां जानामि, कल्पान्तावस्थायी यस्य प्रताप इति भावः ; अम्बुधिपयःपूरस्य समुद्रजलराशेः, उदरे अभ्यन्तरे, बाडवो बड़वानलः, यस्य प्रतापतपनस्य, प्रतिबिम्ब-मेव शङ्के उत्प्रेक्षे, व्योमव्यापिन्यो याः विपक्षस्य विरोधिनः, राजकस्य राजसमूहस्य, यशांस्येव तारा नक्षत्राणि, तद्यशसा-मल्पत्वात् नक्षत्ररूपत्वमिति भावः ; ताः पराभावुकः स्वतेजसा तिरोधायक इत्यर्थः, [ "लषपत—"इत्यादिना उकञ्-प्रत्यये "न लोका—"इत्यादिना षष्ठीप्रतिषेधात् तारा इति कर्मणि द्वितीया ] सः सर्वव्यापीत्यर्थः, अस्य राज्ञः प्रताप एव तपनः कासां गिरां पारं परभागं, न गाहते ? सर्वासामपि गाहते इत्यर्थः, न कासामपि गिरां गोचरः वर्णयितुमशक्यत्वादिति भावः। अत्रोत्प्रेक्षालङ्कारद्वयम् ॥ ११ ॥

द्वेष्येति।—यत् यस्मात्, अस्य राज्ञः, दोर्द्वयोकीर्त्तिश्रेणि-मयी भुजयुगजनितयशःपरम्परारूपा, गङ्गा भागीरथी, यशसां श्वेतत्वेन गङ्गारूपत्वमिति भावः, रणप्राङ्गणे युद्धक्षेत्रभूतप्रयागे इति यावत्, द्वेष्याणां द्विषाम्, अकीर्त्तिरयश इति यावत्

तत्तस्मिन् विनिमज्ज्य बाहुजभटैरारम्भि रम्भापरी-
रम्भानन्दनिकेतनन्दनवनक्रीडादराडम्बरः ॥ १२ ॥
इति श्रुतिस्वादिततद्गुणस्तुतिः सरस्वतीवाङ्मयविस्मयोत्थया।
शिरःस्तरःकम्पनयैव भीमजा न तं मनोरन्वयमन्वमन्यत ॥१३॥

---

शुभ्रत्वेन वर्णितायाः कीर्त्तेर्विरुद्धत्वात् कृष्णवर्णेति भावः, सैव कलिन्दशैलसुता कालिन्दी, यमुनेत्यर्थः, तया, अकीर्त्तिः कृष्णत्वेन यमुनारूपत्वमिति भावः, नद्या समागमम् अगात्, तत् तस्मात्, तस्मिन् रणप्राङ्गणरूपगङ्गायमुनासङ्गमे इत्यर्थः, विनिमज्ज्य विशेषेण निमग्नो भूत्वा, तत्र देहं परित्यज्येति यावत, बाहुजभटैः क्षत्रियवीरैः, एतत्प्रतिपक्षभूतैरिति भावः ( "बाहुजः क्षत्रियो विराट्" इत्यमरः ) रम्भायाः तदाख्यायाः प्रसिद्धायाः स्वर्वेश्यायाः, परीरम्भानन्दः आलिङ्गनसुखम्, [ "उपसर्गस्य घञ्यमनुष्ये बहुलम" इति दीर्घः ] तस्य निकेते स्थाने, नन्दनवने क्रीडादराडम्बरो विहारेच्छाविजृम्भणम, आरम्भि आरब्धः, एतद्विरोधिना मरणमवश्यम्भावि इति भावः। अत्र कीर्त्त्य-कीर्त्त्योर्गङ्गायमुनारोपाद्रूपकालङ्कारः। "सितासिते सरिते यत्र सङ्गते तत्राप्लुतासो दिवमुत्पतन्ति। ये वै तन्वा विसृजन्ति धीरास्ते जनास्ते अमृतत्वं भजन्ते॥" इति श्रुतिरत्र प्रमाणम् ॥ १२ ॥

इतीति।—भीमजा भैमी दमयन्ती, इतीत्थं, श्रुतिस्वादिता श्रोत्रग्रहीता, तस्य ऋतुपर्णस्य, गुणानां स्तुतिः यया तादृशी सती, सरस्वत्या देव्याः, वाङ्मये वाक्प्रपञ्चविषये, यो विस्मयः तदुत्थया शिरःस्तरःकम्पनयैव अवज्ञासूचकमस्तकचालनेनैव, मनोः अन्वयं मनुवंशोद्भवं, मनुसन्तानमित्यर्थः, तम् ऋतुपर्णं, न अन्वमन्यत अनुमोदनं न कृतवती, न्यषेधीत् इति यावत् ;

युवान्तरं सा वचसामधीश्वरा स्वरामृतन्यक्कृतमत्तकोकिला।
शशंस संसक्तकरैव तद्दिशा निशाकरच्छातिमुखीमिमां प्रति ॥१४॥
न पाण्ड्यभूमण्डनमेणलोचने! विलोचनेनापि नृपं पिपासमि?।
शशिप्रकाशाननमेनमीचितुं तरङ्गयापाङ्गदिशा दृशस्त्विषः ॥१५॥

---

विस्मयाभिनयशिरःकम्प एव प्रसङ्गान्निषेधार्थोऽपि संवृत्त इति भावः ॥ १३ ॥

युवेति।—स्वर एवामृतं तेन न्यक्कतस्तिरस्कृतः, मत्तः वसन्तकालहृष्टः, कोकिलो यया सा तादृशी, वचसामधीश्वरा वाग्देवता, सा सरस्वती, अन्यं युवानं युवान्तरं, [सुप्सुपेति समासः] तस्य यूनः, दिशा दिग्भागेन, संसक्तकरा व्यापृतहस्ता, हस्तेन तं निर्दिशन्ती एवेत्यर्थः, निशाकरच्छातिमुखीं चन्द्रसदृशमुखीमित्यर्थः, च्छातिसोदरबन्ध्वादिशब्दाः सादृश्यवाचका इत्याहुः, इमां भैमीं प्रति शशंस, दमयन्तीम् आमन्त्र्य आचख्यावित्यर्थः ॥ १४ ॥

नेति।—एणलोचने! हे मृगाक्षि! पाण्ड्यभूमण्डनं पाण्ड्यदेशस्य भूषणं, तद्देशस्य चूडामणिस्वरूपमिति यावत्, नृपं विलोचनेनापि न पिपासमि? पातुं न इच्छसि? साग्रहदृष्टिदानेनापि एनं सुखयितुं न इच्छसि किम्? इति भावः; शशिप्रकाशाननम् इन्दुसुन्दरास्यम्, एनम् अपाङ्गदिशा कटाक्षमार्गेणापि, नेत्रप्रान्तेनापि इत्यर्थः, ईचितुं दृशस्त्विषः चक्षुषोः ज्योतींषि, तरङ्गय प्रवर्त्तय, एनं साग्रहं द्रष्टुं नेच्छसि चेत् न पश्य, परन्तु कटाक्षविक्षेपेणापि सकृदेव एनं पश्येति भावः। अत्र एणलोचने इत्यस्य एणस्य लोचने इव लोचने यस्यास्तत्सम्बुद्धौ, अत एवात्र निदर्शनालङ्कारः। एवमुत्तरत्राप्येवंविधस्थले बोध्यः ॥ १५ ॥

भुवि भ्रमित्वाऽनवलम्बमम्बरे विहर्त्तुमभ्यासपरम्परापरा ।
अहो ! महावंशममुं समाश्रिता सकौतुकं नृत्यति कीर्त्तिनर्त्तकी ॥
१६ ॥

इतो भिया भूपतिभिर्वनं वनात्
अटद्भिरुच्चैरटवीत्वमीयुषी ।
निजाऽपि साऽवापि चिरात् पुनः पुरी
पुनः स्वमध्यासि विलासमन्दिरम् ॥ १७ ॥

भुवीति ।—कीर्त्तिरेव नर्त्तकी लासिकी, ["शिल्पिनि ष्वुन्" इत्यत्र "नृतिखनिरञ्जिभ्यः एव" इति नृत्यतेः ष्वुन्-प्रत्ययः । "षिद्गौरादिभ्यश्च" इति ङीप्] भुवि भूतले, भ्रमित्वा भूचारिणी भूत्वेत्यर्थः, अथ अम्बरे आकाशे, अनवलम्बं निरालम्बं यथा स्यात् तथा, विहर्त्तुं विचरितुम्, अभ्यासानां परम्परा श्रेणिः, सैव परं प्रधानं यस्याः सा तादृशी सती, अम्बरदेशे नर्त्तनाभ्यासासक्ता सतीत्यर्थः, महावंशं महाकुलीनं महावेणुञ्च, ("वंशो वेणौ कुले वर्गे" इति विश्वः) अमुं पाण्डुं, समाश्रिता सती सकौतुकं यथा तथा नृत्यति अहो ! आश्चर्य्यम् ; यथा काचित् नर्त्तकी प्रथमं भुवि भ्रमित्वा वियति निरालम्बं भ्रमणार्थं वेणुमाश्रित्य नृत्यति तद्वत् कीर्त्तिरपि नृत्यति इति निष्कर्षः । अत्र रूपकालङ्कारः ॥ १६ ॥

इत इति ।—इतोऽस्मात् राज्ञः, भिया भयेन, वनात् वनम् अटद्भिः भ्रमद्भिः, भूपतिभिः प्रतिभूपैः, उच्चैरटवीत्वं चिरं जनहीनतया अवस्थानात् महाटवीत्वम्, ईयुषी प्राप्ता, सा पूर्व्वावासभूता, निजा स्वकीया, पुरी नगरी अपि, चिरात् बहोः कालात् परं, पुनरवापि वनान्तरभ्रमेण पुनः प्राप्ता, स्वं स्वकीयं, विलासमन्दिरं क्रीड़ागृहञ्च, पुनरध्यासि वनान्तर

आसीदासीमभूमीवलयमलयजालेपनेपथ्यकीर्त्ति:
सप्ताकूपारपारीसदनजनघनोद्गीतचापप्रताप:।
वीरादस्मात् पर: क: पदयुगयुगपत्पातिभूपातिभूय-
श्चूडारत्नोडुपत्नीकरपरिचरणामन्दनन्दन्नखेन्दु: ॥ १८ ॥

क्रमेणैवाध्यासितम्. [ आसेरधिपूर्वात् कर्मणि लुङ् ] एतस्य राज्ञो भयात् पुरीं त्यक्त्वा पलायिता: प्रतिभूपा: बहो: कालादरण्यभूतं स्वनगरं स्वविलासमन्दिरं च पुन: समागता: तं वनान्तरं बुद्ध्वा स्वं गोपायन्तीति भाव:। विलेषु आसते इति विलासा विलेशया:, सर्पास्तेषां मन्दिरमिति विशेषणत्वेनापि योज्यम। अत्रैकस्य अरिवर्गस्य अनेकासु अटवीषु अटवीभूत-पुरीषु च क्रमात् वर्त्तमानत्वेन तथा पुरीष्वपि पुरीत्वाटवीत्वयो: क्रमसम्बन्धोक्त्या च "एकम् अनेकस्मिन् अनेकमेकस्मिन् वा क्रमेण पर्य्याय:" इत्युक्तलक्षण पर्य्यायभेदद्वयं द्रष्टव्यम् ॥ १७ ॥

आसीदिति।—वीरात् अस्मात् पाण्ड्यात्, परोऽन्य:, क: वीर:, सीमाया आ इत्यासीमं समुद्ररूपसीमामभिव्याप्य, सीमासहितमिति यावत्, [ अभिविधावव्ययीभाव ] यत् भूमि-वलयं तस्य मलयजालेपनेपथ्यं मलयजेन चन्दनेन, यत् आलेप: अङ्गराग:, तद्रूपं यत् नेपथ्यं भूषणं, तदिव कीर्त्तिर्यस्य स:, आसमुद्रकीर्त्तिं व्याप्य विस्तृतयश:सौरभ इत्यर्थ:, सप्तानाम् अकूपारपाराणां समुद्रपरतीराणां समाहार: सप्ताकूपारपारी [ "तद्धितार्थ—"इत्यादिना समाहारद्विगौ ङीप् ] सदनं येषां ते. तत्रस्थैर्जनै: घनं निरन्तरम्, उद्गीतश्चापप्रतापो धनुषा माहात्म्य, चापस्य प्रतापश्च वा यस्य स:, पदयुगे चरणयुगले, युगपत्पातिना समकालं नमस्कारकारिणा, भूपानाम् अति-भूयांसि अतिबहूलानि, चूडारत्नान्येव उडुपत्न्य: क्षुद्रत्वात्

भङ्गाकीर्त्तिमसीमलीमसतमप्रत्यर्थिसेनाभट-
श्रेणीतिन्दुककाननेषु विलसत्यस्य प्रतापानलः।
अस्मादुत्पतिताः स्फुरन्ति जगदुत्सङ्गे स्फुलिङ्गाः स्फुटं
भालोद्भूतभवाक्षिभानुहुतभुग्जम्भारिदम्भोलयः॥ १९॥
एतद्दन्तिबलैर्विलोक्य निखिलामालिङ्गिताङ्गीं भुवं
सङ्ग्रामाङ्गणसीम्नि जङ्गमगिरिस्तोमभ्रमाधायिभिः।

वर्त्तुलत्वाच्च नक्षत्ररूपाः स्त्रियः, तासां करा अंशवो हस्ताश्च, ("बलिहस्तांशवः कराः" इत्यमरः) तेषां परिचरणेन परामर्शेन, अमन्दम् अतिमात्रं, नन्दन्तः उल्लसन्तः, नखाः पदनखाः, एवेन्दवो यस्य स तादृशः, आसीत्; यशःसुरभिताऽऽसमुद्रक्षितिमण्डलः दिगन्तविश्रान्तप्रतापः समस्तराजवन्द्यश्चायमेव नान्यः कश्चिदित्यर्थः। अत्र रूपकालङ्कारः॥ १८॥

भङ्गेति।—अस्य पाण्डवस्य, प्रताप एवानलः भङ्गेन पराजयेन, या अकीर्त्तिः, श्यामत्वादिति भावः, सैव मसी तया मलीमसतमाः अत्यन्तमलिनाः, प्रत्यर्थिसेनाभटश्रेण्यः शत्रुसैनिकवीरसमूहाः एव, तिन्दुककाननानि श्यामत्वात् कालस्कन्धवनानि, ("तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके" इत्यमरः) तेषु विलसति प्रज्वलति। भालोद्भूतभवाक्षि भालाल्ललाटात्, उद्भूतं भवाक्षि हरतृतीयनेत्रं, तच्च भानुश्च सूर्यश्च, हुतभुगग्निश्च, जम्भारिदम्भोलिः कुलिशश्च ते, अस्मात् तिन्दुकवनदाहकतदीयप्रतापानलात्, उत्पतिता उत्थिताः, स्फुलिङ्गाः अग्निकणाः,जगदुत्सङ्गे जगतां पृथिव्यादीनाम्, उत्सङ्गे क्रोडे, अभ्यन्तरे इति यावत्, स्फुरन्ति प्रकाशन्ते, स्फुटम् असंशयमित्युत्प्रेक्षा रूपकसङ्कीर्णा। तिन्दुककाष्ठेभ्यो दह्यमानेभ्यो महान्तः स्फुलिङ्गा उत्तिष्ठन्तीति प्रसिद्धिः॥ १९॥

पृथ्वीन्द्रः पृथुरेतदुग्रसमरप्रेक्षोपनम्रामर-
श्रेणीमध्यचरः पुनः क्षितिधरक्षेपाय धत्ते धियम् ॥२०॥

शशंस दासीङ्गितवित् विदर्भजाम्
इतो ननु स्वामिनि ! पश्य कौतुकम्।
यदेष सौधाग्रनटे पटाञ्चले
चलेऽपि काकस्य पदार्पणाग्रहः ॥ २१ ॥

एतदिति।—एतस्य पाण्ड्यस्य, उग्रस्य भयङ्करस्य, समरस्य प्रेक्षायै प्रेक्षणाय, ["गुरोश्च हलः" इति स्त्रियाम् अ-प्रत्यये टाप्] उपनम्राणाम् उपगतानाम्, अमराणां याः श्रेण्यः समूहाः, तन्मध्ये चरतीति तथोक्तः, स्वयमपि तद्द्रष्टुमागत इत्यर्थः, पृथुर्वैण्यो नाम, पृथ्वीन्द्रः सङ्ग्रामाङ्गणसीम्नि रणाजिरभूमौ, जङ्गमाः सञ्चारिणः, गिरीणां स्तोमाः समूहाः, इति भ्रम-मादधतः इति तथोक्तैः, तथाविधभ्रान्तिजनकैरित्यर्थः, अत एव भ्रान्तिमदलङ्कारः, एतस्य पाण्ड्यस्य, दन्तिवल्लैर्गजघटाभिः, निखिलां भुवम् आलिङ्गिताङ्गीम् आक्रान्तस्वरूपां, विलोक्य पुनः क्षितिधराणां क्षेपाय धनुषा प्रोत्सारणाय, धियं धत्ते, नूनमिति शेषः; अतो गम्योत्प्रेक्षा पूर्वोक्तभ्रान्तिमदलङ्कारो-त्थितेति सङ्करः। तेनैतस्य नागजाः गिरिप्रमाणा असङ्ख्याश्च इति गम्यते। अत्र पराशरः,—"तत उत्सारयामास शैलान् शतसहस्रशः। धनुष्कोट्या तदा वैण्यस्तेन शैलाविवर्जिता ॥" इति ॥ २० ॥

शशंसेति।—इङ्गितवित् दमयन्त्यभिप्रायज्ञा, दासी किङ्करी, विदर्भजां दमयन्तीं, शशंस कथयाम; किमिति ? ननु हे, स्वामिनि ! इतः अस्यां दिशि, कौतुकम् आश्चर्यं, पश्य, किं तत् ? तदाह, सौधाग्रे सुधाधवलितगृहोर्द्ध्वदेशे वर्त्तमाने, नटे

ततस्तदप्रस्तुतभाषितोत्थितैः सदस्तदश्वैति हसैः सदःसदाम्।
स्फुटाऽजनि म्लानिरतोऽस्य भूपतेः सिते हि जायेत शितेः
सुलक्ष्यता ॥ २२ ॥

ततोऽनु देव्या जगदे महेन्द्रभूपुरन्दरे सा जगदेकवन्द्यया।
तदार्जवावर्जिततर्जनीकया जनी कयाचित् परचित्तवृत्तपया
॥ २३ ॥

---

चञ्चलत्वात् नर्त्तकतुल्ये, अत एव चले वायुवशात् चलत्यपि, पटाञ्चले ध्वजाञ्चले, काकस्य एष पदार्पणग्रहः पादन्यासाभिनिवेशः, इति यत् तत् कौतुकमिति पूर्व्वेणान्वयः। एतेन भैम्याः तस्मिन् पाण्ड्ये महान् अनादरः इति सख्या सूचितम् ॥ २१ ॥

तत इति।—ततोऽनन्तरं, तदप्रस्तुतभाषितेन उत्थितैः सदःसदां सभासदां, हसैर्हासैः, ["स्वनहसोर्वा" इति विकल्पात् अ-प्रत्ययः] तत् सदः सभा, सभा इत्यर्थः, अश्वैति सितीकृतं, शुभ्रीकृतम् इति यावत्; [श्वितधातोर्ण्यन्तात् कर्म्मणि लुङ्] अतः सदःश्वैत्यात् हेतोः, अस्य पाण्ड्यस्य, भूपतेः म्लानिः विवर्णता, स्फुटा व्यक्ता, अजनि जाता, [कर्त्तरि लुङ् "दीपजन—"इत्यादिना विकल्पाच्चिण्-प्रत्ययः] तथा हि सिते धवलिम्नि, शितेर्नीलिम्नः, ("अशितिः शितिकृष्णे च काले नीलञ्च मेचकम्" इति हलायुधः) सुलक्ष्यता सुग्रहत्वं, जायेत हि स्फुटं दृश्यते इत्यर्थः। अर्थान्तरन्यासोऽलङ्कारः ॥ २२ ॥

ततोऽन्विति।—ततोऽनु तदनन्तरं, महेन्द्रभूपुरन्दरे महेन्द्रपर्व्वताधीश्वरे विषये, तं लक्षीकृत्येत्यर्थः, तदार्जवेन तस्य महेन्द्राधिपस्य, आर्जवेन सरलतया, आवर्जिता नमिता, तर्जनी प्रदेशिनी यया तया तादृक्तर्जनीकया, तम् अङ्गुल्या निर्दिश्येत्यर्थः, ["नद्यृतश्च" इति कप्] कयाचित् अनिर्वाच्यया,

स्वयंवरोद्वाहमहे वृणीष्व हे ! महेन्द्रशैलस्य महेन्द्रमागतम् ।
कलिङ्गजानां स्वकुचद्वयश्रिया कलिं गजानां शृणु तत्र कुम्भयोः ॥ २४ ॥

अयं किलायात इतीरिपौरवाग्भयाद्ययादस्य रिपुर्वृथा वनम् ।
श्रुतास्तदुत्स्वापगिरस्तदक्षराः पठद्भिरत्रासि शुकैर्वनेऽपि सः ॥ २५ ॥

परचित्स्वरूपया परज्योतिरात्मिकया, जगदेकवन्द्यया देव्या सरस्वत्या, सा जनी वधूः, जगदे गदिता ॥ २० ॥

स्वयंवरोद्वाहमहे इति ।—हे! इति सम्बोधने, ("अथ सम्बोधनार्थकाः । स्युः पाट् प्याड्ङ्ग हे है भोः" इत्यमरः) हे भैमि ! स्वयंवरेण स्वयंवरकर्मणा, य उद्वाहमहो विवाहोत्सवः तस्मिन्, आगतं महेन्द्रशैलस्य महेन्द्रपर्वतस्य, महेन्द्रम अधीशं, वृणीष्व; तत्र महेन्द्रशैले, कलिङ्गजानां कलिङ्गदेशोद्भवानां, गजानां कुम्भयोः स्वस्य आत्मनः, कुचद्वयश्रिया सह कलिं कलहं, तव कुचद्वयम् अधिक पीनोन्नतं गजानां कुम्भद्वयं वा अधिकं पीनोन्नतमिति सोत्रामाथमेव इति भावः, शृणु; तद्देशस्य गजप्रायत्वात् कुचकुम्भयोः करिकुम्भयोश्च साम्यं व्यक्तीभविष्यतीति निष्कर्षः ॥ २४ ॥

अयमिति ।—अयं महेन्द्रनाथः, आयातः किल इतीरिणाम् इतिवादिनां, पौराणां वाग्भ्यो जनवादेभ्यः, भयात् अस्य रिपुर्वृथा वनम् अयात्; वृथात्वमेवाह—श्रुताः आकर्णिताः, शुकैरिति भावः, तान्येव अक्षराणि अयमायातः किलेत्येवंरूपाणि यासु ताः तदक्षराः, तस्य एतदीयरिपोः, उत्स्वापगिरो वासनायातान् उत्स्वप्नायितप्रलापान्, पठद्भिः उच्चारयद्भिः, शुकैर्वनेऽपि सः रिपुः, अत्रासि त्रासितः, [त्रसेर्ण्यन्तात् कर्मणि लुङ्] । अत्र सत्यपि त्रासनिवृत्तिकारणे

इतस्त्रसद्विद्रुतभूभृदुज्झिता प्रियाऽथ दृष्टा वनमानवीजनैः ।
शशंस पृष्टाऽद्भुतमात्मदेशजं शशित्विषः शीतलशीलतां किल ॥२६॥
इतोऽपि किं वीरयसे ? न कुर्वतो नृपान् धनुर्बाणगुणैर्वशंवदान् ।
गुणेन शुद्धेन विधाय निर्भरं तमेनमुर्वीवलयोर्वशी वशम् ॥२७॥

शुकवाक्यनिमित्तेन तदुत्पत्तेः उक्तनिमित्तरूपो विशेषोक्तिभेदः अलङ्कारः, "कारणसामग्र्यां कार्य्यानुत्पत्तिर्विशेषोक्तिः" इति सामान्यलक्षणात् ॥ २५ ॥

इत इति ।—इतः अस्मात् महेन्द्रनाथात्, त्रसता बिभ्यता, अत एव विद्रुतेन पलायितेन, भूभृता प्रतिपक्षभूभुजा, उज्झिता वने त्यक्ता, प्रिया तत्कान्ता, वनमानवीजनैः किरातीजनैः, दृष्टा ; अथ दर्शनानन्तरम्, आत्मदेशजम् अद्भुत त्वद्देशे किमद्भुतमस्तीति पृष्टा सती [ अप्रधाने दुहादीनामित्यप्रधाने कर्मणि क्तः ] शशित्विषः चन्द्रिकायाः, शीतलशीलतां शिशिरस्वभावतां, शशंस किल कथयामास खलु ; अभिनवप्राप्तविरहाया मुग्धायाः चन्द्रकिरणानां विरहे दुःसहत्वमजानन्त्याः स्वदेशे शीतलत्वमत्र वने च उष्णत्वमिति भ्रान्तिरिति भावः ॥ २६ ॥

इतोऽपीति ।—हे भैमि ! उर्वीवलयोर्वशी भूलोकाप्सरोविशेषा, त्वं शुद्धेन अनवद्येन, गुणेन सौन्दर्य्यगुणेन मौर्व्या च, एकेनैवेति भावः, तमेनं महेन्द्रनाथं, निर्भरं नितान्तं, वशं विधाय वशीकृत्य, धनुर्बाणगुणैः त्रिभिः साधनभूतैः, नृपान् वशंवदान् वश्यान्, [ "प्रियवशे वदः खच्" ] कुर्वतः कुर्वाणात्, इतोऽस्मादपि, महेन्द्रनाथादपीत्यर्थः, [पञ्चमी] किं न वीरयसे ? न पराक्रमसे ? ["वीर शूरविक्रान्तौ" इति चौरादिकाल्लट् ] व्यतिरेकालङ्कारः ॥ २७ ॥

एतद्भीतारिनारी गिरिबिलविगलद्वासरा निःसरन्ती
स्वक्रीड़ाहंसमोहग्रहिलशिशुभृशप्रार्थितोन्निद्रचन्द्रा ।
आक्रन्दत् भूरि यत्तन्नयनजलमिलच्चन्द्रहंसानुबिम्ब-
प्रत्यासत्तिप्रहृष्यत्तनयविहसितैराश्वसीच्छ्वसीच्च ॥ २८॥
अस्मिन् दिग्विजयोद्यते पतिरयं मे स्तादिति ध्यायति
कस्य मास्विकभावमञ्चति रिपुक्षोणीन्द्रदारा धरा ॥

---

एतदिति।—एतस्मात् भीतस्य अरेर्नारी गिरिबिलेषु पर्वत-गुहासु, विगलन् वासरो यस्याः सा, तत्रैव नीतदिवसेत्यर्थः, निःसरन्ती सायं बिलादहिः निष्क्रामन्ती, स्वक्रीडाहंसमोहेन मदीयः क्रीडाहंसोऽयमिति भ्रान्त्या, ग्रह आग्रहः तद्वान् ग्रहिलः [ पिच्छादित्वादिलच्-प्रत्ययः ] तेन साग्रहेण, शिशुना बालकेन, भृशम् अत्यर्थं, प्रार्थितो हृत्वा दीयतामिति याचितः, उन्निद्रः परिपूर्ण इत्यर्थः, चन्द्रो यस्याः सा सती, भूरि भूयिष्ठं यथा तथा, आक्रन्दत् क्रन्दितवती, यत् यस्मादाक्रन्दनात्, तस्या मातुः, नयनजले मिलन् सङ्क्रामन्, चन्द्र एव हंसः तस्य योऽनुबिम्बः प्रतिबिम्बः, तस्य प्रत्यासत्त्या समीपप्राप्त्या, प्रहृष्यतः तनयस्य विहसितैः मध्यमहासैः, किञ्चिदुच्चहास्यैरित्यर्थः, ( "मध्यमः स्यात् विहसितम्" इत्यमरः ) आश्वसीत् तस्याग्रहशान्त्या आश्वासं प्राप्तवती, किन्तु न्यश्वसीच्च शोकेन दीर्घनिश्वासं परित्यक्तवती च इति दुर्दशानुभवसूचकोक्तिः। [ "ह्म्यन्त-क्षणश्वस—" इत्यादिना वृद्धिप्रतिषेध. ] अत्र नारीशिशोः चन्द्रबिम्बे तत्प्रतिबिम्बे च हंसगतसादृश्यात् हंसभ्रान्ति-निबन्धनात् भ्रान्तिमदलङ्कारः ॥ २८ ॥

अस्मिन्निति।—अस्मिन् महेन्द्रनाथे, दिग्विजयोद्यते सति, रिपुक्षोणीन्द्राणां दाराः कलत्रभूताः, धरा अयं महेन्द्रनाथ

अस्यैवाभिमुखं निपत्य समरे यास्यद्भिरूर्द्धं निजः
पन्था भास्वति दृश्यते विलमयः प्रत्यर्थिभिः पार्थिवैः ॥ २६ ॥
विद्राणे रणचत्वरादरिगणे त्रस्ते समस्ते पुनः
कोपात् कोऽपि निवर्त्तते यदि भटः कीर्त्त्या जगत्युद्भटः ।
आगच्छन्नपि सम्मुखं विमुखतामेवाधिगच्छत्यसौ
द्रागेतच्छुरिकारयेण ठणिति च्छिन्नापसर्पच्छिराः ॥ ३० ॥

एव, मे मम, पतिः स्तात् अस्तु, [अस्तेर्लोटि "तुह्योस्तातङ्"इति तु स्थाने तातङादेशः "असोरल्लोपः" इति अकारलोपः] इति ध्यायति सङ्कल्पयति, कम्पं कम्पाख्यं सात्त्विकभावम्, ऋच्छति प्राप्नोति, औत्पातिक भूकम्पे सात्त्विकोत्प्रेक्षा व्यञ्जकाप्रयोगात् गम्या ; किञ्चास्यैव समरे अभिमुखं निपत्य आगत्य, ऊर्द्धम् ऊर्द्धलोकं, यास्यद्भिः प्रत्यर्थिभिः पार्थिवैः भास्वति सूर्य्यमण्डले, विलमयः छिद्ररूपः, निजः पन्था दृश्यते ; आसन्नमृत्योः आदित्य-मण्डलं सच्छिद्रमिव दृश्यते इत्यागमः। अत्र आत्मीयोद्र्ध्वगमन-मार्गत्वोत्प्रेक्षा पूर्ववत् गम्या। "द्वाविमौ पुरुषौ लोके सूर्य्य-मण्डलभेदिनौ। परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥" इति ॥ २६ ॥

विद्राणे इति।—समस्ते अरिगणे त्रस्ते रणचत्वरात् रणाङ्ग-णात्, विद्राणे विद्रुते सति, [ विद्रातेः कर्त्तरि क्तः। "संयोगादे-रातो धातोर्यण्वतः" इति निष्ठा-तकारस्य नत्वम् ] कीर्त्त्या जगति उद्भटः प्रसिद्धः, कोऽपि तेषामरिगणानां मध्ये कोऽपो-त्यर्थः, भटः कोपात् पुनर्निवर्त्तते यदि, तदा सम्मुखम् अभिमुखम्, आगच्छन् अपि असौ भटः, द्राक् सपदि, एतस्य छुरिकायाः शस्त्रविशेषस्य, रयेण ठणिति कश्चिदनुकरणशब्दः, तद्यथा तथा छिन्नम् अपसर्पत् अपगच्छत्, शिरो यस्य स तादृशः सन् विमुखतां

ततस्तदुर्वीन्द्रगुणाद्भुतादिव स्ववक्त्रपद्मेऽङ्गुलिनालदायिनी।
विधीयतामाननमुद्रणेति सा जगाद वैदग्ध्यमयेङ्गितेव ताम्॥२१॥
अनन्तरं तामवदन्नृपान्तरं तदध्वदृक्तारतरङ्गरिङ्गणा।
तृणीभवत्पुष्पशरं सरस्वती स्वतीव्रतेजःपरिभूतभूतलम्॥२२॥

पराङ्मुखत्वमेव, अधिगच्छति। अत्र सम्मुखागतस्य विमुखत्वमिति विरोधः, विगतमुखत्वमिति तदर्थतया विरोधपरिहाराद्विरोधाभासोऽलङ्कारः॥ २०॥

तत इति।—ततस्तद्दर्शनानन्तरं, तस्य उर्वीन्द्रस्य महेन्द्रनाथस्य, गुणेषु अद्भुतात् आश्चर्यावेशादिव, वस्तुतस्तु अनादरादिति भावः, स्ववक्त्रपद्मे अङ्गुलिमेव नालं पद्मदण्डं ददातीति तद्दायिनी, पद्मस्य नालाविनाभावादिति भावः; सा दमयन्ती, वैदग्ध्यमयं चातुर्य्यप्रचुरम्, इङ्गितं चेष्टितं यस्याः सेव सती, तां सरस्वतीम्, आननमुद्रणा मौनं, विधीयतामिति जगाद, वाक्यमन्तरेणैव मुखे अङ्गुलिदानरूपा निजमुखमुद्रैव तस्याः सरस्वतीं प्रति मौनोपदेशोऽभूदित्यर्थः; विदग्धा हि स्वेङ्गितेनैव परं बोधयन्तीति भावः। वचननिषेधार्थं आश्चर्य्यरसाभिनयार्थञ्च लोकैर्मुखेऽङ्गुलिर्दीयते। सरस्वत्यास्तद्वर्णननिषेधार्थं भैम्याः स्वमुखेऽङ्गुलिदानं तद्गुणाद्भुतादिवेति उत्प्रेक्षितं लोकैरिति भावः। अत्रोत्प्रेक्षालङ्कारः॥ २१॥

अनन्तरमिति।—अनन्तरं तद्वर्णननिषेधावगत्यनन्तरं, सरस्वती तस्य नृपान्तरस्य,अध्वनि दिशि, दृशोः तारतरङ्गरिङ्गणा नयनव्यापारप्रौढोर्मिरचना यस्याः सा सती, नृपान्तरं दृशा निर्दिशन्तीत्यर्थः, ता दमयन्तीं, तृणीभवन् पुष्पशरो यस्य तं तृणीकृतमन्मथं, स्वस्य तीव्रेण तेजसा परिभूतं भूतलं येन

तदेव किन्न क्रियते न ? का क्षतिः ? यदेष तद्दूतमुखेन काङ्क्षति।
प्रसीद काञ्चीमयमाच्छिनत्त ते प्रसह्य काञ्चीपुरभूपुरन्दरः ॥३३॥
मयि स्थितिर्नम्रतयैव लभ्यते दिगेव तु स्तब्धतया विलङ्घ्यते।
इतीव चापं दधदाशुगं क्षिपन्नयं नयं सम्यगुपादिशत् द्विषः ॥३४॥

तं, नृपान्तरम् अन्यं नृपं, लक्षीकृत्य इति शेषः, अवदत्। [ ब्रुविसमानार्थकत्वात् द्विकर्मकत्वम् ] ॥ ३२ ॥

तदिति।—हे भैमि ! एष काञ्चीपुरभूपुरन्दरः काञ्चीनगरालङ्कृतदेशाधीश्वरः, तस्य त्वां प्रति प्रेषितस्य, दूतस्य मुखेन यत् त्वद्वरणादिकं, काङ्क्षति, तत् काङ्क्षितमेव, किं नु कथं, न क्रियते ? त्वयेति शेषः, अपि तु कर्त्तव्यमेव तदित्यर्थः, का क्षतिः ? तत्करणे तव का हानिः ? प्रत्युत श्रेय एवेति भावः ; अथ तत्काङ्क्षितमेव विज्ञापयति, अयं काञ्चीपतिः, ते नवसङ्गमे लज्जितायाः तव इति भावः, काञ्चीं वसनबन्धदार्ढ्यार्थं बद्धां मेखलां, प्रसह्य बलात्, आच्छिनत्त आच्छिद्य गृह्णातु, काञ्चीपतेः बलपूर्वकं काञ्चीग्रहणस्य उचितत्वादिति भावः, अत एव प्रसीद प्रसन्ना भव, अनुमन्यस्वेत्यर्थः ॥ ३३ ॥

मयीति।—अयं काञ्चीपतिः, चापं दधत् आशुगं बाणं, क्षिपन् सन् द्विषः शत्रून्, मयि मत्समीपे, नम्रतयैव अवनत्या एव प्रणत्या च, स्थितिः अवस्थानं, स्वराज्ये प्रतिष्ठा इत्यर्थः, लभ्यते, स्तब्धतया अनम्रतया तु, दिगेव विलङ्घ्यते अतिक्रम्यते, स्वराज्यं त्यक्त्वा दिगन्तरं गम्यते इत्यर्थः, इति नयं नीतिं, सम्यक् उपादिशदिव, [ ब्रूव्यर्थत्वात् द्विकर्मकः ] उभयत्रापि युष्माभिरिति शेषः। धनुर्बाणदृष्टान्तेन द्विषां नम्रत्वे स्वराज्ये स्थितिः, अन्यथा स्वराज्यं त्यक्त्वा दिगन्तरगमनमिति वचनं विनैवोपादिशदिवेत्युत्प्रेक्षा ॥३४॥

अदःसमित्सम्मुखवीरयौवनत्रुटद्भुजाकम्बुमृणालहारिणी।
द्विषद्गणस्त्रैणदृगम्बुनिर्झरे यशोमरालावलिरस्य खेलति ॥३५॥
सिन्दूरद्युतिमुग्धमूर्द्धनि धृतस्कन्धावधिश्यामिके
व्योमान्तस्पृशि सिन्धुरेऽस्य समरारम्भोद्धुरे धावति।
जानीमोऽनु यदि प्रदोषतिमिरव्यामिश्रसन्ध्याधिये-
वास्तं यान्ति समस्तबाहुजभुजातेजःसहस्रांशवः ॥३६॥

अद इति।—अस्य काञ्चीपतेः, यशसामेव मरालानां हंसानाम्, आवलिः श्रेणी. अमुष्य भूपतेः, समित्सु युद्धेषु, सम्मुखानां वीराणां यानि यौवनानि युवतीसमूहाः, ("गार्भिणं यौवतं गणे" इत्यमरः। "भिक्षादिभ्योऽण्" इति युवतिशब्दस्य भिक्षादिपाठात् समूहार्थेऽण्-प्रत्ययः, "भस्याढे तद्धिते" इति पंवद्भावश्च] तेषां वैधव्यवशात् त्रुट्यन्ति भ्रश्यन्ति, भुजाभ्यः यानि कम्बूनि शङ्खवलयानि, ("शङ्खः स्यात् कम्बुरस्त्रियाम्" इत्यमरः) तान्येव मृणालानि तानि हरतीति तद्धारिणी सती द्विषद्गणस्य तदीयारिवर्गस्य, स्त्रैणे स्त्रीसम्बन्धिनि. दृगम्बुनिर्झरे नेत्रजलप्रवाहे, खेलति क्रीडति। ["स्त्रीणां पुंसाञ्च यत्किञ्चित् स्त्रैणं पौंस्नमिति क्रमात्" इति कोषः। "स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्" इति नञ्]। रूपकालङ्कारः ॥३५॥

सिन्दूरेति।—सिन्दूरं ("सिन्दूरं नागसम्भवम्" इत्यमरः) तस्य द्युतिभिः मुग्धमूर्द्धनि सुन्दरमस्तके, धृता स्कन्धोऽवधिः यस्याः सा श्यामिका येन तस्मिन्, स्कन्धपर्य्यन्तश्यामले तत उपरि सिन्दूरारुणे इत्यर्थः, व्योमान्तःस्पृशि उच्चतया अभ्रङ्कषे, अस्य काञ्चीपतेः, सिन्धुरे गजे, समरारम्भेषु उद्धुरे निर्भरे, अनर्गले इत्यर्थः, ["ऋक्पूरब्धूः—"इत्यादिना समासान्तः] धावति अभिमुखागते सति, अनु अनन्तरं, समस्तबाहुजानां

हित्वा दैत्यरिपोरुरः स्वभवनं शून्यत्वदोषस्फुटा-
सीदन्मर्कटकीटकत्रिमसितच्छत्रीभवत्कौस्तुभम्।
उज्झित्वा निजसद्म पद्ममपि तत् व्यक्तावनद्धीकृतं
लूतातन्तुभिरन्तरद्य भुजयोः श्रीरस्य विश्राम्यति ॥३७॥
सिन्धोर्जैत्रमयं पवित्रमसृजत्तत्कीर्त्तिपूर्त्ताद्भुतं
यत्र स्नान्ति जगन्ति सन्ति कवयः के वा न वाचंयमाः ? ।

---

समस्तचत्त्रियाणां, भुजातेजांसि भुजप्रतापा एव, सहस्रांशवः सूर्य्याः, प्रदोषतिमिरेण सह व्यामिश्रसन्ध्यायाः मिलितसन्ध्यायाः, धिया बुद्ध्या एव, भ्रान्त्या एव इत्यर्थः, अस्तं यान्ति इति जानीमः यदि, यदि शब्दः सम्भावनायां, श्यामारुणमिश्रे तिमिरमिश्रसन्ध्याभ्रान्त्यैव ते अस्तं यान्ति इति सम्भावयामः किम् ? इति उत्प्रेक्षालङ्कारः ॥ ३६ ॥

हित्वेति।—श्रीः लक्ष्मीः, स्वभवनं निजनिवासं, दैत्यरिपोः विष्णोः, उरः शून्यत्वरूपेण लक्ष्म्यास्त्यागजन्यरिक्ततादोषेण, स्फुटमासीदन्तः प्रत्यासीदन्तः, ये मर्कटकीटास्तन्तुवायकीटाः, ( "लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः" इत्यमरः ) तेषां सम्बन्धि यत् कृत्रिमसितच्छत्रं सितच्छत्राकारं लूतातन्तुवितानमण्डलं, तथाभवन् तद्रूपोभवन्, कौस्तुभः तदाख्यो मणिः यस्मिन् कर्मणि तद्यथा भवति तथा हित्वा, निजसद्म नित्यनिवासभवनं, तत् प्रसिद्धं, पद्ममपि लूतातन्तुभिः व्यक्तम् अवनद्धीकृतं बद्धं यथा तथा, उज्झित्वा अद्य सम्प्रति, अस्य भुजयोरन्तर्विश्राम्यति। अत्रैकस्याः श्रियः क्रमेणानेकाधारवृत्त्युक्त्या पर्य्यायालङ्कारभेदः, तेनैव तद्भुजयोः श्रीरक्षणे विष्णुरः-पद्माभ्यामप्यधिकं वस्तु व्यज्यते ॥ ३७ ॥

सिन्धोरिति।—अयं काञ्चीपतिः, सिन्धोरब्धेः, जैत्रं जेतृ,

यद्बिन्दुश्रियमिन्दुरञ्चति जलञ्चाविश्य दृश्येतरो
यस्यासौ जलदेवतास्फटिकभूर्जागर्त्ति यागेश्वरः ॥ ३८ ॥
अन्तःसन्तोषवाष्पैः स्थगयति न दृशस्ताभिराकर्णयिष्यन्
नाङ्गेनानस्तिलोमाऽऽरचयति पुलकश्रेणिमानन्दकन्दाम् ।
न क्षोणीभङ्गभीरुः कलयति च शिरःकम्पनं तन्न विद्मः
शृण्वन्नेतस्य कीर्त्तीः कथमुरगपतिः प्रीतिमाविष्करोति ? ॥३९॥

जयशीलमित्यर्थः, ततोऽप्यधिकमिति भावः, [जैत्रशब्दात् तृन्नन्तात् प्रज्ञादित्वात् स्वार्थेऽण्-प्रत्ययः] पवित्रं पावनं, तत्तथा प्रसिद्धं, कीर्त्तिरेव पूर्त्तं खातं, ["न ध्याख्यापॄमूर्च्छिमदाम्" इति निष्ठा-तस्य नत्वप्रतिषेधः] तदेवाद्भुतमसृजत्, यत्र पूर्त्ते, जगन्ति लोकाः, स्नान्ति, यत्र यस्मिन् विषये, के वा कवयः कवयितारः, वाचं यच्छन्तीति वाचंयमाः निरुद्धवाचः, न सन्ति ? सर्वेऽपि मौनिनो भवन्ति वर्णयितुमशक्यत्वादित्यर्थः; ["वाचि यमो व्रते" इति खच्-प्रत्ययः। "वाचयमपुरन्दरौ च" इति निपातनान्मुमागमः] इन्दुः यस्य पूर्त्तस्य, विन्दुश्रियमञ्चति प्राप्नोति, तदपेक्षया अल्पत्वात् इन्दुः यदीयो विन्दुरिवेति भावः, असौ इन्दुः, यस्य जलञ्चाविश्य दृश्येतरः सावर्ण्याददृश्यः, जलदेवता आप्यशरीरदेवताविशेषश्चासौ स्फटिकाद्भवतीति स्फटिकभूः स्फटिकोद्भवः, यागेश्वरः सन् जागर्त्ति ; स्फटिकलिङ्गे यागेश्वर इति प्रसिद्धिः ॥ ३८ ॥

अन्तरिति।—एतस्य राज्ञः,कीर्त्तीः शृण्वन् उरगपतिः शेषः, ताभिः दृग्भिः, आकर्णयिष्यन् श्रोष्यन्, अत एवान्तःसन्तोष-वाष्पैः दृशः न स्थगयति नाच्छादयति, अन्यथा चक्षुःश्रवसोऽस्य रूपग्रहणवच्छब्दग्रहणस्यापि तैः प्रतिबन्धसम्भवादिति भावः ; अतः, अः अङ्गेन वपुषा, ["येनाङ्गविकारः" इति तृतीया]

आचूडाग्रममज्जयज्जयपटुर्यच्छल्यकाण्डानयं
संरम्भे रिपुराजकुञ्जरघटाकुम्भस्थलेषु स्थिरान् ।
मा सेवाऽस्य पृथुः प्रसीदसि तया नास्मै कुतस्त्वत्कुच-
स्पर्द्धागर्द्धिषु तेषु तान् धृतवते दण्डान् प्रचण्डानपि ? ॥ ४० ॥
स्मितश्रिया सूक्तगिरा लीयमानया वितीर्णया तद्गुणशर्मणेव सा ।
उपाहसत् कौत्स्यमहत्त्वमेव तं गिरा हि पारं निषधेन्द्रवैभवम् ॥ ४१ ॥

अङ्गे नेति पाठे—यतः सः अङ्गे वपुषि ; अस्तिलोमा न भवतीति अनस्तिलोमा अविद्यमानलोमा . [ अस्तीत्यव्ययं विद्यमानपर्य्यायः, तस्य सम्बन्धि अस्तिलोमादिवचनात् बहु-व्रीहिः ] अत एव आनन्दकन्दाम आनन्द एव कन्दः मूलं यस्याः ताम् आनन्दजनिता, पुलकश्रेणि न आविर्भवति तथा क्षोणीभङ्गभीरुः पृथिवीपतनभीतः, शिरःकम्पनञ्च, [illegible] मिति भावः, न कलयति, तत्तस्मात्, कटे केन [illegible], प्रतिमाविष्करोति ? उपरिपातितमिति शेषः. इति न [illegible] [ वाक्यार्थः कम ] ॥ ३९ ॥

आचूडेति ।—जये पटुः समर्थः, अयं राजा, संरम्भे सङ्ग्रामे, रिपुराजकुञ्जरघटानां प्रतिपक्षभूपहस्तिसमूहानां, कुम्भस्थलेषु स्थिरान् दृढान्, शल्यकाण्डान् शरकाण्डान्, आचूडाग्रम् आपुङ्ख-मुखम्, अमज्जयत् निखातवान्, इति यत् सा अस्य [illegible], पृथुमहती, सेवा, तवेति शेषः ; तया सेवया, [illegible] सह स्पर्द्धागर्द्धिषु साहाय्यात् [illegible], तेषु कुञ्जरकुम्भेषु अप-राधिषु, प्रचण्डान् उग्रान्, तान् दण्डान् धृतवते अस्मै राज्ञे, कुतो न प्रसीदसि ? एनं वृणीष्व इति भावः ॥ ४० ॥

स्मितेति ।—सा सभा, तस्य काञ्चीपतेः, गुणश्रवणा इव गुणश्रवणजन्यसुखेनेव, वस्तुतस्तु अनादरादिति भावः,

निजाक्षिलक्ष्मीहसितैणशावकामसावभाणीदपरं परन्तपम्।
पुरेव तद्दिग्वलयश्रियो भुवा भ्रुवा विनिर्दिश्य सभासभाजितम्
॥ ४२ ॥

कृपा नृपाणामुपरि क्वचिन्न ते नतेन ह्रीहा शिरसा रसादृशाम्।
भवन्तु तावत्तव लोचनाञ्चला निपेयनेपालनृपालपालयः ॥ ४३ ॥

वितीर्णया विसृष्टया, सृक्कणि अधराञ्चले, लीयमानया सङ्कुचन्त्या, स्मितश्रिया मन्दहासप्रभया, कोत्थं वर्णयितुं शक्यं, महत्त्वं यस्य तमिव वाच्यमानमहत्त्वमिव, तं काञ्चीपतिम्, उपाहसत् उपहसितवती ; हि यतः, निषधेन्द्रस्य नलमाहात्म्य, गिरां पारे वागविषयो न भवतीत्यर्थः ; नलमाहात्म्यं वर्णनातीतम् अस्य तु वर्णनासाध्यम्, अतो नलापेक्षया न्यूनत्वात् तमुपहसितवतीति भावः। अत्र नलानुरागाख्येन कारणेन एतदपरागरूपकार्य्यसमर्थनात् तद्रूपार्थान्तरन्यासः ॥ ४१ ॥

निजेति।—असौ सरस्वती, सभासु सभाजितं पूजितं, परन्तपं रिपुतापकं, [ "द्विषत्परयोस्तापे." इति खच्-प्रत्ययः, "खचि ह्रस्व." इति ह्रस्वः, "अरुर्द्विषदजन्तस्य—" इति मुम् ] अपरमन्यं नृपं, पुरेव पूर्ववत्, तस्य राज्ञः, दिशो वलये या श्रीः तस्या भुवा स्थानेन, तद्दिग्वलितयेत्यर्थः, भ्रुवा दृशः ऊर्द्ध्वावयवेन, ( "ऊर्द्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ" इत्यमरः ) विनिर्दिश्य निजाक्षिलक्ष्म्या स्वनेत्रशोभया, हसितैणशावकाम् उपहसितमृगशावकां, विशालतया अधःकृतमृगाक्षीमित्यर्थः, भैमीमिति शेषः, अभाणीत् बभाण ॥ ४२ ॥

कृपेति।—हे भैमि ! नतेन अवनतेन, शिरसा रसां भुवं पश्यन्तीति तेषां रसादृशाम् अधःपश्यतां, त्वत्कृतप्रत्याख्यानात् लज्जया अधोमुखानामित्यर्थः, नृपाणामुपरि ते तव, क्वचित्

ऋजुत्वमौनश्रुतिपारगामिता यदीयके सन्ति परं विहिंसितुम्
अतीव विश्वासमविधायि चेष्टितं बहुर्महानस्य स दाम्भिकः शरः
॥ ४४ ॥

रिपूनवाप्यापि गतोऽवक्रौर्गिंतामयं न यावज्जनरञ्जनव्रतो।
भृशं विरक्तानपि रक्तवत्तरान् निकृत्य यत्तानसृजाऽसृजद्युधि
॥ ४५ ॥

---

कुत्रापि, कृपा न, हाहेति खेदे ; तव लोचनाञ्चलाः कटाक्षाः, निपेया ग्राह्या, नेपालनृपालस्य नेपालभूपतेः, पालिः कोटिः, तद्विभाग इत्यर्थः, येषां तादृशाः, तावत् साकल्येन, सर्वथा इत्यर्थः, भवन्तु, कटाक्षदृष्ट्या तं पश्येत्यर्थः ( "स्त्रियां पाल्यश्रि कोटयः" इत्यमरः ) ॥ ४३ ॥

ऋजुत्वेति।—यदीयके शरे, ऋजुत्वम् अवक्रता परच्छन्दानुकूलता च, मौनं निःशब्दता वाचयमत्वञ्च, श्रुतिपारगामिता कर्णान्तगामित्वं वेदपारगत्वञ्च, ताः सन्ति, तथा परं शत्रुम् अन्यञ्च, विहिंसितुं हन्तुम् अनपकर्त्तुं च, अतीव अत्यन्तं, विश्वासं विगतश्वासं, विगतासून् इत्यर्थः, अथ च विश्वासं प्रत्ययं, विधत्ते इति विश्वासविधायि, चेष्टितं चरित्रम्, अस्ति ; अस्य राज्ञः, बहुरनेकशः, [ जातावेकवचनम् ] महानधिकः अतिदीर्घश्च, दम्भः कपटं प्रयोजनमस्येति दाम्भिको लोकवञ्चकः, स तादृग्गुणविशिष्टः, शरः, अस्तीति शेषः, ( "कपटोऽस्त्री व्याजदम्भो—" इत्यमरः ) दाम्भिकेन यद्यत् क्रियते एतस्य शरेण तत्तत् क्रियते इत्यर्थः।* अत्र शरे दाम्भिकत्वोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ ४४ ॥

रिपूनिति।—यावज्जनानां सकलजनानां, रञ्जनमेव व्रतमस्यास्तीति तद्व्रतो [ सर्वधन्वीतिवदिन्नन्तो बहुव्रीहिः ]

पतत्येतत्तेजोहुतभुजि कदाचित् यदि तदा
पतङ्गः स्यादङ्गीकृततमपतङ्गापदुदयः ।
यशोऽमुष्येवोपार्जयितुमसमर्थेन विधिना
कथञ्चित् चीराम्भोनिधिरपि कृतस्तत्प्रतिनिधिः ॥ ४६ ॥
यावत् पौलस्त्यवास्तुभवद्भयहरिल्लोमरेखोत्तरीये
सेतुप्रालेयशैलौ चरति नरपतेस्तावदेतस्य कीर्त्तिः ।

अयं नेपालभूपः, रिपून् अवाप्य प्राप्य अपि, अवकीर्णितां चतव्रतत्वं, न गतः ; कुतः ? यत यस्मात्, भृशं विरक्तान् प्रतिपचनृपे विद्वेषसम्पन्नान्, अथवा युद्धकाले स्वशरीरादि-रचणविषयेऽननुरक्तानपि, अथ च एनं दृष्ट्वा भयात् विगत-रुधिरानपि, रिपून् शत्रून्, युधि समरे, निकृत्य छित्त्वा, [ कृन्ततेः क्त्वो ल्यप् ] असृजा रक्तवत्तरान् अतिशयेन रक्तवर्णान् अनुरक्तांश्च, [ रञ्जेः क्तवत्वन्तात्तरप् ] असृजत् अकरोत् ; रिपूनपि रक्तेन रञ्जयतः कुतोऽपि न रञ्जनव्रतभङ्ग इति भावः ॥ ४५ ॥

पततीति ।—पतङ्गः सूर्य्यः, एतस्य राज्ञः, तेजोहुतभुजि प्रतापाग्नौ, कदाचित् पतति यदि तदा अङ्गीकृततमो भृशं स्वीकृतः, पतङ्गस्य शलभस्य, आपदुदयः देहदाहात्मक-विपत्प्राप्तिः येन तथाभूतः स्यात् शलभताम् इयादित्यर्थः, ( "पतङ्गः शलभे साधौ मार्जारेऽर्के खगेश्वरे" इति वैजयन्ती ) किञ्च अमुष्य राज्ञः, यश उपार्जयितुम् असमर्थेनैव विधिना ब्रह्मणा, कथञ्चिदपि, न तु सम्यगिति भावः, तस्य यशसः, प्रतिनिधिः प्रतिरूपकः, चीराम्भोनिधिः चीरसमुद्रः, कृतः, चीरसमुद्रस्तदनुकल्पत्वेन सम्पादितः इत्यर्थः ; मुख्यापेचया प्रतिनिधिवस्तुनो न्यूनत्वेन न तु तादृग्यशो लब्धमिति भावः । सूर्य्यादधिकप्रतापः विधेरपि अधिकयशाश्चेति निष्कर्षः ॥४६॥

यावत् प्राक्प्रत्यगाशापरिवृढनगरारम्भणस्तम्भमुद्रा-
वन्तौ सन्ध्यापताकारुचिरचितशिखाशोणशोभावुभौ च ॥ ४७ ॥
युद्धा चाभिमुखं रणस्य चरणस्येवादसीयस्य वा
बुद्धाऽन्तः स्वपरान्तरं निपततामुन्मुच्य बाणावलीः ।

यावदिति ।—पौलस्त्ययोर्विभीषणवैश्रवणयोः, वास्तुभवन्त्यौ वेश्मभूमिभूते, गृहभूते इत्यर्थः, ( "वेश्मभूर्वास्तुरस्त्रियाम्" इत्यमरः ) उभे च ते हरितौ उभयहरितौ दक्षिणोत्तरदेशा-वित्यर्थः, [ "उभादुदात्तो नित्यम्" इत्यत्र "पृथक् योगकरणा-दवायजादेशस्य नित्यत्वे सिद्धे पुनर्नित्यग्रहणं वृत्तिविषये उभ-शब्दस्थाने उभयशब्दप्रयोगनियमज्ञापनार्थम्" इति कैयटः ] तयोर्यथासङ्ख्य श्यामत्वात् शुभ्रत्वाच्च लोमरेखा लोमराजि:, उत्तरीयञ्च ते सन्तौ सेतुप्रालेयशैलौ यावत् यावद्दूरं, स्थिताविति शेषः, किञ्च प्राक्प्रत्यगाशे प्राचीप्रतीच्यौ दिशौ, [ "स्त्रियाः पुंवत् —"इत्यादिना पुंवद्भाव ] तयोः परिवृढौ प्रभू, इन्द्रावरुणौ इति यावत्, [ "प्रभौ परिवृढः" इति निपातः तयोर्नगरयोरारम्भणे यौ स्तम्भौ मूलस्तम्भौ, तयोरिव मुद्रा सन्निवेशो ययोस्तौ स्तम्भ सदृशाकारौ इत्यर्थः, सन्ध्ययोरिव सायं-प्रातःसन्ध्यारूपयोः द्वयोः, पताकयोः रुचिभिः रक्ताभाभिः, रचितयोः शिखयोरग्रयोः, शोणशोभा रक्तशोभा ययोः तावुभौ अद्रौ उदयास्तशैलौ, यावत यावत्पर्य्यन्त, तिष्ठतः इति शेषः, तावत्पर्य्यन्तम् एतस्य नरपतेः कीर्त्तिश्चरति चतुर्दिगन्तविश्रान्तकीर्त्तिः अयमित्यर्थः ॥ ४७ ॥

युद्धेति ।—अदसीयस्य अमुष्यायम् अदसीयं तस्यामुष्य सम्बन्धिन इत्यर्थः, अभिमुखं मुखं प्रारम्भम्, अभि लक्षीकृत्य इत्यर्थः, रणस्याभिमुखं युद्धप्रारम्भे, बाणावलीः शरसमूहान्, उन्मुच्य युद्धार्थं निःक्षिप्य, युद्धा युद्धं कृत्वा, निपततां निहतानां,

छिन्नं वाऽवनतीभवन्निजभियः खिन्नं भरेणाथवा
राज्ञाऽनेन हठाद्विलोठितमभूद्भूमावरीणां शिरः ॥ ४८ ॥
न तूणादुद्धारे न गुणघटने नाश्रुतिशिखं
समाकृष्टौ दृष्टिर्न वियति न लक्ष्ये न च भुवि।
नृणां पश्यत्यस्य क्वचन विशिखान् किन्तु पतित-
द्विषद्वक्षःश्वभ्रैरनुमितिरमून् गोचरयति ॥ ४९ ॥

वा अथवा, अन्तः अन्तःकरणे, स्वस्य आत्मनः, परस्य शत्रोश्च, अन्तरं न्यूनाधिकतया पार्थक्य, बुद्ध्वा ज्ञात्वा, अदमीयस्य चरणस्य-वाभिमुख वाणावलीरुन्मुच्य त्यक्त्वा, निपतता निरायुधीभूय एतच्चरणसमीपे नम्रीभवतामित्यर्थः, अरीणां शत्रूणां, छिन्नं वाणैः कर्त्तितं सत्, वा अवनतीभवत् भूमौ पतितं सदित्यर्थः, अथवा निजभिय भरेण स्वीयभयातिशयेन, खिन्नं सत् अवनतीभवत् नम्रीभवत्, शिरो मस्तकम्, अनेन राज्ञा हठात् बलात्कारेण, भूमौ विलोठितं पुनः पुनः परावर्त्तितम्, अभूत्; एतस्य राज्ञः शत्रवो यदि युध्यन्ते तदा म्रियन्ते एव, अथवा ये शत्रवः विवेचका भीरवश्च ते एनमेव शरणं गच्छन्ति तेषां नान्या गतिरिति भावः ॥ ४८ ॥

नेति।—नृणां रणदृष्टृणां पुंसां, ["नृ च" इति विकल्पात् "नामि" इति दीर्घप्रतिषेध ] दृष्टिः अस्य राज्ञः, विशिखान् शरान्, क्वचन कास्मिन्नपि, इत्यस्य सर्वत्र सम्बन्धः, तूणात् निषङ्गात्, उद्धारे उद्धरणकाले, न पश्यतीति सर्वत्र सम्बध्यते, गुणो मौर्वी, ["मौर्वी गुणा ज्या" इति धनञ्जयः) तेन घटने सन्धाने, न, आश्रुतिशिखम् आकर्णान्तं, समाकृष्टौ गुणाकर्षणे, न, वियति मोचनानन्तरम् आकाशे, न, लक्ष्ये वेध्ये, न, भुवि शत्रून् विद्ध्वा ततो निर्गत्य प्रवेशाश्रये भूप्रदेशे, च क्वचन कुत्रापि, न

दमस्वसुश्चित्तमवेत्य हासिका जगाद देवीं कियदस्य वच्म्यहम्?।
भण प्रभूते जगति स्थितैर्गुणैरिहाप्यते सङ्कटवासयातना ॥५०॥
ब्रवीति दासीह किमप्यसङ्गतं ततोऽपि नोच्चैर्यमतिप्रगल्भते।
अहो! सभा साधुरितीरिणः क्रुधा न्यषेधदेतत्क्षितिपानुगान् जनः
॥ ५१ ॥

पश्यति, किन्तु पतितानां युद्धहतानां, द्विषतां वक्षःसु श्वभ्रैः शरवेधजन्यरन्ध्रैः, ("रन्ध्रं श्वभ्रं वपा सुषिः" इत्यमरः) अनुमितिरानुमानिकज्ञानम्, अमून् विशिखान्, गोचरयति विषयीकरोति, एतद्राजनिःक्षिप्तबाणानां विद्यमानत्वे कुत्रापि प्रत्यक्षप्रमाणाभावेऽपि शत्रुवक्षसि दृष्टच्छिद्रस्य अन्यथाऽनुपपत्त्या तद्दर्शनेनैव बाणानामनुमितिः भवतीति भावः। इत्थञ्च बाणानां वेगातिशयोक्तिः ॥ ४९ ॥

दमस्वसुरिति।—हासयतीति हासिका हासयित्री, काचित् चेटीति शेषः, दमस्वसुश्चित्तमवेत्य बुद्ध्वा, देवीं सरस्वतीं, जगाद, किमिति? हे देवि! अस्य राज्ञः सम्बन्धि, कियद्वच्म्यहम्? कियत् प्रपञ्चयामीत्यर्थः, निखिलगुणाधारस्यास्य गुणानां प्रत्येकं कथं वर्णयितुं शक्नोषि? इति भावः; प्रभूते महति, जगति स्थितैरपि विशाले जगति विद्यमानैरपि, गुणैः सौन्दर्यादिभिः, इह अस्मिन्नेव राज्ञि, सङ्कटवासेन सङ्कीर्णस्थित्या, आधाराल्पतया अतिक्लेशेनावस्थानात्, यातना तीव्रवेदना, आप्यते अनुभूयते, इति भण; सर्वे गुणाः सर्वं जगत् परित्यज्यास्मिन् एकस्मिन्नेव राजनि परस्परसङ्घर्षेण निरवकाशं निवसन्तीत्येकयोक्त्या वद इति भावः। सर्वगुणाकरम् अपि एनं दमयन्ती न वृणुते इति निष्कर्षः ॥ ५० ॥

ब्रवीतीति।—इह सभायां, दासी भैम्याः किङ्करी, किमपि

अथान्यमुद्दिश्य नृपं कृपामयी मुखेन तद्दिङ्मुखसम्मुखेन सा।
दमस्वसारं वदति स्म देवता गिरामिलाभूवदतिस्मरश्रियम् ॥५२॥
विलोचनेन्दीवरवासवासितैः सितैरपाङ्गाध्वगचन्द्रिकाञ्चलैः।
तपामपाकृत्य निभाल्य निभालय क्षितिक्षितं मालयमालयं रुचः
॥ ५३ ॥

असङ्गतं ब्रवीति प्राक् "खलेऽपि काकस्य" इत्यादि अभाषत, [ वर्त्तमानसामीप्ये भूते लट् ] ततो दासीतोऽपि, नीचा तुच्छा, इयं चेटी, अतिप्रगल्भते इदानीं पुनरपि उच्छृङ्खलतया ब्रूते, अहो! आश्चर्य्यं, सभा साधुः, आश्चर्य्येति सोल्लुण्ठोक्तिः ; इतीरयन्तीति इतीरिणः स्वस्वामिगुणवर्णनप्रतिबन्धात् आक्रोशतः, एतस्य क्षितिपस्य अनुगान् अनुचरान्, जनः तटस्थजनः, क्रुधा क्रोधेन, न्यषेधत् निवारयामास ॥ ५१ ॥

अथेति।—अथ कृपामयी सा गिरां देवता इलाभुवा ऐलेन पुरूरवसा तुल्यम् इलाभूवत, [ "तेन तुल्यं क्रिया चेद्वतिः" क्रियाऽत्र स्मरातिक्रमः ] अतिस्मरश्रियम् अतिक्रान्तमदनलावण्यम्, अन्यं नृपमुद्दिश्य तस्य नृपस्य, दिङ्मुखसम्मुखेन तद्दिग्भागाभिमुखेन, मुखेन करणेन, तेन उपलक्षिता सती सा, दमस्वसारं दमयन्तीं, वदति स्म ॥ ५२ ॥

विलोचनेति।—विलोचने एव इन्दीवरे नीलोत्पले, तयोर्मध्ये वासेन स्थित्या, वासितैः सुरभितैः, नयननीलिम्ना नीलीकृतैरित्यर्थः, सितैः स्वभावात् अवदातैः, नीलश्वेतकान्तिविशिष्टैरिति यावत्, अपाङ्गाध्वगाया नेत्रप्रान्तरूपमार्गवर्त्तिन्याः, चन्द्रिकायाः नेत्रमध्यस्थनीलगोलकस्य, अञ्चलैः प्रान्तभागैः, कटाक्षैरिति यावत्, करणैः रुचः कान्तेः, आलयम् आकरं, मालयं मलयदेशीयं, क्षितिक्षितं क्षितीशं, तदाख्यदेशस्य

इमं परित्यज्य परं रणादरिः स्वमेव भग्नः शरणं मुधाऽविशत् ।
न वेत्ति यत्त्रातुमितः कृतस्मयो न दुर्गया शैलभुवाऽपि शक्यते
॥ ५४ ॥

अनेन राज्ञाऽर्थिषु दुर्भगीकृतो भवन् घनध्वानजरत्नमेदुरः ।
तथा विदूराद्रिरदूरतां गमी यथा स गामी तव केलिशैलताम्
॥ ५५ ॥

राजानमित्यर्थः, [ क्षितिं क्षिणोतीति क्षितिक्षित् क्षितीशः क्षिधातोरैश्वर्य्यार्थात् क्विप्] निभात् वस्त्वन्तरदर्शनव्याजात्, त्रपां लज्जाम्, अपाकृत्य त्यक्त्वा, निभालय विलोकय, [निभालय इत्यस्य चौरादिकात्मनेपदिभलधातोः रूपत्वात् परस्मैपदं चिन्तनीयम् ; अथवा निभालः निभालनं तद्वान् निभालवान् तादृशं कुरु "तत् करोति—" इति णिचि मतुपो लोपेन साधनीयम् ] ॥५३॥

इममिति ।—अरिः एतच्छत्रुः, रणात् समरात्, भग्नः सन्, परम् अरिं श्रेष्ठं वा, इमं नृपं, परित्यज्य शरणं न प्राप्य, मुधा वृथा, स्वं स्वकीयं, शरणं गृहमेव, शरणं रक्षकम्, अविशत् प्रविष्टः ; [ शरणस्य द्विरावृत्त्या सम्बन्धः ] कथं वृथा ? इति तदाह, यत् यस्मात्, कृतस्मयः कृताहङ्कारः, सोऽरिरिति शेषः, दुर्गया दुर्गमया, शैलभुवा शैलप्रदेशेन, गिरिदुर्गेणापीत्यर्थः, अथ च शैलभुवा पर्वतकन्यया, दुर्गया दुर्गादेव्याऽपि, पार्वत्याऽपि इत्यर्थः, इतोऽस्माद्राज्ञः, त्रातुं न शक्यते, किं पुनः स्वगृहेण अन्येन वा पुरुषेणेत्यपिशब्दार्थः ; इति न वेत्ति ; यो गिरिदुर्गप्रविष्टमपि शत्रुं हन्तुं शक्नोति स स्वगृहप्रविष्टमरिं कथं न हन्तु इति स्वप्राणरक्षार्थं स्वगृहप्रवेशो व्यर्थ इति भावः ॥ ५४ ॥

अनेनेति ।—अनेन राज्ञा अर्थिषु विषये दुर्भगीकृतः तुच्छीकृतः, यथेच्छम् अर्थिभिः उपादीयमानरत्नोऽपि यः अनेन

नम्रप्रत्यर्थिपृथ्वीपतिमुखकमलम्लानताभृङ्गजात-
च्छायान्तःपातचन्द्रायितचरणनखश्रेणिरेणेयनेत्रे ! ।
दृप्तारिप्राणवातामृतरमलहरीभूरिपानेन पीनं
भूलोकस्यैष भर्त्ता भुजभुजगयुगं सांयुगीनं बिभर्त्ति ॥५६॥

राज्ञा उपेक्षितः इत्यर्थः, तथा घनध्वानजैः नवमेघशब्दोत्थैः, रत्नैः वैदूर्य्यैः, मेदुरः पूर्ण एव, भवन् अनिव्ययेऽपि अक्षीणरत्न एव तिष्ठन् इत्यर्थः, विदूराद्रिः वैदूर्य्याचलः, तथा तेन प्रकारेण, अदूरताम् आसन्नतां, गमी गमिष्यन्, यथा सोऽद्रिः, तव केलिशैलतां गामी गमिष्यन्, [ "भविष्यति गम्यादयः" इति गमिगाम्योः साधुत्वम । "न लोका—" इत्यादिना षष्ठीप्रतिषेधात कर्मणि द्वितीया ] अस्य राज्ञः नगर्य्याः अतिसान्निध्यात् बहुरत्नयुतः वैदूर्य्याचलः ते क्रीडाशैलो भविष्यति इति तात्पर्य्यम् ॥ ५५ ॥

नम्रेति ।—एण्या इमे ऐणेये ( "ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु" इत्यमरः । एण्या ढक् ) ते च ते नेत्रे च, ते इव नेत्रे यस्याः तस्याः सम्बुद्धिः, ऐणेयनेत्रे ! हे मृगशावाक्षि ! [ उपमान-पूर्वपदबहुव्रीहावुत्तरपदलोपः ] नम्राणां पादप्रान्ते अवनताना, प्रत्यर्थिपृथ्वीपतीनां पराजितशत्रुभूपानां, मुखान्येव कमलानि तेषु या म्लानता अपमानजनितवैवर्ण्यं, सैव भृङ्गजातस्य भ्रमरसमूहस्य, छाया नीलभाः, तस्या अन्तःपातेन मध्यगतत्वेन, स्वच्छनखे प्रतिफलनादिति भावः, चन्द्रायिता चन्द्रवदाचरिता, मलिनमुखच्छायारूपकलङ्कसम्पत्तेरिति भावः, चरणनखश्रेणिर्यस्य तादृशः, भूलोकस्य भर्त्ता एष राजा, दृप्तारिप्राणवाताः गर्वितशत्रुप्राणवायवः एव, अमृतरसस्य लहर्य्यः ऊर्मयः, तासां भूरिणा भूयसा, पानेन पीनं मांसलम्, अत एव

अध्याहारः स्मरहरशिरश्चन्द्रशेषस्य शेष-
स्याहेर्भूयःफणसमुचितः काययष्टीनिकायः।
दुग्धाम्भोधेर्मुनिचुलुकनत्रासनाशाभ्युपायः
कायव्यूहः क्व जगति न जागर्त्त्यदःकीर्त्तिपूरः? ॥ ५७ ॥

---

संयुगं युद्धे, साधु सांयुगीनं युद्धे अपराजेयं, भुजभुजगयुगं हस्तरूपपन्नगयुगलं, बिभर्त्तीति रूपकालङ्कारः। वायुपानेन यथा सर्पाः स्थूला जायन्ते तथा अस्य राज्ञः हस्तौ शत्रूणां प्राणवायुपानेन स्थूलौ सञ्जातौ इत्यर्थः; चरणपतितान् शत्रुनृपान् रक्षति गर्वितांश्च तान् मारयति इति भावः ॥ ५६ ॥

अध्याहार इति।—स्मरहरशिरसि चन्द्रशेषस्य कलामात्रावशिष्टचन्द्रस्य, अध्याहारः शेषपूरकः, पञ्चदशकलासम्पादकः इति यावत्, एतेन कीर्त्तिपूरस्य स्वर्गव्यापित्वमायातम्; शेषस्य अहेः अनन्तोरगस्य, शुभ्रकायस्येति भावः, भूयसा सहस्रसङ्ख्यकानां, फणानां समुचितः योग्यः, काययष्टीनां सहस्रसङ्ख्यकानां शरीराणां, निकायः समूहभूतः इति यावत्; फणसङ्ख्यकैः कायैः भवितुमौचित्यात् अवशिष्टशरीरसम्पादकः इति भावः, एतेन पातालव्यापित्वमायातम्; दुग्धाम्भोधेः क्षीराम्भोधेः, मुनेः अगस्त्यस्य, चुलुकनात् गण्डूषेण ग्रहणात्, त्रासस्य नाशे अभ्युपाय उपायभूतः, कायव्यूहः कायसङ्घातः, क्षीराब्धेः प्रतिनिधिरित्यर्थः, पूर्वं क्षीराब्धेरेकाकित्वेन चुलुकग्रहणात् भयमासीत्, इदानीमेतत्कीर्त्तिपूरस्य पृथिवीव्यापित्वात् तत्कल्लोलेन सर्वजलानां शुक्लतया दुग्धवत् प्रतीयमानत्वात् इदं क्षीराब्धेः वारि अन्यत् वारि वा इति निश्चेतुमशक्यत्वेन नास्ति अगस्त्यगण्डूषात् तादृशभयमिति भावः; अदःकीर्त्तिपूरः अमुष्य यशोराशिः, क्व जगति न जागर्त्ति? त्रैलोक्ये एव

राज्ञामस्य शतेन किं कलयतो हेतिं शतघ्नीं? कृतं
लक्षैर्लक्षभिदः द्दशैव जयतः पद्मानि पद्मैरलम्।
कर्त्तुं सर्वपरच्छिदः किमपि नो शक्यं परार्द्धेन वा
तत् सङ्ख्यापगमं विनाऽस्ति न गतिः काचिद्दतैतद्द्विषाम्॥ ५८

जागर्त्तीत्यर्थः। अत्र कीर्त्तिपूरस्य त्रैलोक्यव्यापित्वासम्बन्धेऽपि तत्सम्बन्धोक्तेः तद्रूपातिशयोक्तिः, सा च अस्य चन्द्रशेषाध्याहारत्वादिरूपकात्यापितेति सङ्करः॥ ५७॥

राज्ञामिति।—शतघ्नीं नाम हेतिम् आयुधं, ["शतघ्नी तु चतुःशत्या लौहकण्टकसञ्चिता" इति यादवः; शत हन्तीति शतघ्नीति च गम्यते "अमनुष्यकर्त्तृके च" इति ठक्प्रत्यये ङीप्] कलयतो धारयतः, अस्य नृपते, राज्ञां शतेन किम्? न काऽपि क्षतिरित्यर्थः; शतमात्रमसमर्थमस्त्रं गृह्णतोऽस्य शतसङ्ख्यकैः शत्रुभिः किमपि कर्त्तुं शक्यते इति भावः। लक्षभिदो लक्षभेदिनः, लक्ष लक्षसङ्ख्या, तद्विशिष्टशत्रुहन्तुश्च, ("लक्षं शरव्ये सङ्ख्यायाम्" इति च विश्व.) कुत्रचिदप्यप्रतिहतशायकस्य अस्य इत्यर्थः, राज्ञां लक्षैः कृतम् अलम्; कृतम् इति शब्दः अलमित्यर्थेऽव्ययम्। द्दशा द्दष्ट्यैव, पद्मानि अब्जानि, तत्सङ्ख्यकशत्रूंश्च; ("पद्मं स्यात् पन्नगे व्यूहे निधौ सङ्ख्यान्तरेऽम्बुजे" इति विश्वः) जयतोऽस्य राज्ञ पद्मैः पद्मसङ्ख्यकैः शत्रुभिः, अलम्; किं बहुना? सर्वपरच्छिदः समस्तशत्रुच्छिदोऽस्य राज्ञः, राज्ञां परार्द्धेन वा तत्सङ्ख्यकराजभिर्वा, परेषाम् अरीणाम् अर्द्धेन वा, किमपि कर्त्तुं नो शक्यम्; तत् तस्मात्, बत हेद, एतद्द्विषाम् अस्य शत्रूणां, सङ्ख्याया अपगमम् अपगमसङ्ख्यत्वम्, असङ्ख्यत्वमिति यावत्, अथ च सङ्ख्यात् युद्धात्, अपगमम् अपसरणं, विना काचित् गतिर्नास्ति;

वयस्यया ऽऽकूतविदा दमस्वसुः स्मितं वितत्याभिदधेऽथ भारती।
इतः परेषामपि पश्य याचतां भवन्मुखेन स्वनिवेदनत्वराम् ॥५९॥

कृताऽत्र देवी वचनाधिकारिणी
त्वमुत्तरं दासि! ददासि का सती?।
इतीरिणस्तन्नृपपारिपार्श्विकान्
स्वभर्तुरेव भ्रुकुटिन्यवर्त्तयत् ॥ ६०

---

("सङ्ख्या समिति सङ्ख्या स्यादेकत्वादिविचारयोः" इति मेदिनी) अत्रैव द्विपङ्क्तिमत्त्वस्य सङ्ख्यापगमतदपगमयोः उभयोः प्राप्तस्य पूर्वत्र निषेधस्य उत्तरत्र नियमनात् परिसङ्ख्या; तथा च सूत्रम्—"एकस्य अनेकप्राप्तावेकत्र नियमनं परिसङ्ख्या" इति ॥ ५८ ॥

वयस्ययेति।—अथ दमस्वसुः आकूतविदा अभिप्रायज्ञया, वयस्यया सख्या, स्मितं वितत्य हास्यं कृत्वा, भारती वाग्देवी, अभिदधे अभिहिता, किमिति? भवन्मुखेन त्वन्मुखेन, याचतां स्ववरणं प्रार्थयमानानाम्, इतोऽस्मात् राज्ञः, परेषाम् अन्येषामपि राज्ञां, स्वनिवेदने आत्मपरिचयकथने, त्वरां द्रुतकथनत्वं कालावलम्बासहत्वं वा, पश्य, एतद्वर्णनात् विरम्य परान् वर्णयेत्यर्थः ॥ ५९ ॥

कृतेति।—हे दासि! अत्र स्वयंवरे, देवी वाग्देवी, वचने नृपतिवर्णने, अधिकारिणी कर्त्री, कृता नियुक्ता, त्वं का सती का भवन्ती, केन प्रयुक्ता सतीत्यर्थः, असती कुलटा, का त्वमिति च गम्यते; उत्तरं ददासि? इति ईरिणः एवं ब्रुवाणान्, तस्य नृपस्य, परिपार्श्वे वर्त्तन्ते इति पारिपार्श्विकान् सेवकान्, ["परिमुखञ्च" इति ठक् चकारात् पारिपार्श्विकः] स्वभर्त्तुः स्वस्वामिन एव, भ्रुकुटिः

धराधिराजं निजगाद भारती तत्सम्मुखेषद्वलिताङ्गसूचितम्।
दमस्वसारं प्रति सारवत्तरं कुलेन शीलेन च राजसूचितम् ॥६१॥
कुतः कृतैवं नवलोकमागतं प्रति प्रतिज्ञाऽनवलोकनाय वा ?।
अपीयमेनं मिथिलापुरन्दरं निपीय दृष्टिः शिथिलाऽस्तु ते वरम्
॥ ६२ ॥
न पाहि पाहीति यदब्रवीरमुं मदोष्ठ ! तेनैवमभूदिति क्रुधा।
रणाञ्चितावस्य विरोधिमूर्द्धभिर्विदश्य दन्तैर्निजमोष्ठमास्यत ॥६३॥

न्यवर्त्तयत् तेषां स्वामी एव तान् भ्रूभङ्गेण निवारितवान् इत्यर्थः ॥ ६० ॥

धरेति।—भारती सरस्वती, कुलेन वंशमर्य्यादया, शीलेन सद्वृत्तेन च, राजसु मध्ये उचित योग्यं, सर्वलोकपरिचितमित्यर्थः, सारवत्तरं श्रेष्ठम्, अतिबलिष्ठं वा, तस्य वर्णनीयनृपस्य, सम्मुखं यथा तथा ईषद्वलितेन वक्रितेन, अङ्गेन वपुषा, सूचितं निर्दिष्टं, धराधिराजं भूपतिं, प्रति लक्षीकृत्य, दमस्वसारं निजगाद तस्यै कथयामासेत्यर्थः ॥ ६१ ॥

कुत इति।—हे भैमि ! आगतं स्वयंवरार्थमुपस्थितं, नवलोकम् अपूर्वजनं प्रति,एवं परिदृश्यमानप्रकारेण,अनवलोकनाय वा अनवलोकितुमेव, अवधारणार्थो वा-शब्दः ; कुतः कस्मात् कारणात्, प्रतिज्ञा कृता ? न युक्तमेतदिति भावः ; भवतु तावत् एनं पुरोवर्त्तिनं, मिथिलापुरन्दरमपि मिथिलापतिमपि, निपाय सम्यक् निरीक्ष्य, सकृदपीति भावः, ते तव, इयम् दृष्टिः शिथिला शिथिलादरा, एतस्य रूपवत्तायामिति भावः, अस्तु, वरम् इत्यपि श्रेष्ठं, वीक्ष्य उपेक्षणम् अपि अदर्शनात् किञ्चित् प्रियमित्यर्थः ॥ ६२ ॥

नेति।—मदोष्ठ ! हे मदीयाधर ! यत् यस्मात्, पाहि

भुजेऽपसर्पत्यपि दक्षिणे गुणं सहेषुणाऽऽदाय पुरः प्रसर्पिणे ।
धनुः परीरम्भमिवास्य सम्मदात् महाहवे दित्सति वामबाहवे
॥ ६४ ॥

---

पाहि इति अमुं राजानं, न अब्रवीः, दुरभिमानादिति शेषः, तेन पाहि पाहीति अवचनेनैव, एवमीदृशो मे दशा, अभूदिति हेतोः, क्रुधा क्रोधेन, रणजितो अस्य विरोधिमूर्द्धभिः शत्रुशिरोभिः कर्त्तृभिः, दन्तैः करणैः, निजमोष्ठमधरम् : ओष्ठशब्दस्य अधरार्थकत्वमपि दृश्यते, विदश्य आस्यते स्थीयते : अस्य राज्ञः शत्रूणामेतच्चरणमेव शरणम्, अन्यथा मरणमेवेति भावः । अत्र शत्रुशिरसां प्रत्यर्थिविषयक्रोध-हेतुकस्य ओष्ठदंशनस्योष्ठविषयक्रोधहेतुकत्वोत्प्रेक्षणात् हेतू-त्प्रेक्षा व्यञ्जकाप्रयोगात् गम्या ॥ ६३ ॥

भुजे इति ।—महाहवे महारणे, अस्य राज्ञः, धनुः कर्त्तृ, दक्षिणे अपसव्ये, अथ च सरले, अनुकूलेऽपीत्यर्थः, भुजे हस्ते, इषुणा सह गुणं ज्याम्, आदाय अपसर्पति अपगच्छति, कर्ण-पश्चाद्देशं गच्छति सत्यपीत्यर्थः, अथ च रणस्थलात् पलायनं कुर्वत्यपि, पुरः प्रसर्पिणे पुरोगामिने, गुणसहायाभावेऽपि रिपु-सम्मुखयायिने इति भावः, वामबाहवे वामहस्ताय, अथ च प्रतिकूलायापि भुजाय, सम्मदात् रिपुविनाशाय रणक्षेत्रपरो-भागगमनजन्यसन्तोषात्, परीरम्भम् आलिङ्गनम्, [ "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इति दीर्घः ] दित्सतीव दातुमिच्छतीव इत्युत्प्रेक्षा [ ददातेः सनन्तात्लट् "सनि मीमा—" इत्यादिना इदादेशः अभ्यासलोपश्च ] मध्यस्थः सुवंशजो जनः गुणिनि अनुकूलेऽपि जने स्वजनमादाय सङ्ग्रामात् पलायिते सति सङ्ग्रामं कर्त्तुं पुरोगामिने प्रतिकूलायापि जनाय निपुणोऽयमिति मत्वा

अस्योर्वीरमणस्य पार्वणविधुद्वैराज्यसज्जं यशः
सर्वाङ्गोज्ज्वलशर्वपर्वतसितश्रीगर्वनिर्वासि यत् ।
तत कम्बुप्रतिबिम्बितं किमु ? शरत्पर्जन्यराजिश्रियः
पर्य्यायः किमु ? दुग्धसिन्धुपयसां सर्वानुवादः किमु ? ॥६५॥

हर्षादालिङ्गनं ददाति इति निष्कर्षः। वामहस्तस्थितधनुषः दक्षिणहस्तेनाकर्णान्तगुणाकर्षणात् वामहस्ते कोटिद्वयनमनमेवालिङ्गनत्वेनोत्प्रेक्षितम् । जिगीषुभिः दक्षिणोऽपि भीरुः न समाद्रियते वामोऽपि रणोत्साही शूरः समाद्रियते इति भावः ॥ ६४ ॥

अस्येति।—अस्य उर्वीरमणस्य भूपतेः सम्बन्धि, पर्वणि भवः पार्वणः तादृशस्य विधोः राकाचन्द्रस्य, द्वैराज्यं द्वयो राज्ञोरिदं कर्म द्वैराज्यं राजद्वयसम्बन्धि कर्मेत्यर्थः, चन्द्रद्वयसम्बन्धि धावल्यमिति भावः, [ द्विराजशब्दात् बहुव्रीह्यन्तात् ब्राह्मणादित्वात् ष्यङ्प्रत्ययः ] तत्र सज्जं सन्नद्धं, तत्कार्य्यकारकमित्यर्थः, पार्वणविधुसदृशमिति समुदितार्थः, सर्वाङ्गे उज्ज्वलस्य धवलस्य, शर्वपर्वतस्य कैलासस्य, सितः सितिमा, धावल्यमित्यर्थः, ( "गुणे शुक्लादयः पुंसि" इत्यमरः ) तस्य श्रिया सम्पदा, यो गर्वस्तं निर्वासयति लुम्पतीति तन्निर्वासि, कैलासस्य शुभ्रतायाः अपि अधिकं शुभ्रमित्यर्थः, यत् यशः, तत् कम्बूनां शङ्खानां, प्रतिबिम्बितं प्रतिबिम्बं, प्रतिच्छाया इत्यर्थः, किमु ? किं वा शरत्पर्जन्यराजिश्रियः शरन्मेघावलिधावल्यसम्पदः, पर्य्यायो रूपान्तरं किमु ? अथवा दुग्धसिन्धोः क्षीराब्धेः, पयसां क्षीराणां, सर्वानुवादः सर्वस्यापि पुनरुक्तिः किन्नु ? कृत्स्नं तत् क्षीरमेवेदं किमित्यर्थः। उत्प्रेक्षात्रयस्य संसृष्टिः ॥ ६५ ॥

निस्त्रिंशत्रुटितारिवारणघटाकुम्भास्थिकूटावट-
स्थानस्थायुकमौक्तिकोत्करकिरः कैरस्य नायं करः ।
उन्नीतश्चतुरङ्गसैन्यसमरत्वङ्गत्तुरङ्गक्षुर-
क्षुण्णासु क्षितिषु क्षिपन्निव यशःक्षौणोजबीजव्रजम् ? ॥ ६६ ॥
अर्थिभ्रंशवशद्भवत्फलभरव्याजेन कुब्जायितः
सत्यस्मिन्नतिदानभाजि कथमप्यास्तां स कल्पद्रुमः ।

---

निस्त्रिंशेति ।—निर्गतः त्रिंशतोऽङ्गुलिभ्यः इति निस्त्रिंशः त्रिंशदङ्गुल्यधिकः खड्गः इत्यर्थः, [ डच्प्रकरणे "सङ्ख्यायास्तत्पुरुषस्य—" इति डच्-प्रत्ययः ] तेन त्रुटितेषु खण्डितेषु, अरिवारणघटाकुम्भेषु शत्रुगजसमूहकुम्भेषु, अस्थिकूटानाम् अस्थिसङ्घातानाम्, अवटस्थानेषु गर्त्तप्रदेशेषु, स्थायुकाः स्थायिनः, [ "लषपत —" इत्यादिना उकञ्-प्रत्ययः ] तेषां मौक्तिकोत्कराणां मुक्तासमूहानां, किरतीति किरः क्षेपकः, [ "इगुपधज्ञा—" इति कः ] अस्य नृपस्य, अयं करः चत्वार्यङ्गानि हस्त्यादीनि येषां तादृशानां सैन्यानां समरेषु त्वङ्गतां सञ्चरतां, तुरङ्गाणां क्षुरैः करणैः, क्षुण्णासु कृष्टासु, क्षितिषु यशःक्षौणोजस्य कीर्त्तिवृक्षस्य, बीजानां व्रजं समूहं, क्षिपन् किरन्, वपन्निव इत्यर्थः, स्थित इति शेषः, इति कैः जनैः न उन्नीतः ? न उत्प्रेक्षितः ? गजकुम्भस्थमुक्तानां श्वेतत्वात् क्षुद्रत्वाच्च यशोवृक्षबीजस्वरूपत्वेन तेषाञ्च रणभूमौ निपातनात् वपनत्वेन चोत्प्रेक्षणादत्रोत्प्रेक्षाद्वयम् ॥ ६६ ॥

अर्थीति ।—अस्मिन् राज्ञि, अतिदानभाजि अतिदानशौण्डे सति, मनसा अकल्पितमप्यर्थं ददति सतीत्यर्थः, सः प्रसिद्धः, कल्पद्रुमः मनःकल्पितार्थमात्रप्रदः कल्पवृक्षः, अर्थिनां भ्रंशेन असद्भावेन, वशद्भवतः व्ययाभावादुपचीयमानस्य, फलभरस्य व्याजेन छलेन, कुब्जायितः कुब्जीभूतः

आस्ते निर्व्ययरत्नसम्पदुदयोदग्रः कथं याचक-
श्रेणीवर्जनदुर्यशोनिर्विड़ितव्रीड़स्तु रत्नाचलः ? ॥ ६७ ॥

स्रजामि किं विघ्नमिदन्नृपस्तुता-
वितीङ्गितैः पृच्छति तां सखीजने ।
स्मिताय वक्त्रं यदवक्रयद् वधू-
स्तदेव वैमुख्यमलच्चि तन्नृपे ॥ ६८ ॥

इशाऽथ निदिश्य नरेश्वरान्तरं
मधुस्वरा वक्तुमधीश्वरा गिराम् ।

सन्, वस्तुतस्तु लज्जयैवेति भावः, [ लोहितादेराकृतिगणत्वात् क्यषि कर्त्तरि क्तः ] कथमपि कृच्छ्रेण, आस्तां निम्नतया अन्यैरदृष्टत्वात् कथमपि लज्जावरणसम्भवादिति भावः ; किन्तु निर्व्ययाणां व्ययरहितानां, रत्नसम्पदाम् उदयेन वृद्ध्या, उदग्रः उच्छ्रितः, उच्चशिखरः इति भावः, रत्नाचलो रोहणाद्रिस्तु, याचकश्रेणीभिः कर्त्रीभिः, वर्जनेन परिहारेण, यत् दुर्यशः तेन निविड़ितव्रीड़ो घनीकृतलज्जः सन्, कथमास्ते ? कथं तिष्ठति ? उन्नतया स्थित्या सर्वैर्दृष्टत्वात् लज्जासंवरणोपायासम्भवादिति भावः । अत्र द्रुमशैलयोः लज्जाऽसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः ॥ ६७ ॥

स्रजामीति ।—अथ सखीजने तां भैमीम्, इदन्नृपस्य एतन्नृपस्य, स्तुतौ विघ्नं स्रजामि किम् ? इतीङ्गितैः चेष्टितैः, पृच्छति सति वधूः भैमी, स्मिताय स्मितं कर्त्तुं, [ क्रियार्थेत्यादिना चतुर्थी ] वक्त्रम् अवक्रयत् वक्रीचकार, इति यत् तत् वक्रीकरणमेव, तन्नृपे तस्मिन् नृपे, वैमुख्यं नैस्पृह्यम्, अलच्चि लच्चितम् ॥ ६८ ॥

दृशेति ।—अथ मधुस्वरा मधुरकण्ठी, गिरामधीश्वरा सरस्वती, नरेश्वरान्तरं राजान्तरं, वक्तुं वर्णयितुं, दृशा निदिश्य

अनूपयामास विदर्भजाश्रुती
निजास्यचन्द्रस्य सुधाभिरुक्तिभिः ॥ ६९ ॥
स कामरूपाधिप एष हा ! त्वया
न कामरूपाधिक इष्यतेऽपि यः ।
त्वमस्य सा योग्यतमा हि वल्लभा
सुदुर्लभा यत्प्रतिमल्लभा परा ॥ ७० ॥
अकर्णधाराशुगसम्भृताङ्गतां
गतैररित्रेण विनाऽस्य वैरिभिः ।

निरूप्य, विदर्भजा या वैदर्भ्याः, श्रुती श्रोत्रे, निजास्यचन्द्रस्य सुधाभिः उक्तिभिः वचनामृतैरित्यर्थः, अनूपयामास सरसी-चकार, वचनामृतवर्षणेन भैम्याः श्रोत्रद्वयमत्यर्थमार्द्री-चकारेत्यर्थः, [ "जलप्रायमनूपं स्यात्" इत्यमरः । अनुगता आपो यस्मिन् इति अनूपम् "ऋक्पूरब्धूः—" इत्यादिना समासान्तः, "ऊदनोर्देशे" इत्यूकारः, तस्मात् "तत्करोति—" इत्यादिना ण्यन्ताल्लिट् ] ॥ ६९ ॥

स इति ।—एष पुरोवर्त्ती, यः कामात् कन्दर्पादपि रूपेणा-धिकः, सः प्रसिद्धः, कामरूपाधिपः कामरूपदेशाधीश्वरोऽपि, त्वया नेष्यते हा ! तव नैतद्युक्तमिति भावः ; कुतः ? यस्याः तव इति भावः ; प्रतिमल्ला प्रतिद्वन्द्विनी, भाः कान्तिर्यस्याः सा यत्प्रतिमल्लभा यत्सदृशसौन्दर्य्यशालिनीत्यर्थः, परा अन्या रमणी, सुदुर्लभा अतिदुर्लभा, एवम्भूता सा त्वमस्य राज्ञः, योग्यतमा हि अत्यन्तानुरूपैव, वल्लभा दयिता, समानसौन्दर्य्य-तया समागमयोग्योऽयं त्वया वीक्षितव्य एवेत्यर्थः ॥ ७० ॥

अकर्णेति ।—कर्ण इव कर्णः प्रतिमुखमल्लं तद्रहितः अकर्णः, न कर्णैर्भिर्नापि दिग्भिरिति निषेधादिति भावः,

असज्ज्ञानाल्प! भूयिष्ठ-पान्थवैमत्यमेत्य यम्।
लोके प्रयासि पन्थानं परलोके न तं कुतः? ॥ ८७ ॥
स्वकन्यामन्यसात्कर्त्तुं विश्वानुमतिदृश्वनः।
लोके परत्र लोकस्य कस्य न स्याद्दृढं मनः? ॥ ८८ ॥

असदिति।—असज्ज्ञानेन मन्दबुद्ध्या, अल्पः क्षुद्रः, नीच इत्यर्थः, तत्सम्बुद्धौ असज्ज्ञानाल्प! रे नीच-प्रकृतिनास्तिक! लोके इहलोके, भूयिष्ठाः बहवः, अधिक-सङ्ख्यकाः एव जना इत्यर्थः, पान्थाः परलोकपथिकाः, आस्तिकाः इत्यर्थः, तेषां वैमत्यं मार्गभेदविषयकमतविरोधम्, एत्य प्राप्य, सर्वसम्मतं मार्गम् उत्सृज्य इत्यर्थः, यं पन्थानं दुर्मार्गं, प्रयासि अनुयासि, परलोके अमुत्रापि, तं पन्थानं, कुतः कस्मात्, न, प्रयासि? इति पूर्वक्रियया अन्वयः, प्रयास्यसेव तत्फलमनुभविष्यसीत्यर्थः; "इह प्रच्छन्नपापानां शास्ता वैवस्वतो मतः" इति शास्त्रात् अहमेव नियन्ता इति भावः ॥ ८७ ॥

स्वेति।—स्वकन्यां निजदुहितरम्, अन्यसात्कर्त्तुम् अन्यस्मै दातुम् इत्यर्थः, ["देये त्रा च" इति साति-प्रत्ययः] विश्वानुमतिं सर्वलोकसम्मतिं दृष्टवानिति विश्वानुमति-दृश्वा तस्य विश्वानुमतिदृश्वनः, "ब्राह्मे विवाहे आहूय दीयते शक्त्यलङ्कृता। तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥ वोढ्याहुरतिदानानि कन्या पृथ्वी सरस्वती" इत्यादि सर्वशास्त्र-सम्मतिद्रष्टुः इत्यर्थः, [दृशेः क्वनिप्] कस्य लोकस्य जनस्य, मनः चित्तं, परत्र लोके परलोके, दृढं स्थिरं, स्थिरविश्वासीत्यर्थः, न स्यात्? न भवेत्? अपि तु सर्वेषामेव स्यादेव. परलोक-भयेनैव सर्वो जनः स्वदुहितरमन्यस्मै ददाति यदि

कस्मिन्नपि मते सत्ये हता: सर्वमतत्यज: ।
तद्दृष्ट्या व्यर्थतामात्रमनर्थस्तु न धर्मज: ॥ ९९ ॥

परलोको नाभविष्यत् तदा स्वदुहितरमन्यस्मै कथमदास्यत् ? स्वेनैव स्वदुहितु: पाणिग्रहणमापद्येत, अत: सर्वसम्मति-दर्शनात् परलोकोऽङ्गीकर्त्तव्य एव भवतीति भाव: ॥ ९८ ॥

ननु नास्तिकानामिह तावत् सुखं सिद्धम्, आस्तिकानान्तु तन्नास्ति, आमुष्मिकन्तु सन्दिग्ध तथा च वृथाऽनुष्ठानक्लेश इति कुतो दार्ढ्यमित्यत्राह, कस्मिन्नपीति ।—कस्मिन्नपि आस्तिक-मतमध्ये कस्मिंश्चिदपि, मते कन्यादानविधि-मातृगमन-निषेधादिरूपे परलोकसाधकमते, सत्ये प्रमाणत्वेनाङ्गीकृते सति, सर्वमतत्यज: परस्परविरोधात् सर्वमप्रमाणमित्यादिरीत्या सर्वास्तिकमतत्याजिन:, नास्तिका इति शेष:, हता: विनष्टा:, परलोकभ्रष्टा इति यावत्, स्यु: भवेयु:. यदि परलोक: स्यात् तदा सर्वास्तिकमतत्यागेन यूयं पारलौकिकसुखास्वादादिभ्यो वञ्चिता भवेतेति भाव: ; तद्दृष्ट्या सर्वास्तिकमताप्रामाण्य-दर्शनेन तु, व्यर्थतामात्रम् अनुष्ठानवैयर्थ्यमेव, यदि परलोकसाधकं सर्वास्तिकमतमप्रमाणं स्यात् तदाऽस्माकं यागाद्यनुष्ठानस्य निष्फलत्वमात्रं न तु तत: किञ्चिदनिष्टं भवेदिति भाव:। कुतो नानिष्टमित्यत आह, अनर्थ इति ।—धर्मज: धर्मोपचारजन्य:, धर्मानुष्ठानजन्य इति यावत्, अनर्थ: विपत्तिस्तु, परलोकभ्रंशरूप: अनिष्टव्यापारस्तु इत्यर्थ:, न नास्त्येव, परलोकासत्त्वपक्षेऽस्माकं धर्मानुष्ठानजन्य: न कश्चिदनर्थ:,परलोकसत्त्वपक्षे तु युष्माकं धर्माननुष्ठानेन परलोक-भ्रंशरूप: अनर्थ इत्यपि बोद्धव्यम् ; एतच्च पाक्षिकत्वमभ्युपेत्योक्तं परमार्थतस्तु आस्तिकमतमेव ग्राह्यम् इति भाव: ॥ ९९ ॥

क्वापि सर्वैरवैमत्यात् पातित्यादन्यथा क्वचित्।
स्थातव्यं श्रौत एव स्याद्धर्मे शेषेऽपि तत्कृते ॥ १०० ॥
बभाण वरुणः क्रोधादरुणः करुणोज्झितम्।
किं न प्रचण्डात् पाषण्ड-पाश! पाशात् बिभेषि नः? ॥ १०१ ॥

उपसंहरति, क्वापीति।—क्वापि कुत्रापि, अहिंसाकन्यादानादिरूपे वैदिकानुष्ठानविषये इति यावत्, अवैमत्यात् सर्वेषामेकमत्यात्, तथा क्वचित् कुत्रापि विषये, अन्यथा वैमत्येऽपि, पातित्यात् वर्णाश्रमाधिकारे विहिताकरणनिषिद्धाचरणजन्यप्रत्यवायभयात्, तथा शेषेऽपि नित्यनैमित्तिकातिरिक्ते ज्योतिष्टोमादावपि, अथवा शेषे वेदविहितातिरिक्ते स्मार्त्तेऽपि धर्मे, तत्कृते वेदकृते, वेदविहितत्वाविशेषे इति यावत्, हेतुगर्भविशेषणमेतत्; श्रौते एव धर्मे वैदिकमते, सर्वैः नास्तिकैरपि, स्थातव्यं वर्त्तितव्यं, स्यात् भवेत्, स एव ग्राह्यः इत्यर्थः, [ "तयोरेव कृत्यक्तखलर्थाः" इति भावे कृत्यस्तव्यत्-प्रत्ययः ] विहितानामहिंसादीनां केषाञ्चित् श्रौतस्मार्त्तधर्माणां भवद्भिरपि अनुष्ठानात् निषिद्धानां मातृगमनादीनां केषाञ्चिदपि श्रौतस्मार्त्तधर्माणां भवद्भिरपि वर्जनात् तद्दृष्टान्तेन श्रुतिस्मृतिविहितेषु अन्येषु विधिनिषेधांशेष्वपि श्रौतस्मार्त्ताविशेषादेव स्थातव्यं स्यात्, तत्कृताः शेषा धर्मा अपि अवश्यमङ्गीकार्य्या इति भावः ॥ १०० ॥

बभाणेति।—अथ वरुणः जलेशः, क्रोधात् रोषात्, अरुणः रक्ताङ्गः सन्, करुणोज्झितम् उज्झितकरुणं, निष्कृपं यथा तथा इत्यर्थः, बभाण उवाच; तदेवाह—याप्यः कुत्सितः, पाषण्डः वेदबाह्यापसदः, पाषण्डपाशः [ "याप्ये पाशप्" ] तत्सम्बुद्धौ पाषण्डपाश! रे नास्तिकाधम! प्रचण्डात्

मानवाशक्यनिर्माणा कूर्माद्यङ्कबिला शिला।
न श्रद्धापयते मुग्धाः! तीर्थिकाध्वनि वः कथम्?॥ १०२॥
शतक्रतूरुजाद्याख्या-विख्यातिर्नास्तिकाः! कथम्।
श्रुतिवृत्तान्तसंवादैर्न वशमदचीकरत्?॥ १०३॥

---

भयङ्करात्, नः अस्माकं, पाशात् पाशायुधात्, न बिभेषि किम्? न त्रस्यसि किम्? "निजपाशेन बध्नाति वरुणः पापकारिणः" इति किं न श्रुतम्? इति भावः॥ १०१॥

मानवेति।—मुग्धाः! रे मूढाः!, मानवानां नराणाम्, अशक्यनिर्माणा निर्मातुम् अशक्या, कूर्मादि कच्छपवराहादि, अङ्कं चिह्नं यस्य तादृशं, बिलं विवरं, चक्रमिति यावत् यस्याः तादृशी, शिला पाषाणखण्डः, गण्डकाख्यनदीविशेषसम्भूता शालग्रामशिला इत्यर्थः, वः युष्मान्, तीर्थिकाध्वनि श्रौतियमार्गे, कथं न श्रद्धापयते? न विश्वासयति? शास्त्रोक्तलक्षणसंवादित्वादिति भावः॥ १०२॥

शतेति।—नास्तिकाः! रे नास्तिपरलोकाः! शतक्रतुः शताश्वमेधयज्ञकारी इन्द्रः, ऊरुजः विष्णोरूरुदेशसम्भूतः वैश्यः, स आदिर्येषां ते ब्राह्मणक्षत्रियादयः, तेषामाख्याः शतुक्रतुः ऊरुजः बाहुजः मुखजः पादज इत्यादीनि नामानि, तासां विख्यातिः प्रसिद्धिः, श्रुतिवृत्तान्तसंवादैः श्रुतिषु वेदेषु, यादृशा वृत्तान्ताः "शताश्वमेधक्रतुकारी इन्द्रो भवति" इतीन्द्रस्यैव शतक्रतुत्वं "ब्राह्मणोऽस्य मुखमासीत्" इत्यादिना ब्राह्मणस्यैव मुखजत्वं वैश्यस्यैवोरुजत्वम् इत्यादयो वेदोक्ता इतिहासाः, तेषां संवादैः श्रुत्युक्तवृत्तान्तेन सह लोकव्यवहारस्य मेलनदर्शनैरित्यर्थः, लोकेन इन्द्रस्यैव शतुक्रतुनाम व्यवह्रियते न तु अन्यदेवानां, ब्राह्मणस्यैव मुखजत्वं व्यवह्रियते न

तत्तज्जनकृतावेशान् गयाश्राद्धादियाचिनः।
भूताननुभवन्तोऽपि कथं श्रद्धथ न श्रुतीः ? ॥ १०४ ॥
नामभ्रमात् यमं नीतानथ स्वतनुमागतान्।
संवादवादिनो जीवान् वीक्ष्य मा त्यजत श्रुतीः ॥ १०५ ॥
संरम्भैर्जम्भजेत्रादेः स्तभ्यमानात् बलात् बलन्।
मूर्द्ध्नि बद्धाञ्जलिर्देवानथैव कश्चिदूचिवान् ॥ १०६ ॥

त्वन्यवर्णानाम् इत्यादिव्यवहारैः करणैरिति यावत्, वः युष्मान्, कथं न समदचीकरत्? न व्यसिस्मयत्? श्रुति-वृत्तान्तस्य लोकव्यवहारेण ऐक्यदर्शनात् कथं श्रुतिः प्रमाणत्वेन युष्माभिः न स्वीक्रियते ? इति भावः॥ १०३ ॥

श्रुतेः प्रामाण्यमेव कुतः ? इत्याशङ्क्य तदेव द्वाभ्यामुपपाद-यति, तदित्यादि।—तेषु तेषु जनेषु लोकेषु, कृतावेशान् तन्मुखेन यत्किञ्चित् याचितुं कृताधिष्ठानान्, गयाश्राद्धादियाचिनः प्रेतत्वादिविमोचककर्मयाचकान्, भूतान् प्रेतयोनिभेदान्, अनु-भवन्तः प्रत्यक्षेण पश्यन्तः अपि, श्रुतीः तद्विधायकवेदान्, कथं न श्रद्धथ ? न विश्वसिथ ? ॥ १०४ ॥

नामेति।—किञ्च, नामभ्रमात् नामसाम्यकृतभ्रान्तेः, यमं परेतराजानं, नीतान् यमदूतैः प्रापितान्, अथ अनन्तरं, भ्रान्तिशोधनार्थं यमेन पुनः मर्त्त्यलोकप्रेरणानन्तरमित्यर्थः, स्वतनुम् आगतान् अप्राप्तकालत्वात् पुनर्यमाज्ञया स्वशरीरं प्रविष्टान्, संवादवादिनः वेदोक्त्या सह ऐक्यवादियमलोक-वृत्तान्तकथकान्, जीवान् मर्त्त्यान्, वीक्ष्य अवलोक्य, श्रुतीः वेदान्, मा त्यजत न जहीत, एकत्र प्रामाण्यदर्शनादन्यत्राप्य-श्रद्धा न कार्य्या इति भावः॥ १०५ ॥

संरम्भैरिति।—अथ वरुणवाक्यानन्तरं, जम्भजेत्रादेः

नापराधो पराधीनो जनोऽयं नाकनायकाः!।
कालस्याहं कलेर्वन्दी तच्चाटुचटुलाननः॥ १०७॥
इति तस्मिन् वदत्येव देवाः स्यन्दनमन्दिरम्।
कलिमाकलयाञ्चक्रुर्द्वापरञ्चापरं पुरः॥ १०८॥
सन्दर्शीन्नमस्त्रीवः श्रीवहुत्वकृताङ्गतान्।
तत्तत्पापपरीतस्तान् नाकीयान् नारकीव सः॥ १०९॥

---

जम्भासुरविजयीन्द्रादिदेववर्गस्य, संरम्भैः कोपैः, ("संरम्भः सम्भ्रमे कोपे" इति विश्वः) स्तभ्यमानात् पुरस्खलितं प्रतिवध्यमानात् बलात् कलिसैन्यात्, बलन् निर्गच्छन्, कश्चित् धूर्त्तः वन्दी, मूर्द्ध्नि शिरसि, बद्धाञ्जलिः कृताञ्जलिः सन्, नमस्कृत्य इत्यर्थः, देवान् इन्द्रादीन्, एवं वक्ष्यमाणम्, ऊचिवान् उक्तवान्, [ ब्रुवः क्वसुः ]॥ १०६॥

यदूचिवान् तदाह, नेति।—नाकनायकाः! हे देवाः!, अयं जनः अहमित्यर्थः, पराधीनः परवशः, अतो न अपराधी न दोषी, अहम् अयं जनः, कलेः कालस्य कलियुगाधिदेवस्य, तच्चाटुभिः तस्य कलेः, चाटुभिः प्रियवादैः,चटुलाननः चपलमुखः, स्वामिचित्तानुकूलवादीत्यर्थः, वन्दी स्तुतिपाठकः, अतोऽहं क्षन्तव्य इति भावः। स्वामिचित्तानुरञ्जनार्थं वेदादिदूषणं कृतं न तु स्वतः, अतो नाहं भवद्भिर्दण्डनीय इति निष्कर्षः॥ १०७॥

इतीति।—तस्मिन् वन्दिनि, इति इत्थं, वदति जल्पति एव सति, देवाः इन्द्रादयः, स्यन्दनमन्दिरं रथमध्यस्थं, कलिं कलियुगाधिष्ठातारं, तथा अपरं जनः अन्यं, द्वापरं द्वापरयुगाधिदेवञ्च, पुरः अग्रे, आकलयाञ्चक्रुः ददृशुः॥ १०८॥

सन्दर्शीति।—नरकः अस्य अस्तीति नारकी नरकस्थः जन इव, तैः तैः पापैः ब्रह्महत्यादिभिः पातकैः, परीतः परि-

गुरुव्रीड़ावलीढः प्रागभून्नमितमस्तकः।
स त्रिशङ्कुरिवाक्रान्तस्तेजसैव विडौजसः॥ ११०॥
विमुखान् द्रष्टुमप्येनं जनङ्गममिव द्विजान्।
एष मत्तः सहेलं तानुपेत्य समभाषत॥ १११॥
स्वस्ति वास्तोष्पते! तुभ्यम्? शिखिन्नस्ति न खिन्नता?।

---

वेष्टितः, सः कलिः, श्रीबहुलत्वेन सौन्दर्य्यबाहुल्येन, कृताद्भुतान् जनितविस्मयान्, रूपातिशय्येन दर्शकानां विस्मयोत्पादका-नित्यर्थः, नाकीयान् स्वर्गस्थान्, तान् इन्द्रादीन्, उन्नमद्ग्रीवः उत्कन्धरः सन्, सन्दर्श अवलोकयामास॥ १०९॥

गुर्विति।—सः कलिः, प्राक् प्रथमं, दर्शनमात्रमेवेत्यर्थः, गुर्व्या प्रबलया, व्रीडया लज्जया, देवाना वैमुख्यजनितया इति भावः, ("मन्दाक्षं ह्रीस्त्रपा व्रीड़ा लज्जा" इत्यमरः) अवलीढ़ः ग्रस्तः, पश्चात् विड़ौजसः इन्द्रस्य, तेजसा एव प्रभावेणैव, आक्रान्तः अभिभूतः सन, त्रिशङ्कः इन्द्रतेजसा स्वर्गात् भ्रंशितः नमितमस्तकः सूर्य्यवंशीयो राजविशेष इव, नमितमस्तकः अवनतशिराः, अभूत् अजायत॥ ११०॥

विमुखानिति।—जनात् गच्छति इति जनङ्गमः चण्डालः तं, ["गमश्च" इति संज्ञायां खच्-प्रत्यय इति चीरस्वामी। "चण्डालप्लवमातङ्ग दिवाकीर्त्तिजनङ्गमाः" इत्यमरः] द्रष्टुम् ईक्षितुम् अपि, विमुखान् परावर्त्तिताननान्, द्विजान् विप्रादीन् इव, एनं कलिं, द्रष्टुमपि किमुत सम्भाषितुं स्प्रष्टुं वेति भावः, विमुखान् तान् इन्द्रादीन्, मत्तः मदान्धः, एषः कलिः, सहेलं सावज्ञं, ("हेलाऽवज्ञाविलासयोः" इति विश्वः) उपेत्य समागत्य, समभाषत सम्भाषितवान्॥ १११॥

स्वस्तीति।—वास्तोष्पते! वास्तोः गृहक्षेत्रस्य, पतिः

सखे काल! सुखेनासि? पाशहस्त! मुदस्तव?॥११२॥
स्वयंवरमहे भैमी-वरणाय त्वरामहे।
तदस्माननुमन्यध्वमध्वने तत्र धाविने॥ ११३॥
तेऽवज्ञाय तमुच्चैरहङ्कारमकारणम्।
ऊचिरेऽतिचिरेणैनं स्मित्वा दृष्टमुखा मिथः॥ ११४॥

---

अधिष्ठाता तत्सम्बुद्धौ, हे भुवःपते! इन्द्र!, ["वास्तोष्पति-गृहमेधाच्छ च" इत्यस्मादेव निपातनादलुकि षत्वम्। "इन्द्रो मरुत्वान्मघवा बिडौजाः पाकशासनः। वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः॥" इत्यमरः] तुभ्यं स्वस्ति क्षेमम्, अस्ति कच्चित्? इति शेषः, ["नमःस्वस्ति—" इत्यादिना चतुर्थी। "स्वस्त्याशीः क्षेमपुण्यादौ" इत्यमरः] शिखिन्! हे अग्ने! खिन्नता खेदः, न अस्ति, कच्चित्? इति शेषः; सखे काल! हे सुहृत् यम! सुखेन प्रीत्या, असि वर्त्तसे, किम्? इति शेषः; पाशहस्त! हे वरुण! तव भवतः, मुदः मोदाः, सन्ति किम्? इति शेषः। सर्वत्र काकुरनु-सन्धेया॥ ११२॥

स्वयमिति।—हे देवाः! स्वयंवरः एव आत्मना पति-वरणमेव, महः उत्सवः तस्मिन्, स्वयंवराय महः तस्मिन् इति वा, भैमीवरणाय दमयन्तीं भार्यात्वेन वरीतुं, त्वरामहे त्वरां कुर्महे, शीघ्रं याम इत्यर्थः, तत् तस्मात्, अस्मान् तत्र धाविने स्वयंवरगामिने, अध्वने अध्वगमनाय इत्यर्थः, अनुमन्यध्वम् अनुजानीध्वम्॥ ११३॥

ते इति।—ते देवाः, अस्य कलेः, तं पूर्वोक्तम्, उच्चैः उत्कटम्, अकारणम् अहेतुकम्, अहङ्कारं गर्वम्, अवज्ञाय अविगणय्य, अत एव अतिचिरेण अतिविलम्बेन, पापिष्ठोऽयं कथमस्माभिः

पुनर्वक्ष्यसि मा मैवं कथमुद्वक्ष्यसे नु सः ?।
सृष्टवान् परमेष्ठी यं नैष्ठिकब्रह्मचारिणम्॥ ११५॥
द्रौहिणं द्रुहिणो वेत्तु त्वामाकर्णावकीर्णिनम्।
त्वज्जनैरपि वा धातुः सेतुर्लङ्घ्यस्त्वया न किम् ?॥ ११६॥

मन्मथ इति बुद्ध्या इति भावः, मिथो दृष्टमुखाः परस्परमुखावलोकिनः सन्तः, स्मित्वा मूढोऽयं स्वयंवरवार्त्तां करोतीति ईषत् हसित्वा, एनं कलिम्, ऊचिरे ऊचुः॥ ११४॥

पुनरिति।—हे कले! पुनः भूयः, एवं स्वयंवरार्थं गमिष्यामीत्येवंरूपं, मा मा वक्ष्यसि नैव वक्तव्यं, कोपे द्विरुक्तिः; ["अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि" इत्यमर्षार्थे वचेर्लट्] कुतः ? परमे तिष्ठतीति परमेष्ठी पितामहः, ["परमे कित्" इति इनिः। "स्थास्थिन्स्थृणाम्" इति वक्तव्यात् षत्वम्] यं त्वा, नैष्ठिकब्रह्मचारिणं यावज्जीवं ब्रह्मचर्य्येण अवतिष्ठमानं, सृष्टवान् निर्मितवान्, सः त्वं, कथं नु केन वा प्रकारेण, उद्वक्ष्यसे ? परिणेष्यसि ? [वहेर्लृट्] तेन चालङ्घ्यशासनेन कृतयुगादयोऽपि निष्कलत्वा एव सृष्टाः, अतस्तव स्वयंवरवार्त्ता नैव कर्त्तव्या नैष्ठिकब्रह्मचारिव्रतस्य हानिभयात् इति भावः॥ ११५॥

द्रौहिणमिति।—वा अथवा, त्वज्जनैः तव भृत्यैः कामक्रोधादिभिरपि, भृत्यत्वादतिक्षुद्रैरपीति भावः; धातुः ब्रह्मणः, सेतुः मर्य्यादा, नियोगः इति यावत्, लङ्घ्यः लङ्घयितुं शक्यः, ["शकि लिङ् च" इति चकारात् शक्यार्थे कृत्यप्रत्ययः] सुतरां त्वया तत्स्वामिना भवताऽपि, न किम् ? स सेतुः किं न लङ्घ्यः ? अपि तु लङ्घ्यः एव इत्यर्थः, यस्य क्षुद्रभृत्यैरपि स्रष्टुराज्ञालङ्घनं सम्भाव्यते तेनापि तदाज्ञालङ्घनं

अतिवृत्तः स वृत्तान्तस्त्रैलोक्ययुवगर्वनुत्।
आगच्छतामपादानं स स्वयंवर एव नः॥ ११७॥
नागेषु सानुरागेषु पश्यत्सु दिविषत्सु च।
भूमिपालं नलं भैमी वरं साऽववरत् वरम्॥ ११८॥

नासम्भाव्यमिति भावः; किन्तु द्रुहिणः ब्रह्मा, त्वाम् अवकीर्णं स्खलितम् अनेनेत्यवकीर्णी क्षतव्रतः, [ "इष्टादिभ्यश्च" इति इनि-प्रत्ययः ] तम् अवकीर्णिनं क्षतव्रतं, व्रतलङ्घिनमित्यर्थः, ( "अवकीर्णी क्षतव्रतः" इत्यमरः ) आकर्ण्य श्रुत्वा, द्रौहिणम् आज्ञालङ्घनापराधिनं, वेत्तु जानातु, ज्ञात्वा च यत् कर्त्तव्यं तत् करोतु इति भावः॥ ११६॥

अतीति।—भवतु तावत, त्रैलोक्ये त्रिलोकमध्ये, ये युवानः यावन्तस्तरुणाः, तेषां गर्वनुत् सौन्दर्य्याहङ्कारहन्ता, भैमी-कर्त्तृकप्रत्याख्यानादिति भावः, सः वृत्तान्तः स्वयंवरप्रसङ्गः, अतिवृत्तः अतीतः; कथं त्वया ज्ञातम्? इत्याह, आगच्छताम् आयातानां, नः अस्माकं, सः प्रसिद्धः, स्वयंवरः एव स्वयंवर-स्थानमेव, अपादानम् आगमनक्रियाया अवधिभूतः, ततः एव आगच्छामः इत्यर्थः॥ ११७॥

नागेष्विति।—सानुरागेषु अनुरागयुक्तेषु, नागेषु नागकुमारेषु, दिविषत्सु देवेषु च, पश्यत्सु अवलोकयत्सु, पश्यतः तान् सर्वाननादृत्येत्यर्थः, [ "षष्ठी चानादरे" इति चकारात् अनादरे सप्तमी ] सा भैमी दमयन्ती, वरं नागाद्यपेक्षया श्रेष्ठं, भूमिपालं चक्रवर्त्तिनं, नलं निषधेशं, वरं वोढारम्, अववरत् वृणोति स्म, [ वरयतेश्चौरादिकात् ईप्सायाम् अदन्ताल्लङ्, अग्लोपत्वेनासन्वद्भावादित्वदीर्घयोर-भावः ]॥ ११८॥

भुजगेशानसद्देशान् वानरानितरान् नरान्।
अमरान् पामरान् भैमी नलं वेद गुणोज्ज्वलम्॥ ११९॥
इति श्रुत्वा स रोषान्धः परमश्चरमं युगम्।
जगन्नाशनिशारुद्र-मुद्रस्तानुक्तवानदः॥ १२०॥
कयाऽपि क्रीडतु ब्रह्मा दिव्याः स्त्रीर्दीव्यत स्वयम्।

---

भुजगेति।—भैमी दमयन्ती, भुजगेशान् वासुकिप्रमुख-महानागान्, असद्देशान् अपकृष्टपरिच्छदान्, वैरूप्यादमनोज्ञा-कृतीन् इत्यर्थः, इतरान् नलात् अन्यान्, नरान् मानवान्, नरेन्द्रान् इति यावत्, वानरान् मर्कटान्, चापल्यनिर्गुणत्वाभ्यां मर्कटतुल्यान् इत्यर्थः, तथा अमरान् इन्द्रादीन् देवान्, पामरान् नीचान्, ("विवर्णः पामरो नीचः" इत्यमरः) वेद वेत्ति, [ "विदो लटो वा" इति णलादेशः ] नलं केवलं नलनृपतिम् एव, गुणोज्ज्वलं गुणाढ्यं, वेद इति पूर्वक्रियया अन्वयः॥ ११९॥

इतीति।—इति इदं, श्रुत्वा आकर्ण्य, परमः उत्कट इत्यर्थः, रोषेण क्रोधेन, अन्धः दृष्टिशक्तिहीनः, हिताहितविवेचनापरि-शून्य इत्यर्थः, अज्ञानपरवशः इति यावत्, चरमम् अन्त्यं, युगं चतुर्थयुगमित्यर्थः, सः कलिः, जगन्नाशनिशा त्रिभुवनध्वंस-कारिणी रात्रिः, कालरात्रिरित्यर्थः, तत्र रुद्रः प्रलयकाले संहारमूर्त्तिः शिवः, तस्य मुद्रा इव मुद्रा चिह्नम्, आकारः इति यावत् यस्य सः तादृशः सन्, तान् इन्द्रादीन्, अदः वक्ष्यमाणं वाक्यम्, उक्तवान् कथितवान्॥ १२०॥

यदुक्तं "पुनर्वक्ष्यसि" इत्यादिना श्लोकद्वयेन तत्रोत्तरं सोल्लुण्ठ-माह, कयाऽपीत्यादिना श्लोकद्वयेन।—हे देवाः! ब्रह्मा स्रष्टा, कयाऽपि अगम्ययाऽपीति भावः; "प्रजापतिर्वै स्वां दुहितर-मभ्यगात्" इति श्रुतेः; क्रीडतु रमताम्, स्वयं यूयञ्च इत्यर्थः,

कलिस्तु चरतु ब्रह्म प्रैतु चातिप्रियाय वः ॥ १२१ ॥
चर्य्येव कतमेयं वः परस्मै धर्मदेशिनाम् ?।
स्वयं तत् कुर्वतां सर्वं श्रोतुं यत् बिभितः श्रुती ॥ १२२ ॥
तत्र स्वयंवरेऽलम्भि भुवः श्रीर्नैषधेन सा।
जगती क्लीव युष्माभिर्लाभस्तुल्याभ एव वः ॥ १२३ ॥

दिव्याः स्वर्गीयाः, स्त्रीः नारीः, दिव्याभिः वेश्याभिरिति भावः, [“कर्म च” इति करणस्य कर्मत्वम्] दीव्यत क्रीडत, कलिस्तु अहं पुनरित्यर्थः, वः युष्माकम्, अतिप्रियाय अत्यन्त-प्रीतिजननाय, ब्रह्म चरतु ब्रह्मचर्य्यमवलम्ब्य तिष्ठतु, प्रैतु म्रियताञ्च ॥ १२१ ॥

ततः किम्? तत्राह, चर्य्येवेति।—परस्मै अन्यस्मै, धर्मदेशिनां स्वसुतादिगमनं न कार्य्यमित्यादिरूपमाचारमुपदिशतां, स्वयं तु आत्मना पुनः, यत् कर्म, ब्रह्महत्यागुरुदारगमनादिरूप-मित्यर्थः, श्रुती कर्णौ अपि, श्रोतुम् आकर्णयितुं, बिभितः त्रस्यतः, [“भियोऽन्यतरस्याम्”इति विकल्पादिकारः] तत् सर्वं ब्रह्महत्यापारदार्य्यादिकं, कुर्वताम् आचरताम्, “अहल्यायै जार” इति श्रुतेः; वः युष्माकम्, इयम् एषा, चर्य्या आचारः, रीतिरिति यावत्, कतमैव? कीदृशीव? अवाच्या इत्यर्थः, स्वयमनाचारिणां युष्माकं परोपदेशवचनं न ग्राह्यम् इति भावः ॥ १२२ ॥

यदुक्तम् “अतिवृत्तः स वृत्तान्तः” इत्यादिना श्लोकत्रयेण तत्रोत्तरं प्रपञ्चेनाह, तत्रेत्यादिभिः षोडशभिः।—हे देवाः! तत्र स्वयंवरे दमयन्तीकर्तृकेप्सितपतिवरणे, भुवः श्रीः भूलोकलक्ष्मीः, सा भैमी, नैषधेन नलेन, अलम्भि लब्धा, [लभेर्ण्यन्तात् कर्मणि लुङि “विभाषा चिण्णमुलोः” इति विकल्पान्नुमागमः]

दूरान्नः प्रेक्ष्य यौष्माकी युक्तेयं वक्त्रवक्रणा।
लज्जयैवासमर्थानां मुखमास्माकमीक्षितुम्॥ १२४॥
स्थितं भवद्भिः पश्यद्भिः कथं भोः! तदसाम्प्रतम्।

युष्माभिश्च भवद्भिस्तु, जगतः त्रिलोकस्य, ह्रीः लज्जा, त्रैलोक्ये यावती लज्जा वर्त्तते सा इत्यर्थः, अर्जाभि इति पूर्वेणान्वयः; स्वर्लोकलज्जाकरमिदमवमानमिति भावः; एवञ्च वः युष्माकं, नलस्य देवानाञ्च इत्यर्थः, [स च यूयञ्चेति तेषां युष्माकमिति तदाद्येकशेषः] लाभः फलप्राप्तिः, तुल्याभः समानरूप एव, एकविधः एव इत्यर्थः, श्री-ह्रीति शकार-हकारयोः विभिन्नता-मात्रमन्यत् तुल्यमिति भावः॥ १२३॥

दूरादिति।—हे देवाः!—दूरात् विप्रकृष्टदेशात, नः अस्मान्, प्रेक्ष्य दृष्ट्वा, युष्माकम् इयं यौष्माकी भवदीया, ["युष्मदस्मदोरन्यतरस्याम्" इत्यण्-प्रत्यये "तस्मिन्नणि च" इत्यादिना युष्माकादेशे "टिड्ढाणञ्" इत्यादिना ङीप्] इयम् एषा, वक्त्राणां मुखानां, वक्रणा वक्रीकरणं, तिर्य्यङ्मुखत्वमित्यर्थः, ["तत्करोति—"इति ण्यन्तात् युच्] लज्जया एव व्रीड़ावशेनेव, दमयन्त्या अवृतत्वादिति भावः; अस्माकम् इदम् आस्माकं, [यौष्माकीवत् प्रक्रिया] मुखम् आननम्, ईक्षितुं द्रष्टुम्, असमर्थानाम् अशक्तानां, युष्माकमिति शेषः, अथवा समासान्तर्गततया गुणीभूतस्य यौष्माकीत्यत्र युष्मत्-शब्दस्य विशेषणम्; युक्ता उचिता॥ १२४॥

स्थितमिति।—भोः देवाः! पश्यद्भिः अवलोकयद्भिः, नलवरणमिति शेषः, भवद्भिः युष्माभिः, कथं केन प्रकारेण, स्थितम्? उदासितम्? [भावे क्तः] तत् औदासीन्यम्, असाम्प्रतम् अयुक्तम्; किं तर्हि तदा कार्य्यम्? तदाह—

निर्दग्धा दुर्विदग्धा किं सा दृशा न ज्वलत्क्रुधा ? ॥ १२५ ॥
महावंशाननादृत्य महान्तमभिलाषुका।
स्वीचकार कथङ्कारमहो! सा तरलं नलम् ? ॥ १२६ ॥
भवादृशैर्दिशामीशैर्मृग्यमाणां मृगीदृशाम्।
स्वीकुर्वाणः कथं सोढः क्षतव्रीडस्तृणं नलः ? ॥ १२७ ॥

दुर्विदग्धा दुर्विनीता सा भैमी, ज्वलत्क्रुधा दीप्यमानकोपया, कोपप्रज्वलितया इत्यर्थः, दृशा दृष्ट्या, किं कथं, न निर्दग्धा ? न भस्मीकृता ? दग्धुमेव उचिता इत्यर्थः ॥ १२५ ॥

दाह्यत्वे हेतुमाह, महेति।—महान्तम् उत्कृष्टपुरुषं, वरमिति शेषः, अभिलाषुका कामयमाना, [ "लषपत—" इत्यादिना उकञ्-प्रत्ययः, "न लोका—" इत्यादिना षष्ठीप्रतिषेधः ] सा भैमी, महावंशान् उत्कृष्टकुलान्, सर्वलोकवरेण्य-प्रजापतिकश्यपसुतान् इति भावः, युष्मान् इति शेषः, महतः वेणून् च, ( "वंशो वेणौ कुले वर्गे" इति विश्वः ) अनादृत्य अवधीर्य्य, तरलं चपलं, नलं नलाख्यं राजानं, पोटगलाख्य-क्षुद्रतृणविशेषञ्च, ( "नलः पोटगले राज्ञि" इति विश्वः ) कथङ्कारं कथम् इत्यर्थः, [ "अन्यथैवंकथम्—"इत्यादिना णमुल्-प्रत्ययः ] स्वीचकार ? वव्रे ? अहो ! इत्याश्चर्य्ये; प्रखर-नदीस्रोतसा नीयमानस्य वेणुवनालम्बनं परित्यज्य तृणावलम्बन-वदुपहास्यमिदं चेष्टितमिति भावः ॥ १२६ ॥

भवादृशैरिति।—भवादृशैः भवद्विधैः, दिशाम् ईशैः दिक्-पालैः, मृग्यमाणां काम्यमानां, मृगीदृशां हरिणलोचनां, भैमी-मिति शेषः, स्वीकुर्वाणः गृह्णन्, अत एव क्षतव्रीडः भवतां कृतावज्ञः, ("व्रीढाऽवमाननाऽवज्ञा"इत्यमरः ) "क्षतव्रीडः" इति पाठे—जनितलज्जः, दमयन्तीकर्तृकप्रत्याख्यानात् युष्माननादृत्य

दारुणः कूटमाश्रित्य शिखी साक्षी भवन्नपि।
नावहत् किं तदुद्वाहे कूटसाक्षिक्रियामयम्?॥ १२८॥
अहो! महःसहायानां सम्भूता भवतामपि।
क्षमैवास्मै कलङ्काय देवस्येवामृतद्युतेः॥ १२९॥

---

नलकर्तृकदमयन्तीग्रहणाच्च लज्जा इति बोध्यम्; तृणं तृणकल्पः, नलः नैषधः, कथं केन प्रकारेण, सोढः? क्षान्तः? भवद्भिरिति शेषः, महद्भिः हि परिभवो न सोढव्यः इत्यर्थः॥१२७॥

दारुण इति।—अयं पुरोवर्त्ती, शिखी शिखावान् अग्निः, दारुणः काष्ठस्य, कूटं राशिम्, आश्रित्य अवलम्ब्य, अन्यत्र—दारुणः पापकार्य्यकारित्वात् क्रूरकर्मा, पुरुषः इति शेषः, कूटं कपटम्, आश्रित्य अवलम्ब्य, साक्षी भवन्नपि प्रत्यक्षद्रष्टा सन् अपि, अग्निसाक्षिके विवाहे व्यवहारे च साक्षीभवन्नपि इति भावः, तदुद्वाहे तयोः दमयन्तीनलयोः विवाहे, कूटसाक्षिणः मिथ्यासाक्षिणः, क्रिया चेष्टितं, नलेन दमयन्ती नोढा किन्तु अन्येनोढा इत्याद्यनृतवचनव्यापारमित्यर्थः, किं कथं, नावहत्? नावलम्बत? शिखिनस्ताद्दृशकूटसाक्षिदाने च भवतां दमयन्तीलाभः स्यादेव यतः कूटसाक्षी परकीयवस्तु अन्यस्मै दापयतीति भावः॥ १२८॥

अहो इति।—भो देवाः! महःसहायानां तेजस्विनामपि, भवतां युष्माकम्, अमृतद्युतेः सुधाकरस्य, देवस्य इन्दोः इव, क्षमा क्षान्तिः एव, अन्यत्र—क्षितिः एव, ("क्षितिक्षान्त्योः क्षमा" इत्यमरः) अस्मै इन्द्रादिदेवेषु सत्स्वपि दमयन्त्या नलो वृत इति लोकगतपरिभवरूपाय, कलङ्काय अपवादाय, अयशसे इत्यर्थः, अन्यत्र— कलङ्काय अङ्काय, कृष्णवर्णचिह्नविशेषायेत्यर्थः; चन्द्रे श्यामिका भूच्छायैवेति केचित्, ("कलङ्को-

सा वव्रे यं तमुत्सृज्य मह्यमीर्ष्याजुषः स्थ किम् ? ।
ब्रूतागःसद्मनस्तस्माच्छद्मनाऽद्याऽऽच्छिनद्मि ताम् ॥१३०॥
यतध्वं सहकर्त्तुं मां पाञ्चाली पाण्डवैरिव ।
साऽपि पञ्चभिरस्माभिः संविभज्यैव भुज्यताम् ॥ १३१ ॥

ऽङ्कापवादयोः" इत्यमरः ) सम्भृता सञ्जाता, इत्यहो ! खेदे ; क्षमाया गुणभूतत्वेऽपि समयविशेषे क्षमाकरणात् स्त्रियः अपि न गणयन्तीति भावः ॥ १२९ ॥

सेति ।—हे देवाः ! सा भैमी, यं नलं, वव्रे पतित्वेन वृतवती, तम् अपराधिनं तं नलम्, उत्सृज्य विहाय, किं किमर्थं, मह्यं मां प्रति, [ "क्रुधद्रुह—"इत्यादिना सम्प्रदानत्वाच्चतुर्थी ] ईर्ष्याजुषः अक्षान्तिभाजः, कोपपरवशा इत्यर्थः, स्थ ? भवथ ? ब्रूत कथयत, यूयमिति शेषः ; अस्तु तावत्, आगःसद्मनः अपराधमन्दिरात्, भवदनादररूपदोषाकरादित्यर्थः, तस्मात् नलात्, अद्य अस्मिन्नेव अहनि, ता भैमीं, छद्मना कपटेन, आच्छिनद्मि आहरामि, आनयामीत्यर्थः, अहमेवेति शेष, [ सामीप्ये वर्त्तमाननिर्देशः ] ॥ १३० ॥

ततः किमस्माकम् ? अत आह, यतध्वमिति ।—अत्र "ततश्च" इति पदमध्याहृत्य पूर्वश्लोकेन सह सङ्गतिः रक्षणीया ; ततश्च कपटेन दमयन्त्यानयनानन्तरमित्यर्थः, पाञ्चाली द्रौपदी, पाण्डवैः युधिष्ठिरादिभिः पञ्चभिरिव, सा भैमी अपि, अस्माभिः पञ्चभिरेव मया तथा युष्माभिः चतुर्भिश्च, [ त्यदाद्येकशेषः ] संविभज्य विभागं कृत्वा, पृथक् पृथक् समयं निर्दिश्य इत्यर्थ, भुज्यतां रम्यतामिति यावत्, अतो मां सहकर्त्तुं भैम्यानयने सहायीभवितुं, यतध्वं चेष्टध्वं, दमयन्त्यानयने माम् अनुमन्यध्वम् इति भावः ॥ १३१ ॥

अथापरिवृढ़ा सोढ़ुं मूर्खतां मुखरस्य ताम्।
चक्रे गिरा शराघातं भारती सारतीव्रया ॥ १३२ ॥
कीर्त्तिं भैमीं वरांश्चास्मै दातुमेवागमन्नमी। *
न लीढ़े धीरवैदग्धीं धीरगम्भीरगाहिनी ॥ १३३ ॥
वाग्मिनीं जडजिह्वस्तां पतिवक्तुमशक्तिमान्।

अथेति।—अथ कलिप्रलापानन्तरं, भारती सरस्वती, मुखरस्य दुर्मुखस्य, अप्रियवादिन इत्यर्थः, प्रलपतः इति यावत्, कलेरिति शेषः, ("दुर्मुखे मुखराबद्धमुखौ" इत्यमरः) तां तादृशीं, मूर्खतां मूढ़तां, सोढुं चन्तुम्, अपरिवृढ़ा अप्रभुः, असमर्था सतीत्यर्थः, [ "प्रभौ परिवृढ़ः" इति निपातनात् साधुः। "प्रभुः परिवृढ़ोऽधिप" इत्यमरः ] सारेण न्याय्येन, न्याय-सङ्गतत्वेनेत्यर्थः, यथार्थत्वेनेति यावत्; ( "सारो बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिषु" इत्यमरः ) तीव्रया तीच्णया, अथवा सारया गुर्वर्थप्रतिपादकत्वेन श्रेष्ठया, तीव्रया परुषत्वात् दुःसहया च, गिरा वाचा एव, शराघातं बाणप्रहारं, चक्रे कृतवती, वाक्सायकेन तं विव्याध इत्यर्थः ॥ १३२ ॥

कीर्त्तिमिति।—रे शठ! अमी देवाः, अस्मै नलाय, कीर्त्तिं पुण्यश्लोकतां, भैमीं दमयन्तीं, तथा वरान् ईप्सितान् च, दातुं वितरितुम् एव, अगमन् स्वयंवरसभां गतवन्तः, न तु स्वयं तां परिणेतुमिति भावः, [ गमेर्लुङ्, इरित्त्वात् च्लेरङादेशः ] तथा हि, अगम्भीरगाहिनी उत्तानग्राहिणी, गूढ़ार्थं बोद्धुमसमर्था यथास्थूलग्राहिणीत्यर्थः, धीः त्वादृशां बुद्धिः, धीराणां मनीषिणां, वैदग्धीं चातुर्य्यं, गूढ़ाभिप्रायमित्यर्थः, न लीढ़े न आस्वादयति, न वेत्ति इत्यर्थः ॥ १३३ ॥

वाग्मिनीमिति।—जड़जिह्वः अप्रगल्भवाक्, वाक्प्रयोगा-

लीलावहेलितां कृत्वा देवानेवावदत् कलिः ॥ १३४ ॥
प्रोज्झि वाञ्छितमस्माभिरपि तां प्रति सम्प्रति ।
तस्मिन् नले न लेशोऽपि कारुण्यस्यास्ति नः पुनः ॥१३५॥
वृत्ते कर्मणि कुर्मः किम् ? तदा नाभूम तत्र यत् ।
कालोचितमिदानीं नः शृणुतालोचितं सुराः ! ॥ १३६ ॥
प्रतिज्ञेयं नले विज्ञाः ! कलेर्विज्ञायतां मम ।

नभिज्ञः इत्यर्थः, कलिः कलियुगं, वाग्मिनीं प्रगल्भवाचं, तां भारतीं सरस्वतीं, प्रतिवक्तुं प्रत्युत्तरं दातुम्, अशक्तिमान् असमर्थः सन्, लीलया विलासेन, उपेक्षाप्रदर्शनरूपचेष्टितविशेषेण इत्यर्थः, अवहेलिताम् अवज्ञातां, स्त्रियं प्रतिवक्तुमयुक्तमित्येवमवधीरितामित्यर्थः, कृत्वा विधाय, अगणयन्निवेत्यर्थः, देवान् इन्द्रादीन् एव, अवदत् उवाच ॥ १३४ ॥

प्रोज्झीति।—सम्प्रति अधुना, अस्माभिः अपि तां भैमीं प्रति, वाञ्छितम् इच्छा, प्रोज्झि प्रोज्झितं, परित्यक्तमिति यावत्, [ उज्झतेः कर्मणि लुङ् ] पुनः किन्तु, तस्मिन् तादृशदुष्कार्य्यकारिणि इत्यर्थः, नले नैषधे, नः अस्माकं, कारुण्यस्य कृपायाः, लेशः विन्दुमात्रम् अपि, न अस्ति नैव विद्यते ॥ १३५ ॥

अकरुणस्तं कृतार्थं किं करिष्यतीत्याशङ्क्याह, वृत्ते इति ।—सुराः ! हे देवाः !, वृत्ते गते, कर्मणि भैमीवरणक्रियायां, किं कुर्मः ? किं सम्पादयामः ? इदानीं न किञ्चित् कर्त्तुं शक्नुम इत्यर्थः, यत् यस्मात्, तदा तत्काले, तत्र स्वयंवरे, न अभूम नास्म इत्यर्थः, वयमिति शेषः, भवतु, इदानीम् अधुना, नः अस्माकं, कालोचितं भैम्या नले वृतेऽपि एतत्समयोपयोगि, आलोचितं विचारं पुनः, [ भावे क्तः ] शृणुत आकर्णयत ॥१३६॥

प्रतिज्ञेति ।—विज्ञाः ! हे विबुधाः ! नले नलविषये,

तेन भैमीञ्च भूमिञ्च त्याजयामि जयामि तम् ॥ १३७ ॥
नैषधेन विरोधं मे चण्डतामखण्डितौजसः ।
जगन्ति हन्त गायन्तु रवेः कैरववैरवत् ॥ १३८ ॥
द्वापरः साधुकारेण तद्विकारमदीदिपत् ।
प्रणीय श्रवणे पाणिमवोचन्नमुचेः रिपुः ॥ १३९ ॥
विस्मेयमतिरस्मासु साधु वैलक्ष्यमीक्षसे ।

---

कलेः कलियुगाधिदेवस्य, मम मे, इयम् एषा, प्रतिज्ञा शपथः, विज्ञायताम् अवधार्य्यताम्; तामेवाह—तेन नलेन, [ प्रयोज्येन ] भैमीञ्च दमयन्तीञ्च, भूमिञ्च राज्यञ्च, त्याजयामि विसर्जयामि, एवञ्च तं नलं, जयामि आत्माधीनीकरोमि, [ उभयत्र भविष्यत्सामीप्ये वर्त्तमानप्रत्ययः ] ॥ १३७ ॥

नैषधेनेति ।—चण्डतामखण्डितौजसः क्रौर्य्योपस्कृततेजसः, मे मम कलेः, नैषधेन नलेन सह, विरोधं वैरं, रवेः सूर्य्यस्य, कैरवैः कुमुदैः, वैरवत् शत्रुतातुल्यं, जगन्ति लोकाः, गायन्तु उच्चैर्घुष्यन्तु इत्यर्थः, हन्तेति हर्षे ॥ १३८ ॥

द्वापर इति ।—द्वापरः कलेः सहचारितृतीययुगाधिदेवः, साधुकारेण साधु इति शब्दोच्चारणेन, तस्य कलेः, विकारं प्रलापम्, अदीदिपत् अवीवृधत्, [ दीप्यतेर्णौ चङि "भ्राजभासभाषदीपजीव—"इत्यादिना विकल्पादुपधाह्रस्वः, "दीर्घो लघोः" इत्यभ्यासदीर्घः ] अथ नमुचेः रिपुः इन्द्रः, श्रवणे कर्णे, पाणिं करं, प्रणीय निधाय, पाणिभ्यां कर्णौ पिधाय इत्यर्थः, अवोचत् अचीकथत् ॥ १३९ ॥

विस्मेयेति ।—हे कले ! विस्मेयमतिः विस्मयनीयबुद्धिः, त्वमिति शेषः, अस्मासु वैलक्ष्यं सलज्जत्वम्, ईक्षसे पश्यसि, साधु "जगतो जीयतां युष्माभिः" इति यदुक्तं तत् साधु उक्तम् इत्यर्थः;

यद्दत्तेऽल्पमनल्पाय तद्दत्ते ह्रियमात्मने ॥ १४० ॥
फलसीमां चतुर्वर्गं यच्छतांशोऽपि यच्छति ।
नलस्यास्मदुपघ्ना सा भक्तिर्भूताऽवकेशिनी ॥ १४१ ॥

कुतः? अनल्पाय महार्हाय, अल्पं स्तोकं, यत् दत्ते अर्पयति, तत् अल्पदत्तम्, आत्मने अल्पदात्रे जनाय, ह्रियं लज्जां, दत्ते जनयतीत्यर्थः, अधिकदानार्हाय अल्पदानस्य दातुरेव ह्रीकरत्वात् महते नलाय कीर्त्यादिकमल्पमेव प्रदत्तमित्यस्माकं लज्जा युक्तैवेति भावः ॥ १४० ॥

ततः किमत आह, फलेति ।—यच्छतांशः यस्याः भक्तेः, शततमांशः अपि, [ सङ्ख्याशब्द ॰ वृत्तिविषये पूरणार्थत्वं त्रिभागवत् ] फलसीमां फलावधिं, चरमफलरूपमिति यावत्, चतुर्वर्गं धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टय, यच्छति ददाति, नलाय दातुमर्हतीत्यर्थः, [ "पाघ्रा—"इत्यादिना यच्छादेशः ] वयम् उपघ्नः आश्रयः यस्याः सा अस्मदुपघ्ना अस्मद्विषया, [ "उपघ्न आश्रये" इति निपातः ] नलस्य नैषधस्य, सा प्रकर्षतां गता, भक्तिः सेवाविशेषः इत्यर्थः, अवकं शून्यम् ईष्टे इत्यवकेशिनी निष्फला, [ "सुप्यजातौ णिनिः ताच्छील्ये" इति णिनिः "ऋन्नेभ्यो ङीप्" इति ईप् । "वन्ध्योऽफलोऽवकेशी च" इत्यमरः ] भूता सञ्जाता, नलस्यास्मद्विषयकभक्तेः शततमांशेनापि सन्तुष्टैरस्माभिः चतुर्वर्गोऽपि नलाय दातुं शक्यते किन्तु चतुर्वर्गादधिकस्य फलस्याभावात् प्रकृष्टायास्तद्भक्तेरुचितफलस्य दातुमसामर्थ्यात् तद्भक्तिः निष्फलैव सञ्जातेत्यर्थः । तद्भक्तेः चतुर्वर्गदानरूपम् अपि फलं न पर्य्याप्तं किं पुनर्भैमीदानमिति ऋणिनाम् अस्माकं युक्ता एव ह्रीः इति भावः ॥ १४१ ॥

भव्यो न व्यवसायस्ते नले साधुमतौ कले ! ।
लोकपालविशालोऽसौ निषधानां सुधाकरः ॥ १४२ ॥
न पश्यामः कलेस्तस्मिन्नवकाशं क्षमाभृति ।
निचिताखिलधर्मे च द्वापरस्योदयं वयम् ॥ १४३ ॥

भव्य इति ।—हे कले ! साधुमतौ रागद्वेषादिशून्यत्वात् पवित्रचेतसि, नले नैषधे, ते तव, व्यवसायः चेष्टित, विरोधकरणोद्योगः इत्यर्थः, न भव्यः न श्रेयः, न परिणामशुभावह इत्यर्थः, कुतः ? निषधानां निषधाख्यजनपदानां, सुधाकरः चन्द्रः, आह्लादकत्वात् चन्द्रसदृश इत्यर्थः, असौ नलः, लोकपालविशालः लोकपाला इन्द्रादयो दिक्पाला इत्यर्थः, तद्वत् विशेषेण शालते शोभते इति तादृशः, तदंशत्वात् इति भावः ; अतः तदपकारो न परिणामश्रेयस्करः इति निष्कर्षः ॥ १४२ ॥

नेति ।—किञ्च, क्षमाभृति पृथिवीपाले क्षान्तिशीले च, तस्मिन् नले, कलेः कलियुगाधिपतेः कलहस्य च, ("कलिः स्त्री कलिकायां ना शूराजिकलहे युगे" इति मेदिनी) अवकाशं छिद्रम्, आक्रमणावसरमित्यर्थः, वयं न पश्यामः न ईक्षामहे, धर्मेण भूमिं पालयतः क्षान्तस्य कुतः कलिदोषः कलहो वेति भावः । किञ्च निचिताः उपार्जिताः निश्चिताश्च, अखिलाः कृत्स्नाः, धर्माः पुण्यकर्माणि उपनिषदश्च, वेदस्य गूढार्थाः इत्यर्थः येन तादृशे, नले द्वापरस्य भवन्मित्रस्य तृतीययुगस्य, सन्देहस्य च, उदयम् आक्रमणावकाशं प्रकाशञ्च, वयं न पश्यामः, ("द्वापरौ युगसंशयौ" इत्यमरयादवौ) क्षान्तिशीले नले कलहस्यावकाशो न, निश्चितसकलधर्मरहस्ये च नले धर्मसन्देहस्यापि उदयो न सम्भवतीत्यर्थः ॥ १४३ ॥

सा विनीततमा भैमी व्यर्थानर्थग्रहैरहो ! ।
कथं भवद्विधैर्बाध्या प्रमितिर्विभ्रमैरिव ? ॥ १४४ ॥
तं नासत्ययुगं ता वा त्रेता स्पर्द्धितुमर्हति ।
एकप्रकाशधर्माणं न कलिद्वापरौ ! युवाम् ॥ १४५ ॥

---

सेति ।—किञ्च, विनीततमा अतिशयेन विनम्रा, उपमानपक्षे च—विनीतं निराकृतं, तमः अज्ञानं यया सा भ्रमज्ञाननिराशेनीत्यर्थः, सा भैमी दमयन्ती, व्यर्थः निष्फलः, अनर्थग्रहः वैराचरणरूपाकार्याभिनिवेशः येषा तादृशैः, पक्षान्तरे च—व्यर्थो निष्फलः, अनर्थस्य शुक्तौ रजतादेः निष्प्रयोजनस्य, ग्रहो ज्ञानं येषा तादृशैः, भवद्विधैः युष्मादृशैः, प्रमितिः प्रमाज्ञानं, सम्यगनुभूतिरिति यावत, विभ्रमैः मिथ्याज्ञानैः इव,कथं केन प्रकारेण, बाध्या बाधितुं पाडयितुं शक्या ? नैव शक्येत्यर्थः ; अहो! इत्याश्चर्य्ये ; पातिव्रत्यतेजसा दुर्द्धर्षत्वादिति भावः ॥१४४॥

तमिति ।—कलिद्वापरौ ! हे युगविशेषौ !, एकः केवलः, प्रकाश उज्ज्वलः प्रसिद्धो वा, धर्मो न्यायः, न्यायविचार इत्यर्थः, पुण्यं वा स्वभावो वा यस्य तम एकप्रकाशधर्माणम्, एतत् दमयन्त्यामपि योज्यम् ; [ "धर्मादनिच् केवलात्" इत्यनिच्। "धर्माः पुण्ययमन्याय-स्वभावाचारसोमपाः." इत्यमरः ] तं नलं, ता दमयन्तीं वा, नासत्ययुगं न असत्यं नासत्यं किन्तु सत्यमेव, युगं सत्ययुगमित्यर्थ, तथा त्रेता त्रेतायुगमपि, स्पर्द्धितुमर्हति तुलयितुं योग्यं भवति, न तु जेतुमिति भावः ; युवां कलिद्वापरौ युगे, न, तं ता वा स्पर्द्धितुं नार्हथ इति विभक्तिविपरिणामेनान्वयः ; अथवा असत्यस्य युगं कृतयुगापेक्षया अधमयुगं, त्रेता युगविशेषः अग्नित्रयञ्च, ( "त्रेताऽग्नित्रितये युगे" इत्यमरः) स्पर्द्धितुं नार्हति, नासत्ययोर्युगमश्विनोर्द्वयञ्च, तं

करिष्येऽवश्यमित्युक्त्वा करिष्यन्नपि दुष्यसि ।
दृष्टादृष्टा हि नायत्ताः कार्य्यीया हेतवस्तव ॥ १४६ ॥
द्रोहं मोहेन यस्तस्मिन्नाचरेदचिरेण सः ।
तत्पापसम्भवं तापमाप्नुयादनयात् ततः ॥ १४७ ॥
युगशेष ! तव द्वेषस्तस्मिन्नेष न साम्प्रतम् ।
भविता न हितायैतत् वैरं ते वैरसेनिना ॥ १४८ ॥

नलं, स्पर्द्धितुम् अर्हति सौन्दर्य्येणेति च गम्यते ; सुतरां युवां कलिद्वापरौ न स्पर्द्धितुमर्हथ इत्यर्थः ॥ १४५ ॥

करिष्ये इति ।—हे कले ! अवश्यं निश्चितं, करिष्ये विधास्यामि, इत्युक्त्वा एवं कथयित्वा, सर्वथा पापं करिष्यामि इति प्रतिज्ञाय इत्यर्थः, करिष्यन् अपि चिकीर्षुरपि, दुष्यसि दुष्टोऽसि, किमुत कृत्वा इति भावः ; हि तथा हि, कार्य्यस्य इमे कार्य्यीयाः कार्य्योत्पादनयोग्याः, [ "वृद्धाच्छः" ] दृष्टादृष्टा लक्षितालक्षिताः, हेतवः कारणानि, दण्डचीवरादयो दृष्टहेतवः, कालकर्मेश्वरेच्छादयोऽदृष्टा हेतवः इत्यर्थः, तव ते, आयत्ताः अधीनाः, न, किन्तु तत्तत्कार्य्योत्पादिका सामग्री कालवशाददृष्टवशाच्च स्वयमेव सम्पाद्यते, न तु त्वया सम्पादयितु शक्या, तथा च करिष्येऽवश्यमित्युक्त्वा पापकार्य्येऽकृतेऽपि मनसि तच्चिन्तया मुखे तदुच्चारणेन च भवद्विधानां पातकं जातमिति भावः ॥ १४६ ॥

द्रोहमिति ।—किञ्च, यः यो जनः, मोहेन अज्ञतावशेन, मौर्ख्यतया इत्यर्थः, तस्मिन् नले विषये, द्रोहम् अपकारम्, आचरेत् विदधीत, सः जनः, अचिरेण शीघ्रमेव, ततः तस्मात्, अनयात् दुर्नयात् हेतोः, तत्पापसम्भवं नलद्रोहजन्यपातकसम्भूतं, तापं तीव्रयातनाम्, आप्नुयात् लभेत ॥ १४७ ॥

युगेति ।—युगशेष ! युगाना सत्यादीनां शेष चरम !

तत्र यामीत्यसज्ज्ञानं राजसं परिहार्य्यताम्।
इति तत्र गतो मा गाः राजसंसदि हास्यताम्॥ १४९॥
अपरेऽपि दिशामीशा वाचमेनां शचीपतेः।
अन्वमन्यन्त किन्त्वेनां नादत्त युगयोर्युगम्॥ १५०॥
कलिं प्रति कलिं देवा देवान् प्रत्येकशः कलिः।
सोपहासं समैर्वर्णैरित्थं व्यरचयन्मिथः॥ १५१॥

हे कले!, तस्मिन् नले, तव ते, एषः अयं, द्वेषः द्रोहबुद्धिः, न साम्प्रतं न युक्तं, वैरसेनिना नलेन सह, एतत् वैरं विरोधः, ते तव, हिताय मङ्गलाय, न भविता न भविष्यति॥१४८॥

तत्रेति।—हे कले! तत्र स्वयंवरे, यामि यास्यामि, [सामीप्ये वर्त्तमानप्रयोगः] इति एवम्भूतं, राजसं रजःप्रयुक्तम्, असत् ज्ञानं दुर्बुद्धिः, परिहार्य्यतां निरस्यताम्, इति असज्-ज्ञानात्, तत्र राजसंसदि राजसभायां, गतः उपस्थितः सन्, हास्यताम् उपहास्यतां, मा गाः न गच्छेः॥ १४९॥

अपरे इति।—दिशां ककुभाम्, अपरे अन्ये, ईशाः अधिपाः, अग्न्यादयोऽपीत्यर्थः, शचीपतेः इन्द्रस्य, एनां पूर्वोक्तां, वाचम् उपदेशवचनम्, अन्वमन्यन्त अन्वमोदन्त, इन्द्रवाक्यं युक्ततया अभ्यनन्दन् इत्यर्थः, तेऽपि तथैव ऊचुः इति भावः, किन्तु एनां वाचं, युगयोः कलिद्वापरयोः, युगं युग्मं, [कर्त्तृ] न आदत्त न अगृह्णात्, न स्वीचकार इत्यर्थः॥ १५०॥

कलिमिति।—देवाः इन्द्रादयः, कलिं कलियुगं प्रति, कलिश्च देवान् प्रति एकशः प्रत्येकं, [वीप्सायां शस्] समैः वर्णैः उभयसाधारणशब्दैः, श्लिष्टाक्षरैरित्यर्थः, इत्थं वक्ष्यमाणभङ्ग्या, मिथः परस्परं, सोपहासम् उपहाससहितं, कलिं कलहं, व्यरचयन् अकुर्वन्॥ १५१॥

तत्रागमनमेवार्हं वैरसेनौ तया वृते ।
उद्वेगेन विमानेन किमनेनापि धावता ? ॥ १५२ ॥
पुरा यासि वरीतुं यामग्र एव तया वृते ।
अन्यस्मिन् भवतो हाऽऽस्यं वृत्तमेतत्त्वपाकरम् ॥ १५३ ॥

कलहप्रकारमेवाह, तत्रेति ।—हे कले ! तया भैम्या, वैरसेनौ नले, वृते भर्तृत्वेन स्वीकृते सति, तत्र स्वयंवरे, अगमनम् अप्रयाणम् एव, अर्हं युक्तम्, अत एव उद्वेगेन उत्कटजवेन, धावता शीघ्रं गच्छता, अनेन विमानेन व्योमयानेन, किम् ? किं प्रयोजनम् ? इदानीं तत्र गमनं निष्फलमित्यर्थः, अन्यत्र—हे इन्द्र ! तत्र स्वयंवरे, तया वैरसेनौ वृते सति आगमनं ततः प्रत्यावर्त्तनमेव, [ गमेर्ण्यन्तात् ल्युट् ] अर्हं युक्तम्, अथवा, अगमनमेव स्वर्गं प्रति गमनाभाव एव, अर्हं भैमोलाभाद् पृथिव्यागतेः भवाङ्गिर्व्यर्थमनोरथत्वेन इन्द्राण्यादिसविधे मुखं दर्शयितुमशक्यत्वात् सर्वथा स्वर्गो न गन्तव्य एवेति भावः ; तथा अपिधा अपिधानम्, आच्छादनमित्यर्थः, [“आतश्चोपसर्गे” इत्यङ्-प्रत्ययः ] तद्वता आच्छादनवता, निगूहितेन इत्यर्थः, विमानेन मानरहितेन, अनेन मुखदर्शनानुमितेन, उद्वेगेन चित्तचाञ्चल्येन, अपमानजनितमनःक्षोभेणेत्यर्थः, किम् ? अलम् ; तद्गोपनं व्यर्थमेवेत्यर्थः, धैर्यावलम्बनेन भैम्यलाभजन्यदुःखं संवृतमपि मया भावदर्शनादिना सम्यगनुमितमेव, सुतरां दुःखगोपनं व्यर्थमेवेति भावः । अत्र द्वयोः अर्थयोः प्रकृतत्वात् केवलप्रकृतश्लेषः ॥ १५२ ॥

पुरेति ।—हे कले ! या भैमीं, वरीतुं पत्नीत्वेन स्वीकर्त्तुं, पुरा आगामिनि, शीघ्रमेवेत्यर्थः, यासि यास्यसि, [“ यावत्पुरा—” इति भविष्यति लट् । “निकटागामिके पुरा” इत्यमरः ] तया

पत्यौ तया वृतेऽन्यस्मिन् यदर्थं गतवानसि ।
भवतः कोपरोधस्तादक्षमस्य वृथारुषः ॥ १५४ ॥

भैम्या, अग्रे एव तवागमनात् प्राक् एव, अन्यस्मिन् पुरुषान्तरे, वृते स्वीकृते सति, त्रपायाः लज्जायाः, आकरम् आकरायितमित्यर्थः, वृत्तं जातम्, एतत् पुरोवर्त्ति, भवतः तव, आस्यं मुखं, हा! शोचामः इत्यर्थः, [ "अभितः परितः—" इत्यादिना हा-शब्दयोगे द्वितीया। "हा विषाद-शुगर्त्तिषु" इत्यमरः ] अन्यत्र—हे वह्ने! पुरा पूर्वं, यां वरीतुं यासि अयासीः, [ "पुरि लुङ् चास्मे" इति भूते लट् ] त्वमिति शेषः, तया अग्रे एव तव समक्षमेव, अन्यस्मिन् नले, वृते सति भवतस्तव, एतत् प्रत्यक्ष-दृश्यं, वृत्तं वर्त्तुलाकारम, आस्यं मुखं, त्रपामाकरोतीति त्रपाकरं लज्जाकरं, जातमिति शेषः, अत एव हा! शोचामीत्यर्थः ॥ १५३ ॥

पत्याविति।—हे कले! यदर्थं यद्भैमीनिमित्तं, गतवान् गमनवान्, गमनपरः इत्यर्थः, [भावविहितगतशब्दात् मतुप्-प्रत्ययः] असि भवसि, यां वरीतुं गच्छसीत्यर्थः, तया भैम्या, अन्यस्मिन् पत्यौ पूर्वमेव वृते सति, अक्षमस्य प्रती-काराशक्तस्य, अत एव वृथारुषः निष्फलकोपस्य, भवतः तव, कोपरोधः क्रोधस्य उपशमः, स्तात् अस्तु, इदानीं कोपो न कार्य्य इत्यर्थः। [ अस्तेर्लोटि तातङादेशः] अन्यत्र तु—हे यम! यदर्थं गतवानसि पूर्वं गतोऽसि, [ भूते क्तवतुः ] अक्षमस्य भवतः तव, अधस्तात् अधरः, हीनः इत्यर्थः, [ "दिक्शब्देभ्यः सप्तमी—" इत्यादिना अधरशब्दात् प्रथमार्थे अस्ताति-प्रत्ययः, "अस्ताति च" इत्यधरस्याधादेशः, "षष्ठातसर्थप्रत्ययेन" इति

यासि स्मरं जयन् कान्त्या योजनौघं महार्वता।
समूढस्त्वं वृतेऽन्यस्मिन् किं न क्रीस्तेऽत्र पामर! ? ॥१५५॥
नलं प्रत्यनपेतार्त्तिं तार्त्तीयीकतुरीययोः।
युगयोर्युगलं बुद्धा दिवि देवा धियं दधुः ॥ १५६ ॥

---

तद्योगे षष्ठी] अपरः कः? अन्यः कः? त्वत्तः अधमः कश्चिन्नास्ति इत्यर्थः। समानमन्यत् ॥ १५४ ॥

यासीति।—पामर! हे नीच! कले! ("विवर्णः पामरो नीच." इत्यमरः) त्वं कान्त्या सौन्दर्य्येण, स्मरं कन्दर्पं, जयन् अधरीकुर्वन्, प्रसाधनविशेषेण स्मरादपि अधिकरूपवान् सन् इत्यर्थः, तथा महार्वता महाश्वेन, विमानेन इति शेषः, समूढ सम्यक् वाहितश्च सन्, योजनानां चतुष्क्रोशाध्व-मानानाम्, ओघं समूहं, बहुयोजनमित्यर्थः, ("योजनं परमात्मनि। चतुष्क्रोश्याञ्च योगे च" इति मेदिनी) यासि गच्छसि, किन्तु अत्र स्वयंवरे, अन्यस्मिन् वृते सति ते क्रीः लज्जा, न किम्? भविष्यतीति शेषः। अन्यत्र तु,— अत्रप! हे निर्लज्ज!, अमर! वरुण!, यः त्वं कान्त्या निजदेहसौन्दर्य्येण, जनौघं जनसङ्घं, रञ्जयन् प्रीणयन्, महावता बृहदश्वेन, यासि स्म स्वयंवरमयासीः, स त्वं मूढः मूर्खः, असि इति शेषः, अत्र अन्यस्मिन् वृते तव क्रीः न किम्? पूर्ववदलङ्कारः ॥ १५५ ॥

नलमिति।—अथ देवाः इन्द्रादयः, तार्त्तीयीकतुरीययोः तृतीयचतुर्थयोः, ["तीयादीकक् स्वार्थे वा वाच्य." इत्यनेन तार्त्तीयीकसिद्धिः। "चतुरश्छयतावाद्यक्षरलोपश्च" इत्यनेन तुरीयसिद्धिः] युगयोः द्वापरकल्योः, युगलं द्वयं, [कर्म] नलं प्रति अनपेता अनपगता, अस्मद्वाक्येनापि न दूरीभूतेत्यर्थः,

द्वापरैकपरीवारः कलिर्मत्सरमूर्च्छितः।
नलनिग्राहिणीं यात्रां जग्राह ग्रहिलः किल ॥ १५७ ॥
नलेष्टापूर्त्तसम्पूर्त्तेर्दूरदुर्गानमुं प्रति।
निषेधन् निषधान् गन्तुं विघ्नः सज्जघटे घनः ॥ १५८ ॥
कियताऽथ च कालेन कालः कलिरुपेयिवान्।

आर्त्तिः पीडनेच्छा यस्य तत् तादृशं, बुद्ध्वा विविच्य, दिवि स्वर्गे, धियं मतिं, दधुः कृतवन्तः, दिवं गन्तुम् ऐषुरित्यर्थः ॥ १५६ ॥

द्वापरेति।—मत्सरमूर्च्छितः मूर्च्छितमत्सरः, प्रवृद्धनलशुभद्वेष इत्यर्थः, नलनिर्य्यातनाय दृढसङ्कल्प इति यावत्, [ आहिताग्न्यादिषु द्रष्टव्यः ] अत एव ग्रहिलः आग्रहवान्, [ पिच्छादित्वात् मत्वर्थीय इलच्-प्रत्ययः ] कलिः चतुर्थयुगं, द्वापरः तृतीययुगम् एव, एकः केवलः, परीवारः परिजनः यस्य तादृशः, द्वापरमात्रसहायः सन्नित्यर्थः, नलनिग्राहिणीं नलनिग्रहार्थाम् इत्यर्थः, यात्रां गमनं, जग्राह स्वीचकार, किल खलु ॥ १५७ ॥

नलेति।—नलस्य वैरसेनेः, इष्टापूर्त्ताभ्यां क्रतु-खातादिधर्मकर्मभ्याम्, ("अथ क्रतुकर्मेष्टं पूर्त्तं खातादिकर्मणि" इत्यमरः) सम्पूर्त्तेः सम्यक् पूर्णत्वात, बहुधर्मानुष्ठानचिह्नव्याप्तत्वादित्यर्थः, अमुं पापरूपं कलिं प्रति, दूरमत्यर्थं, दुःखेन गच्छन्ति एष्विति दुर्गाः [ "सुदुरोरधिकरणे" इति ड प्रत्ययः ] तान् दूरदुर्गान् अतिदुर्गमान्, निषधान् देशान्, गन्तुं प्रयातुं, निषेधन् निवारयन्, गमनं प्रतिबध्नन्नित्यर्थः, घनः निरन्तरः, विघ्नः प्रत्यूहः, सज्जघटे वक्ष्यमाणरीत्या घटितवानित्यर्थः ; धर्मगुप्ततया निषधदेशाः कलिना दुष्प्रवेशा बभूवुरिति निष्कर्षः ॥ १५८ ॥

कियतेति।—अथ देवानां सन्निधानात् प्रस्थानानन्तरं,

भैमीभर्त्तुरहंमानी राजधानीं महीभुजः ॥ १५९ ॥
वेदानुच्चरतां तत्र मुखादाकर्णयन् पदम् ।
न प्रसारयितुं कालः कलिः पदमपारयत् ॥ १६० ॥
श्रुतिपाठकवक्त्रेभ्यस्तत्राकर्णयतः क्रमम् ।
क्रमः सङ्कुचितस्तस्य पुरे दूरमवर्त्तत ॥ १६१ ॥
तावद्गतिर्धृताटोपा पादयोस्तेन संहिता ।

---

कियता च कालेन किञ्चित्कालेऽतीते इत्यर्थः, अहंमानी अहङ्कारी, कलिः कालः युगात्मकसमयरूपः पापात्मकत्वात् श्यामरूपो वा, भैमीभर्त्तुः दमयन्तीपतेः, महीभुजः राज्ञो नलस्य, राजानः धीयन्ते अस्यामिति राजधानी नगरी तां, [ "करणाधिकरणयोश्च" इत्यधिकरणार्थे ल्युट् ] उपेयिवान् उपगतः, [ निपातनात् साधुः ] ॥ १५९ ॥

अथ पुरप्रवेशे विघ्नप्रकारमाह, वेदानिति ।—तत्र राजधान्यां, वेदान् श्रुतीः, उच्चरताम् उच्चारयताम्, अधीयानानां श्रोत्रियाणाम् इत्यर्थः, मुखात् वदनात्, पदं मन्त्रचतुर्थांशापराख्यं पदजातम्, आकर्णयन् शृण्वन्, कालः समयात्मकः पापात्मको वा, कलिः जघन्ययुगं, पदं चरणं, प्रसारयितुं विस्तारयितुं, न अपारयत् न अशक्नोत् ॥ १६० ॥

श्रुतीति ।—तत्र पुरे, श्रुतिपाठकवक्त्रेभ्यः वेदाध्येतृमुखेभ्यः, क्रमम् उभयापराख्यं पदजातम्, आकर्णयतः शृण्वतः, तस्य कलेः, क्रमः पादन्यासः, सङ्कुचितः प्रतिबद्धः सन्, दूरम् अवर्त्तत प्रवेशाशक्त्या दूरे स्थितः इत्यर्थः,वेदध्वनिप्रभावेणेति भावः ॥१६१॥

तावदिति ।—तावत् तत्पर्य्यन्तं, तेन कलिना, पादयोः चरणयोः, धृताटोपा साडम्बरा, सदर्पा इति यावत्, गतिः विहरणं, संहिता सम्भृता, अवलम्बितुं शक्ता इत्यर्थः,

न वेदपाठिकण्ठेभ्यो यावदश्रावि संहिता ॥ १६२ ॥
तस्य होमाज्यगन्धेन नासा नाशमिवागमत् ।
तत्रातत दृशौ नाशौ क्रतुधूमकदर्थिते ॥ १६३ ॥
अतिथीनां पदाम्भोभिरिमं प्रत्यतिपिच्छिले ।
अङ्गणे गृहिणामत्र खलेनानेन चस्खले ॥ १६४ ॥

---

यावत् यत्पर्यन्तं, वेदपाठिनाम् वेदाध्येतॄणां, कण्ठेभ्यः मुखेभ्यः, संहिता पूर्वोक्तपदक्रमरूपावस्थाद्वयविलक्षणा ऋगादिरूपा, न अश्रावि न श्रुता, तच्छृणोतेस्तुभय एव पादयोरिति भावः । तदेतदारण्यके—"श्रुतम् अन्नाद्यकामो निर्भुजं ब्रूयात् स्वर्गकामः प्रतृण्वन् उभयमन्तरेण" इति ॥ १६२ ॥

तस्येति ।—तत्र पुरे, होमाज्यगन्धेन होमसम्बन्धिघृतपरिमलेन, तस्य कलेः, नासा घ्राणेन्द्रियं, नाशं विध्वस्तम्, अगमत् इव प्रापदिव, तथा असौ कलिः, क्रतुधूमेन यज्ञधूमेन, कदर्थिते दूषिते, अन्धीभूते इत्यर्थः, दृशौ नेत्रे, नातत न अतनिष्ट, नान्मीलयितुं शक्ते इत्यर्थः; हव्यगन्धयज्ञधूमाद्यसहिष्णुतया इति भावः [ तनोतेर्लुङि तङ्, "तनादिभ्यस्तथासोः" इति सिचो लुक् । पक्षे—"अनुदात्तोपदेश—" इत्यादिना अनुनासिकलोपः ] ॥ १६३ ॥

अतिथीनामिति ।—अत्र पुरे, अतिथीनां गृहागतपान्थानां, पदाम्भोभिः चरणप्रक्षालनोदकैः, इमं कलिं प्रति, न तु धार्मिकान् प्रतीति भावः, अतिपिच्छिले सर्वदा जलार्द्रतात् विजिले, अतिमसृणे इत्यर्थः, [ पिच्छादित्वादिलच् प्रत्ययः ] गृहिणां गृहस्थानाम्, अङ्गणे चत्वरे, खलेन दुर्जनेन, अनेन कलिना, चस्खले स्खलितं, पतितमित्यर्थः, [ भावे लिट् ] ॥ १६४ ॥

पुटपाकमिव प्राप क्रतुशुष्ममहोष्मभिः ।
तत्प्रत्यङ्गमिवाकर्त्ति पूर्त्तोर्मिव्यजनानिलैः ॥ १६५ ॥
पितॄणां तर्पणे वर्णैः कीर्णात् वेश्मनि वेश्मनि ।
कालादिव तिलात् कालात् दूरमत्रसदत्र सः ॥ १६६ ॥
स्नातॄणां तिलकैर्मन्त्रैः समन्तदर्भैरिव सः ।
कृपाणीभूय हृदयं प्रविष्टैरिव तस्य तैः ॥ १६७ ॥

पुटेति ।—क्रतुषु यज्ञेषु, शुष्मणाम् अग्नीनाम्, ("अग्नि-र्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः । वह्निः शुष्मा कृष्णवर्त्मा" इत्यमरः) महोष्मभिः प्रबलसन्तापैः, पुटपाकं निरुद्धमुखपात्रे अन्तर्धूमपाकमित्यर्थः, प्राप लेभे इवेत्युत्प्रेक्षा, कलिरिति शेषः, तथा पूर्त्तानां वापीतड़ागादीनाम्, ऊर्मयः तरङ्गा एव, व्यजनानि तालवृन्तानि, तेषाम् अनिलैः वायुभिः, तत्प्रत्यङ्गं तस्य कलेः अङ्गजातं, [ वीप्सायामव्ययीभावः ] अकर्त्ति इव छिन्नमिवेत्युत्प्रेक्षा । [ कृतो छेदने इति धातोः कर्मणि लुङ् ] ॥ १६५ ॥

पितॄणामिति ।—सः कलिः, अत्र पुरे, वेश्मनि वेश्मनि गृहे गृहे, [ वीप्सायां द्विर्भावः ] वर्णैः ब्राह्मणादिवर्णचतुष्टयैः, पितॄणां पितृपितामहादीनाम् अग्निष्वात्तादीनां पितृलोकानाञ्च, तर्पणे तर्पणकर्मणि, पितॄनुद्दिश्य तत्तृप्त्यर्थं सतिलोदकदानरूपपैत्रक्रियाविशेषे इत्यर्थः, कीर्णात् विक्षिप्तात्, कालात् तिलात् कृष्णतिलात्, कालात् मृत्योरिव, ("कालो मृत्यौ महाकाले समये यमकृष्णयोः" इति विश्वः) दूरमत्यर्थम्, अत्रसत् त्रस्तः ॥ १६६ ॥

स्नातॄणामिति ।—कृपाणीभूय खड्गीभूय, तस्य कलेः, हृदयं वक्षःस्थलं, प्रविष्टैः कृतप्रवेशैः इव स्थितैः, तैः प्रसिद्धैः,

पुमांसं मुमुदे तत्र विन्दन् मिथ्यावदावदम् ।
स्त्रियं प्रति तथा वीक्ष्य तमथ म्लानवानयम् ॥ १६८ ॥
यज्ञयूपघनां जज्ञौ स पुरं शङ्कुमङ्कुलाम् ।
जनैर्धर्मधनैः कीर्णां व्यालक्रोडीकृतामिव ताम् ॥ १६९ ॥
स पार्श्वमशकत् गन्तुं न वराकः पराक्रिणाम् ।

स्नातृणां स्नायिनां, कृतस्नानानामित्यर्थः, तिलकैः ऊर्द्ध्वपुण्ड्रादिभिः, सः कलिः, स्वम् आत्मानम्, अन्तः वक्षसि, दीर्णमिव पाटितमिव, मेने बुबुधे ॥ १६७ ॥

पुमांसमिति ।—अथ कलिः, तत्र पुरे, मिथ्या अनृतं, तस्याः वदावदं वक्तारं, [ "चरिचलिपतिवदीनां वा द्वित्वमच्याक् चाभ्यासस्येति वक्तव्यम्" इति माधुः । "वदो वदावदो वक्ता" इत्यमरः ] पुमांसं नरं, विन्दन् प्राप्नुवन्, मिथ्यावादिनं लोकं पश्यन् इत्यर्थः, मुमुदे तुतोष, तद्द्वारा प्रवेष्टुमैच्छदिति भावः ; अथ हर्षलाभानन्तरमेव, तं पुरुषं, स्त्रियं नारीं प्रति, तथा मिथ्या वदन्तं, वीक्ष्य दृष्ट्वा, तस्य ता मिथ्यां नर्मोक्तिं ज्ञात्वेत्यर्थः, म्लानवान् म्लानः, विषण्ण इत्यर्थः, [ "संयोगादेरातो धातोः" इति निष्ठानत्वम् ] अभूत् इति शेषः, स्त्रिया सह नर्मोक्तौ मिथ्याभाषणे दोषाभावादिति भावः ॥ १६८ ॥

यज्ञेति ।—सः कलिः, यज्ञयूपैः यज्ञीयपशुबन्धनस्तम्भैः, घनां निरन्तरां, व्याप्तामित्यर्थः, पुरं नगरीं, शङ्कुमङ्कुलाम् अस्त्रविशेषाकीर्णामिव, तथा धर्मधनैः धार्मिकैः, जनैः लोकैः, कीर्णां व्याप्तां, तां पुरीं, व्यालैः सर्पैः श्वापदैः वा, ("व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनि" इति विश्वः) क्रोडीकृताम् अङ्कीकृतामिव, जज्ञौ ज्ञातवान्, तद्वत् दुरासदाम् अमन्यतेत्यर्थ ॥ १६९ ॥

स इति ।—वराकः तुच्छः, सः कलिः, पराक्रिणा कृच्छ्रव्रत-

मासोपवासिनां छाया-लङ्घने घनमस्खलत् ॥ १७० ॥
आवाहितां द्विजैस्तत्र गायत्रीमर्कमण्डलात्।
स सन्निदधतीं पश्यन् दृष्टनष्टोऽभवद्भिया ॥ १७१ ॥
स गृहे गृहिणां पूर्णे घने वैखानसैर्वृते।
यत्याधारेऽमरागारे क्वापि न स्थानमानशे ॥ १७२ ॥

विशेषचारिणां, "द्वादशाहोपवासस्तु पराकः परिकीर्त्तितः" इति स्मरणात्; पार्श्वं समीपं, गन्तुं यातुं न अशकत् न समर्थोऽभूत्, [ शक्नोतेर्लिदित्त्वात् च्लेरङादेशः ] तथा मासोपवासिनां मासं व्याप्य अनशनव्रतिनान्तु, छायालङ्घने प्रतिबिम्बाक्रमणेऽपि, घनं भृशम्, अस्खलत् अभ्रंशत्, दुरासदत्वात् तपस्विनाम् इति भावः ॥ १७० ॥

आवाहितामिति।—सः कलिः, तत्र पुरे, द्विजैः विप्रैः, आवाहिताम् आहूताम्, अत एव अर्कमण्डलात् सूर्य्यबिम्बात्, सन्निदधतीं समीपमागच्छन्तीं, गायत्रीं गायत्रीदेवीं, पश्यन् अवलोकयन्, भिया भयेन, तत्प्रभावादिति भावः; दृष्टनष्टः पूर्वं दृष्टः ईक्षितः, अनन्तरं नष्टः अदृष्टः, सद्यः एव अदर्शनं गतः इत्यर्थः, [स्नातानुलिप्तवत् पूर्वकालसमासः] अभवत् अजायत ॥ १७१ ॥

स इति।—सः कलिः, गृहिणां पूर्णे गृहस्थैः व्याप्ते, [ सम्बन्धसामान्ये षष्ठी ] गृहे भवने, तथा वैखानसैः वानप्रस्थैः, ( "वैखानसो वनवासी वानप्रस्थश्च तापसः" इति यादवः ) वृते वेष्टिते, घने निरन्तरे, "घने" इत्यत्र "वने" इति पाठः साधुः; तथा यतिना सन्न्यासिनाम्, आधारे आश्रये, यत्यधिष्ठिते इत्यर्थः, अमरागारे देवालये, क्वापि कुत्रापि, स्थानं स्थितिं, न आनशे न लेभे, [ "अत आदेः" इत्यभ्यासदीर्घः "अश्नोतेश्च" इति नुड़ागमः ] ॥ १७२ ॥

हिंसागवीं मखे वीक्ष्य रिरंसुर्धावति स्म सः।
सा तु सौम्यवृषासक्ता खरं दूरं निरास तम्॥ १७३॥
क्वापि नापश्यदन्विष्यन् हिंसामात्मप्रियामसौ।
स्वमित्रं तत्र न प्रापदपि मूर्खमुखे कलिम्॥ १७४॥
मौनेन व्रतनिष्ठाना स्वाक्रोशं मन्यते स्म सः।

हिंसेति।—सः कलिः, मखे गोमेधाख्ययज्ञे, हिंसाया गौः तां हिंसागवीम् आलम्भार्थानं गाम इत्यर्थः, [ "गोरतद्धितलुकि" इति समासान्तष्टच्] वीक्ष्य दृष्ट्वा, रिरंसुः चित्तविनोदनेच्छुः सन् इत्यर्थः, निजाधिपत्यसूचकं गोवधोद्यमं दृष्ट्वेति भावः, अन्यत्र —रन्तुम् इच्छुः, विहर्त्तुम् इच्छुरित्यर्थः, [रमः सनन्तादु-प्रत्ययः] धावति स्म द्रुतम् अगात्, सा गौस्तु, सौम्यः सोमदैवतो यागः, सः एव वृषः धर्मः, तत्र आसक्ता सङ्गता, धर्माभिन्नाविषयो सतीत्यर्थः, सुन्दरवृषभाक्रान्ता चेति गम्यते, ("वृषो धर्मे बलीवर्दे" इति मेदिनी। बलीवर्दो वृषभः) अत एव खरं रलयोरभेदात् खलं, क्रूरमित्यर्थः, खरं गर्दभञ्च, तं कलिं, दूरं विप्रकृष्टदेशं, निरास निचिक्षेप, वृषाक्रान्ताया गोः विजातीयत्वात् खरनिराकरणं युक्तमिति भावः॥ १७३॥

क्वापीति।—असौ कलिः, तत्र पुरे, क्वापि कस्मिन्नपि स्थाने, आत्मनः स्वस्य, प्रियाम् इष्टां, हिंसां जीवहत्यादि-रूपाम्, अन्विष्यन् मृग्यमाणोऽपि, न अपश्यत् न अवालोकयत्, तथा मूर्खमुखे मूढवक्त्रेऽपि, स्वस्य निजस्य, मित्रं सखायम्, अनुकूलमिति यावत्, कलिं कलहञ्च, न प्रापत् न अलभिष्ट, प्रजानां तथा नियमनादिति भावः॥ १७४॥

मौनेनेति।—सः कलिः, व्रतनिष्ठाना नियमावलम्बिनां, मौनेन वाक्संयमनेन, स्वस्य आत्मनः, आक्रोशं शापं, मन्यते स्म

वन्द्यवन्दारुभिर्जज्ञौ स्वशिरश्च पदाहतम् ॥ १७५ ॥
मुनीनां स वृसीः पाणौ पश्यन्नाचामतामपः ।
मेने घनैरमी हन्तुं शप्तुं मामद्भिरुद्यताः ॥ १७६ ॥
मौञ्जीभृतो धृताषाढानाशशङ्के स वर्णिनः ।
रज्ज्वाऽमी बद्धमायान्ति हन्तुं दण्डेन मां ततः ॥१७७॥

बुध्यते स्म, मौनिनो भूत्वा मामेते शशपन् इति अमन्यत इत्यर्थः; तथा वन्द्यानाम् अभिवाद्यानां, वन्दारुभिः वन्दनशीलैः, गुरुजनान् नमस्कुर्वाणैर्नैरित्यर्थः, [ "शृवन्द्योरारुः" ] स्वशिरः निजमस्तकञ्च, पदेन चरणेन, आहतं ताड़ितमिव, जज्ञौ मेने, तत् सर्वं शास्त्रविधिपालनं तस्य तादृग्दुःखजनकं सञ्जातम् इति भावः ॥ १७५ ॥

मुनीनामिति ।—सः कलिः, मुनीनां तापसानां, पाणौ करे, वृसीः आसनानि, उपवेशनार्थं गृहीताः इति भावः, ( "व्रतिनामासनं वृसी" इत्यमरः ) तथा आचामताम् उपस्पृशताम्, एषां पाणौ इति शेषः, अपश्च जलानि, पश्यन् अवलोकयन्, अमी मुनयः, मां घनैः मुद्गरैः, ("द्रुघणे मुद्गरघनौ" इति वैजयन्ती ) हन्तुं ताडयितुं, तथा अद्भिः जलैः, शप्तुञ्च अभिशापं दातुञ्च, उद्यताः प्रवृत्ताः, इति मेने बुबुधे, तादृग्दुःखं प्राप इत्यर्थः ॥ १७६ ॥

मौञ्जीति ।—सः कलिः, मौञ्जीभृतः मुञ्जतृणनिर्मित-मेखलाधारिणः, धृताषाढ़ान् गृहीतपालाशदण्डान्, [ "विशाखा-षाढ़ादण् मन्थदण्डयोः" इत्यण्-प्रत्ययः । "पालाशो दण्ड आषाढ़ः" इत्यमरः ] वर्णिनः ब्रह्मचारिणः, [ "वर्णात् ब्रह्म-चारिणि" इति इनि-प्रत्ययः ] दृष्ट्वेति शेषः, अमी वर्णिनः, मां रज्ज्वा पाशेन, मुञ्जमयेनेति भावः, बद्धुं संयन्तुं, ततः बन्धना-

दृष्ट्वा पुरः पुरोडाशमासीदुत्त्रासदुर्मनाः ।
मन्वानः फणिनोस्त्रस्तः स मुमोचाश्रु च स्रुचः ॥ १७८ ॥
आनन्दन्मदिरादानं विन्दन्नेष द्विजन्मनः ।
दृष्ट्वा सौत्रामणीमिष्टिं तं कुर्वन्तमदूयत ॥ १७९ ॥
अपश्यत् यावतो ब्रह्म-विदां ब्रह्माञ्जलीनसौ ।

नन्तरं, दण्डेन पाशाग्रयष्ट्या, हन्तुं ताड़यितुञ्च, आयान्ति आगच्छन्ति,इति आशशङ्के सन्दिदेह,तथा विव्यथे इत्यर्थः ॥१७७॥

दृष्ट्वेति।—सः कलिः, पुरः अग्रे, पुरोडाशं यज्ञीयपिष्टकपिण्डविशेषं, ("पुरोडाशो हविर्भेदे चमस्या पिष्टकस्य च। रसे सोमलतायाश्च हुतशेषे च कीर्त्तितः॥" इति विश्वः) दृष्ट्वा अवलोक्य, उत्त्रासेन भयेन, दुर्मनाः विह्वलः, आसीत् अभूत्, स्वघातार्थं पाषाणभ्रमादिति भावः; तथा स्रुचः होमादिपात्राणि, फणिनः भुजङ्गाः, मन्वानः शङ्कमानः, त्रस्तः भीतः सन्, अश्रु वाष्पं, मुमोच च तत्याज च। अत्र स्रुचु फणिनोभ्रान्त्या भ्रान्तिमदलङ्कारः ॥ १७८ ॥

आनन्ददिति।—एषः कलिः, द्विजन्मनः ब्राह्मणस्य, मदिरायाः सुरायाः, आदानं ग्रहणं, विन्दन् जानन्, पश्यन् इत्यर्थः, आनन्दत् अमोदत, शास्त्रमर्य्यादालङ्घनं दृष्ट्वेति भावः; अथ तं मदिरामाददानं ब्राह्मणं, सौत्रामणीं सौत्रामण्याख्याम्, इष्टिं यागं, कुर्वन्तं सम्पादयन्तं, दृष्ट्वा अवलोक्य, ज्ञात्वा इत्यर्थः, अदूयत पर्य्यतप्यत, "सौत्रामण्यां सुरां पिबेत्" इति श्रुतेः तस्मिन् यज्ञे सुराग्रहणस्य शास्त्रविहितत्वेन पापाभावात् निराशोऽभूत् इति भावः ॥ १७९ ॥

अपश्यदिति।—असौ कलिः, ब्रह्मविदां वेदाध्यायिनां, यावतः यावत्सङ्ख्यकान्, ब्रह्माञ्जलीन् वेदाध्ययनकालीनपाणि-

उदडीयन्त तावन्तस्तस्यास्राञ्जलयो हृद: ॥ १८० ॥
स्नातकं घातुकं जज्ञे जज्ञौ दान्तं कृतान्तवत्।
वाचंयमस्य दृष्ट्यैव यमस्येव बिभाय स: ॥ १८१ ॥
स पाषण्डजनान्वेषी प्राप्नुवन् वेदपण्डितम्।
जलार्थीवानलं प्राप्य पापस्तापादपासरत् ॥ १८२ ॥

द्वयमम्पुटान्, "संहृत्य हस्तावध्येयं स हि ब्रह्माञ्जलि: स्मृत:" इति स्मरणात्, ("अञ्जलि: पाठे ब्रह्माञ्जलि:" इत्यमर:) अपश्यत् ऐक्षत, तस्य कले:, हृद: हृदयात्, तावन्त: तावत्सङ्ख्यका:, अस्राञ्जलय: रक्ताञ्जलय:, उदडीयन्त उड्डीना:, निर्गता इत्यर्थ: ॥ १८० ॥

स्नातकमिति।—स: कलि:, स्नातकं समाप्तवेदं जनं, ["स्नाताद्वेदसमाप्तौ" इति कन्-प्रत्यय:] घातुकं स्वस्य हन्तारं, ["लषपत—" इत्यादिना उकञ्-प्रत्यय:] जज्ञे मेने, दान्तं तप:क्लेशसहं, तपस्विनमित्यर्थ:, ("तप:क्लेशसहो दान्त:" इत्यमर:) कृतान्तवत् यमतुल्यं, जज्ञौ बुबुधे, तथा वाचं यच्छतीति वाचंयम: मौनव्रती तस्य, ["वाचि यमो व्रते" इति खच्-प्रत्यय:। "वाचंयमपुरन्दरौ च" इति निपातनात् साधु:] दृष्ट्यैव दर्शनेनैव, यमस्येव शमनस्येव, बिभाय भीतवान्, [भियो लिट्] सर्वत्रैषा तप:प्रभावस्य दुर्द्धर्षत्वात् भीतिरिति द्रष्टव्यम् ॥ १८१ ॥

स इति।—पाप: क्रूर:, स: कलि:, पाषण्डजनान्वेषी शास्त्रदूषकजनानुसन्धायी सन्, वेदपण्डितं वैदिकं, प्राप्नुवन् लभमान:, पश्यन्नित्यर्थ:, जलार्थी पानीयाभिलाषी, जन इति शेष:, अनलम् अग्निं, प्राप्येव लब्ध्वेव, तापात् तत्तेजोजन्यसन्तापाद्धेतो:, अपासरत् अपसृत:, ब्रह्मतेजस: पाषण्डदाहकत्वादिति भाव: ॥१८२॥

तत्र ब्रह्महणं पश्यन्नतिसन्तोषमानशे।
निर्वर्ण्य सर्वमेधस्य यज्वानं ज्वलति स्म सः॥ १८३॥
यतिहस्तस्थितैस्तस्य राम्भैरारम्भि तर्जना।
दुर्जनस्याजनि क्लिष्टिर्गृहिणां वेदयष्टिभिः॥ १८४॥
मण्डलत्यागमैच्छत् वीक्ष्य स्थण्डिलशायिनः।
पवित्रालोकनादेष पवित्रासमविन्दत॥ १८५॥

तत्रेति।—सः कलिः, तत्र पुरे, ब्रह्महणं ब्राह्मणं घातयन्तं, जनमिति शेषः, ["ब्रह्मभ्रूणवृत्रेषु—" इति क्विप्] पश्यन् विलोकयन्, अति अतितरां, सन्तोषं हर्षम्, आनशे प्राप इत्यर्थः, अथ तं ब्रह्महणं सर्वमेधस्य सर्वमेधाख्ययागस्य, यज्वानं विधिनेष्टवन्तं, यथाविधि होतारमित्यर्थः, निर्वर्ण्य निश्चित्य, ज्वलति स्म सन्तप्तोऽभूत्, "ब्रह्मणे ब्राह्मणमालभेत" इति श्रुत्या सर्वमेधे ब्राह्मणादिसर्वालम्भविधानात् तस्य धर्मत्वादिति भावः॥१८३॥

यतीति।—दुर्जनस्य खलस्य, तस्य कलेः, यतीनां मस्करिणां, परिव्राजकानामित्यर्थः, हस्तेषु करेषु, स्थितैः वर्त्तमानैः, राम्भैः वेणुदण्डैः, "त्रिदण्डेन कमण्डलुः" इति स्मृतेरिति भावः; (राम्भस्तु वैणवः" इत्यमरः) तर्जना त्रासनम्, आरम्भि कृतेत्यर्थः; तथा गृहिणां गृहस्थाश्रमिणां, वेदयष्टिभिः सन्दर्भवेणुदण्डैश्च, "वैणुमान् स कमण्डलुः" इति स्मृतेः इति भावः; क्लिष्टिः क्लेशः, अजनि जनिता, [जनेर्ण्यन्तात् कर्मणि लुङ्] ("यतिः पाराशरी भीमस्तत्कर्म मस्करी यतिः। बहृदर्भा वेदयष्टिर्दम्भो राम्भस्तु वैणवः॥" इति सर्वत्र यादवः)॥ १८४॥

मण्डलेति।—एषः कलिः, स्थण्डिलशायिनः अनास्तृतभूमिशयनव्रतिनः, ["व्रते" इति इनिः। "यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ" इत्यमरः) वीक्ष्य दृष्ट्वा, मण्डल-

अपश्यज्जिनमन्विष्यन्नजिनं ब्रह्मचारिणाम् ।
चपणार्थी सदीचस्य स चाचपणमैचत ॥ १८६ ॥
जपतामचमालासु बीजाकर्षणदर्शनात् ।
स जीवाकृष्टिकष्टानि विपरीतदृगन्वभूत् ॥ १८७ ॥
त्रिसन्ध्यं तत्र विप्राणां स पश्यन्नघमर्षणम् ।

त्यागं देशत्यागम् एव, ऐच्छत् अवाञ्छत्, तथा पवित्राणां कुशानाम, ("अस्त्री कुशं कुशो दर्भः पवित्रम्" इत्यमरः) आलोकनात् दर्शनात्, पवेः कुलिशात्, त्रासं भयम्, अविन्दत अलभत, "यथा शक्रकरे वज्रं तथा विप्रकरे कुशा." इति स्मृतेरिति भावः ॥ १८५ ॥

अपश्यदिति।—सः कलिः, जिनं जिनाख्य बौद्धदैवतं, स्वमित्रमिति भावः, अन्विष्यन् मृग्यन्, ब्रह्मचारिणा ब्रह्मचर्य्य-परायणानाम्. अजिनम् आसनार्थं मृगचर्म, जिनराहित्यञ्च, अपश्यत् ऐचत, किञ्च चपणार्थी स्वमित्रबौद्धसन्न्यासिनोऽन्वेषी, सदीचस्य दीचितस्य राज्ञ, अचपणं पाशकदेवनं, चपणक-राहित्यञ्च, ऐचत अपश्यत्, राजसूये अभिषेचनीये अष्टावचै-र्दिव्यन्तीति श्रवणात् ; तदुभयमप्यस्य दु सहमिति भावः ॥१८६॥

जपतामिति।—विपरीतदृक् वेदविरुद्धदर्शी, सः कलिः, जपताम् इष्टमन्त्रस्य असकृदुच्चारणं कुर्वतां, जनानामिति शेषः, अचमालासु जपमालिकासु, स्थिताना बीजानां पद्मादि-बीजानां, जपसङ्ख्यानार्थानामिति भावः, आकर्षणस्य आकृष्टेः, पुनः पुनर्भ्रामणस्येति यावत्, दर्शनात् अवलोकनात्, जीवाकृष्टि-कष्टानि निजप्राणाकर्षणदुःखानि, अन्वभूत् अनुभूतवान् ॥१८७॥

त्रिसन्ध्यमिति।—स कलिः, तत्र पुरे, त्रिसन्ध्यं सन्ध्यात्रयं, [ "समाहारैकत्वे वा तस्य" इति नपुंसकत्वम्, अत्यन्तसंयोगे

परमैच्छत् दृशोरेव निजयोरपकर्षणम् ॥ १८८ ॥
अद्राक्षीत् तत्र कञ्चिन्न कलिः परिचितं क्वचित् ।
भैमीनलव्यलीकाणु-प्रश्नकामः परिभ्रमन् ॥ १८९ ॥
तपःस्वाध्याययज्ञानामकाण्डद्विष्टतापसः ।
स्वविद्विषां श्रियं तस्मिन् पश्यन्नुपततापं सः ॥ १९० ॥
कञ्चं तत्रोपनम्राया विश्वस्या वीक्ष्य तुष्टवान् ।

---

द्वितीया ] विप्राणां ब्राह्मणानाम्, अघमर्षणं तत्तन्मन्त्रसाध्यं पापहरं चुलुकोदकेन नासास्पर्शाभिमन्त्रितं क्रियाविशेषं, पश्यन् अवलोकयन्, परं केवलं, निजयोः दृशोरेव स्वनेत्रयोरेव, अपकर्षणम् उत्पाटनम्. ऐच्छत् अवाञ्छत्, अघमर्षणक्रियां दृष्ट्वा नेत्रोत्पाटनवत् दुःखमाप इति भावः ॥ १८८ ॥

अद्राक्षीदिति ।—कलिः युगाधमः, भैमीनलयोः दमयन्तीनैषधयोः, व्यलीकाणोः अकार्य्यलेशस्य, किञ्चिन्मात्रदोषस्यापीत्यर्थः, ("व्यलीकमप्रियाकार्य्यवैलक्ष्येष्वपि पीड़ने" इति विश्वः ) प्रश्नं पृच्छां, कामयते वाञ्छति इति तत्कामः सन्, [ "शीलिकामिभिक्ष्याचारिभ्यो णः" ] तत्र पुरे, परिभ्रमन् विचरन्, क्वचित् कुत्रापि. कञ्चिदपि कमपि, परिचितं संस्तुतं, जनमिति शेषः, न अद्राक्षीत् न ऐक्षिष्ट ॥ १८९ ॥

तप इति ।—अकाण्डे अनवसरे, अकारणमित्यर्थः, द्विष्टा विरुद्धाः, तापसा तपस्विनः येन तादृशः, सः कलिः, तस्मिन् पुरे, स्वविद्विषा निजविरोधिनां, तपः चान्द्रायणादिचर्य्या, स्वाध्यायः वेदपाठः,यज्ञाः सोमादयः तेषां,श्रियं समृद्धिं,पश्यन् अवलोकयन्, उपततापं सन्तप्तो बभूव, शत्रुवृद्धेरसहनीयत्वादिति भावः ॥१९०॥

कञ्चमिति ।—स कलिः, तत्र पुरे, उपनम्रायाः उपासकस्य समीपं स्वयमागतायाः, विश्वस्याः सर्वस्याः, सजातीयाया

स मल्लौ तं विभाव्याथ वामदेवाभ्युपासकम्॥ १८१॥
वैरिणी शुचिता तस्मै न प्रवेशं ददौ भुवि।
न वेदध्वनिरालम्बमम्बरे विततार च॥ १८२॥
दर्शस्य दर्शनात् कष्टमग्निष्टोमस्य चानशे।
जुघूर्ण पौर्णमासेक्षी सोमं सोऽमन्यतान्तकम्॥ १८३॥

विजातीयायाः गम्यायाः अगम्यायाश्चेत्यर्थः, स्त्रिया इति शेषः, कम्रं कमितारं, रन्तारमित्यर्थः, कञ्चन पुरुषमिति शेषः, [ "नमिकम्पि—" इत्यादिना र-प्रत्ययः ] वीक्ष्य दृष्ट्वा, तुष्टवान् तुतोष, तस्य महापातकित्वेन स्वाश्रयलाभाशयेति भावः; अथ अनन्तरं, विशेषनिरीक्षणानन्तरमित्यर्थः, तं कम्रं पुरुषं, वामदेवः तन्नामदेवताविशेषः, तस्य अभ्युपासकं पूजकं, विभाव्य विमृश्य, मल्लौ विषसाद, तदुपासकानां "न काञ्चन स्वयमागतां परिहरेत्" इति श्रुतेस्तदुपभोगस्य धर्म्यत्वादिति भावः॥१८१॥

वैरिणीति।—वैरिणी विरोधिनी, कलेरिति भावः, शुचिता लोकानां वाह्याभ्यन्तरशुद्धता गोमयाद्यनुलेपनादिजनितभूमिशुद्धता च, तस्मै कलये, भुवि निषधभूमौ, प्रवेशम् अन्तर्गमनं, न ददौ न दत्तवती, तथा अम्बरे च नगरसम्बन्धिनभसि च, वेदध्वनिः ब्रह्मघोषः, आलम्बम् आलम्बनम्, अवस्थानावकाशमित्यर्थः, न विततार न ददौ॥ १८२॥

अनन्तरश्लोकद्वयं प्रक्षिप्तमिति पूर्वैरुपेक्षितं, तथाऽपि क्वचित् स्थितत्वात् व्याख्यायते, दर्शस्येत्यादि।—सः कलिः, दर्शस्य दर्शयागस्य, तथा अग्निष्टोमस्य तदाख्ययागविशेषस्य च, दर्शनात् अवलोकनात्, कष्टं महत् दुःखम्, आनशे प्राप, तथा पौर्णमासं पूर्णमासेष्टिम्, ईक्षते पश्यति इति पौर्णमासेक्षी पौर्णमासयागदर्शी सन्, जुघूर्ण बभ्राम, मूर्च्छितप्रायोऽभूदित्यर्थः,

तेनादृश्यन्त वीरघ्ना न तु वीरहणो जिनाः ।
नापश्यत् सोऽभिनिर्मुक्तान् जीवन्मुक्तानवैक्षत ॥ १८४ ॥
स तुतोषाश्नतो विप्रान् दृष्ट्वा स्पृष्टपरस्परान् ।
होमशेषीभवत्सोम-भुजस्तान् वीक्ष्य दूनवान् ॥ १८५ ॥

तथा सौमं सोमयागञ्च, अन्तकं मृत्युम्, अमन्यत अबुध्यत, मरणयातनामिव यातनामन्वभूदित्यर्थः ॥ १८३ ॥

तेनेति ।—तेन कलिना, वीरघ्नाः क्षात्रधर्मानुसारेण रणे वीरघातिनः, जनाः इति शेष, [ "अमनुष्यकर्त्तृके च" इति चकारादक्, अत एव "क्वचिन्मनुष्यकर्त्तृके च" इति कौमारं सूत्रम् ] अदृश्यन्त ऐक्ष्यन्त, तु किन्तु, वीरहणः क्षत्रियघातिनः, जिनाः भट्टभास्कराः अग्नित्यागिनः वा वीरहा वा, "एष देवानां योऽग्निमुद्वासयत" इति श्रुतेरित्यनेन उपलक्षिताः इति यावत्, न, अदृश्यन्त इति पूर्वक्रियया अन्वयः; सः कलिः, अभिनिर्मुक्तान् यान् सुप्तान् अभि सूर्य्योऽस्तमेति ते अभिनिर्मुक्ताः तान्, [ मुञ्चतः कर्मणि क्तः ] सूर्य्यास्तकाले निद्रितान् आचारहीनान्, न अपश्यत् न व्यलोकयत्, किन्तु जीवन्मुक्तान् आत्मारामान् पुण्यान् जनान्, अवैक्षत अपश्यत् ॥ १८४ ॥

स इति ।—सः कलिः, स्पृष्टं कृतस्पर्शं, परस्परम् अन्योऽन्यं यैः तान् स्पृष्टपरस्परान् परस्परस्पर्शपूर्वकमित्यर्थः, अश्नतः भक्षयतः, विप्रान् ब्राह्मणान्, दृष्ट्वा विलोक्य, तुतोष मुमुदे, भोजनकाले परस्परस्पर्शस्य निषेधात् तद्विपरीतव्यवहारिणस्तान् दृष्ट्वा स्वाश्रयलाभाशया सन्तुष्ट इत्यर्थः, अथ तान् पूर्वोक्तप्रकारेणाश्नतो विप्रान्, होमशेषीभवन्तं होमावशिष्टं, सोमं सोमलताचूर्णं, भुञ्जते अश्नन्ति इति भुजः, वीक्ष्य दृष्ट्वा, ज्ञात्वा इति यावत्, दूनवान् परितप्तवान्, दुःखमनुभूतवानित्यर्थः,

दृष्ट्वा जनं रजोजुष्टं तुष्टिं प्राप्नोत् झटित्यसौ।
तं पश्यन पावनस्नानावस्थं दुःस्थस्ततोऽभवत्॥ १८६॥
अधावत् क्वापि गां वीक्ष्य हन्यमानामयं मुदा।
अतिथिभ्यस्तु तां बुद्ध्वा मन्दं मन्दो न्यवर्त्तत॥ १८७॥

---

"न सोमेनोच्छिष्टो भवति"इति श्रुतेः, "इक्षुदण्डे तिले सोमे नोच्छिष्टो मनुरब्रवीत्"इति स्मृतेश्च सोमभक्षणे परस्परस्पर्श-दोषाभावादिति भावः॥ १८५॥

दृष्ट्वेति।—असौ कलिः, रजोभिः धूलिभिः, जुष्टं सेवितं, व्याप्तमिति यावत्, जनं लोकं, दृष्ट्वा वीक्ष्य, झटिति द्राक्, तुष्टिं सन्तोषं, प्राप्नोत् अलभत, धूलिमलिनं जनं दृष्ट्वा अनोऽयं निषिद्धच्छागखरादिखुरोत्थधूलिव्याप्त इति निश्चित्य स्वाश्रय-लाभसम्भावनया तुतोषेत्यर्थः; ततः विशेषनिरीक्षणानन्तर-मित्यर्थः, तं रजोजुष्टं जनं, पावनं पवनसम्बन्धि, यत् स्नानं गोरजःस्नानमित्यर्थः, तादृशी अवस्था दशा यस्य तादृशं, वायव्यस्नाननिरतमित्यर्थः, पश्यन् विलोकयन्, जानन् इत्यर्थः, दुःस्थः दूनः, दुःखित इत्यर्थः, अभवत् अजायत; "वारुणन्तु जलस्नानमापो हिष्ठेति मान्त्रिकम्। वायव्यं गोरजःस्नान-माग्नेयं भस्मनोदितम्॥ यत्तु सातपवर्षेण दिव्यं तदिति पञ्चधा॥" इति मनूक्तपञ्चविधस्नानान्तर्गतस्य वायव्यस्नानस्य वैधत्वात् तदवस्थं तं दृष्ट्वा दुःखितोऽभवदित्यर्थः॥ १८६॥

अधावदिति।—मन्दः मूढः, अयं कलिः, क्वापि कुत्रचित् प्रदेशे, गां सौरभेयीं, हन्यमानाम् आलभ्यमाना, वीक्ष्य दृष्ट्वा, मुदा हर्षेण, अधावत् द्रुतमगच्छत्, तु किन्तु, तां गाम्, अतिथिभ्यः अतिथ्यर्थं हन्यमानां, बुद्ध्वा ज्ञात्वा, मन्दं शनैः शनैः, न्यवर्त्तत व्यरमत्, सखेदं प्रत्यागच्छदित्यर्थः; "महोक्षं

हृष्टवान् स द्विजं दृष्ट्वा नित्यनैमित्तिकत्यजम् ।
यजमानं निरूप्यैनं दूरं दीनमुखोऽद्रवत् ॥ १९८ ॥
आननन्द निरीक्ष्यायं पुरे तत्रात्मघातिनम् ।
सर्वस्वारस्य यज्वानमेनं दृष्ट्वाऽथ विव्यथे ॥ १९९ ॥
क्रतौ महाव्रते पश्यन् ब्रह्मचारीत्वरीरतम् ।
जज्ञौ यज्ञक्रियामज्ञः स भाण्डाकाण्डताण्डवम् ॥ २०० ॥

वा महाजं वा श्रोत्रियायोपकल्पयेत्" इति विधानादिति भावः ॥ १९७ ॥

हृष्टवानिति ।—सः कलिः, नित्यनैमित्तिकत्यजं दानहोमादिकर्मत्यागिनं, [ क्विप् ] द्विजं विप्रं, दृष्ट्वा वीक्ष्य, हृष्टवान् मुमुदे, अथ एनं पूर्वोक्तद्विजं, यजमानं यज्ञे दीक्षितं, निरूप्य निश्चित्य, दीनमुखः विषण्णवदनः सन्, दूरं विप्रकृष्टदेशम्, अद्रवत् अधावत्, पलायत इत्यर्थः, दीक्षितो न ददाति न जुहोति न वदतीति दीक्षितस्य तन्निषेधे तेन दोषाभावादिति भावः ॥१९८॥

आननन्देति ।—अयं कलिः, तत्र तस्मिन्, पुरे राजधान्याम्, आत्मघातिनम् आत्मविनाशिनं, निरीक्ष्य विलोक्य, आननन्द स्वाश्रयलाभाशया तुतोष, अथ एनम् आत्मघातिनं, सर्वस्वारस्य सर्वस्वारनामात्माहुतिकयागविशेषस्य, तथा रघुवंशेऽप्युक्तं—"यो मन्त्रपूतां तनुमप्यहौषीत्" इति ; यज्वानं यागकारिणं, दृष्ट्वा वीक्ष्य, तद्‌याजिनं विदित्वेत्यर्थः, विव्यथे सन्तताप, "सः अन्त्येष्टौ सर्वस्वाराख्ये यज्ञे आत्मानमेव पशुमन्त्रैः संस्कृतं घातयित्वा यज्ञभागमर्पयति" इति श्रुतेः तत्रात्मघातस्य वैधत्वेन दोषाभावात् व्यथितोऽभवदित्यर्थः ॥ १९९ ॥

क्रताविति ।—अज्ञः मूर्खः, सः कलिः, महाव्रते महाव्रताख्ये, क्रतौ यागे, ब्रह्मचारिणः वर्णिनः, इत्वर्याः कुलटायाश्च,

यज्वभार्य्याश्वमेधाश्व-लिङ्गालिङ्गिवराङ्गताम्।
दृष्ट्वाऽऽचष्ट स कर्त्तारं श्रुतेर्भण्डमपण्डितः॥ २०१॥
अथ भीमजया जुष्टं व्यलोकत कलिर्नलम्।
दुष्टदृग्भिर्दुरालोकं प्रभयेव प्रभाविभुम्॥ २०२॥
तयोः सौहार्दसान्द्रत्वं पश्यन् शल्यमिवानशे।
मर्मच्छेदमिवानच्छ स तन्नर्मालिभिर्मिथः॥ २०३॥

रतं मैथुनं, "महाव्रते ब्रह्मचारिपुंश्चल्योः सम्प्रवादः" इति श्रुतिविहितं ग्राम्यभाषणादिकं वा, [ "दृग्नशृजिमर्त्तिभ्यः क्तरप्"। "असती कुलटेत्वरी" इत्यमरः ] पश्यन् विलोकयन्, यज्ञक्रियां यागव्यापारं, भाण्डानाम् अश्लीलभाषिणाम्, प्रकाण्डताण्डवम् असमयकृतोद्धतनृत्यमिव, जज्ञौ मेने, भण्डचेष्टितममन्यतेत्यर्थः॥ २००॥

यज्वेति।—अपण्डितः मूर्खः, सः कलिः, यज्वभार्य्यायाः यजमानस्य पत्न्याः, अश्वमेधे तदाख्ययज्ञे, अश्वस्य यज्ञियाश्वस्य, लिङ्गेन मेहनेन, आलिङ्गिवराङ्गता संयोजितयोनितां, "निरायत्याश्वस्य शिश्नं महिष्युपस्थे निधत्ते" इति श्रुतिविहितामिति भावः; दृष्ट्वा वीक्ष्य, श्रुतेः कर्त्तारं वेदप्रणेतारं, भण्डम् अनज्ञनम्, अश्लीलविषयोपदेष्टारमिति यावत्, आचष्ट अकथयत्, केनचित् भण्डेन प्रणीताः वेदाः इति बभाषे इत्यर्थः॥२०१॥

अथेति।—अथ पूर्वोक्तरूपदर्शनानन्तरं, कलिः चतुर्थयुगाधिपतिः, भीमजया भैम्या, जुष्टं सेवितं, दुष्टदृग्भिः पापदृष्टिभिः, अन्यत्र—रोगोपहतदृष्टिभिः, दुरालोकं दुर्दर्शनं, नलं वैरसेनिं, प्रभया दीप्त्या सूर्य्यभार्य्यया महादेव्या च, जुष्टं प्रभाविभुं प्रभाकरं, सूर्य्यम् इवेत्यर्थः, व्यलोकत अपश्यत्॥ २०२॥

तयोरिति।—सः कलिः, तयो भैमीनलयोः, सुहृदोः भावः

अमर्षादात्मनो दोषात् तयोस्तेजस्वितागुणात्।
स्प्रष्टुं दृशाऽप्यनीशस्तो तस्मादप्यचलत् कलिः ॥ २०४ ॥
अगच्छदाश्रयान्वेषी नलद्वेषी स निःश्वसन्।
अभिरामं गृहारामं तस्य राममसश्रियः ॥ २०५ ॥
रक्षिलक्षवृतत्वेन बाधनं न तपोधनैः।

सौहार्दं प्रेम, [ "युवादिभ्योऽण्" "हृद्भग—"इत्यादिना उभयपदवृद्धिः ] तस्य सान्द्रत्वं घनत्वं, पूर्णत्वमित्यर्थः, सौहार्दोत्कर्षमिति यावत, पश्यन् अवलोकयन्, शल्यम् अस्त्रविशेषाघातम, आनशे इव प्राप इव, तथा मिथः परस्परं, तयोः भैमीनलयोः, नर्मोक्तिभिः परिहासविशेषः, मर्मच्छेदं हृदयच्छेदनम्, आनच्छ इव प्राप इव, अनुबभूव इवेत्यर्थः ॥ २०३ ॥

अमर्षादिति।—कलिः कलियुगम, अमर्षात् क्रोधात, आत्मनः स्वस्य, दोषात् पापिष्ठत्वापराधात्, तयोः भैमीनलयोः, तेजस्वितागुणाच्च प्रभावसम्पन्नत्वाच्च, तौ भैमीनलौ, दृशाऽपि दृष्ट्याऽपि, किमुत करेणेति भावः; स्प्रष्टुं परास्रष्टुं, द्रष्टुमपि इत्यर्थः, अनीशः अक्षमः सन्, तस्मादपि तत्स्थानादपि, अचलत पलायत ॥ २०४ ॥

अगच्छदिति।—नलद्वेषी निषधेशविरोधी, अत एव आश्रयान्वेषी नलनिर्यातनार्थं तत्र निवासार्थी सः कलिः, निःश्वसन् कुत्रापि तदलाभात् उच्छ्वसन् सन्, राममसश्रियः रामचन्द्रसमानकान्तेः, तस्य नलस्य, अभिराम रमणीय, गृहारामं प्रासादसमीपवर्त्तिक्रीडावनम, अगच्छत् प्रायात्; कवेरेतत्काव्यप्रणयनकाले रामस्य सम्भूतत्वेन सृष्टिप्रवाहस्य अनादित्वेन वा सत्ययुगीनस्य नलस्य रामसादृश्यं बोध्यम् ॥२०५॥

रक्षीति।—रक्षिणां गृहपालानां, लक्षेण शतसहस्रेण,

मेने मानी मनाक् तत्र स्वानुकूलं कलिः किल ॥ २०६ ॥
दलपुष्पफलैर्देव-द्विजपूजाभिसन्धिना ।
स नलेनार्जितान् प्राप तत्र नाक्रमितुं द्रुमान् ॥ २०७ ॥
अथ सर्वोङ्गिदासक्ति-पूरणाय स रोपितम् ।

बहुसङ्ख्यकप्रासादरचिपुरुषेणेत्यर्थः, यत् वृतत्वं परिवेष्टितत्वं तेन हेतुना, तत्र गृहारामे, तपोधनैः तपस्विभिः कर्त्तृभिः, बाधनं पीड़नं, न, अस्ति स्वस्येति शेषः, प्रासादसमीपवर्त्तितया बहुजनसङ्कुलत्वेन नित्यं धर्मकार्य्यनिरतानां निर्जनप्रियाणां तपस्विनामभावात् धर्मद्वेषिकलेः बाधाभावः इति भावः ; अत एव मानी अभिमानवान्, अहङ्कारीत्यर्थः, कलिः अन्त्ययुगं, मनाक् ईषत्, स्वस्य अनुकूलं प्रियम्, अभीष्टसाधनयोग्यस्थान-मित्यर्थः, मेने बुबुधे किल, तमाराममिति शेषः ; सर्वदा वैधकार्य्यकारिणां मुनीनां तत्र सद्भावे धर्मकार्य्यासहिष्णुः कलिः तत्रारामे वस्तुं न शक्नुयात्, रचिबाधने सत्यपि तत्रा-दृश्यतया प्रवेष्टुं सर्वदा धर्मालोचनाविरहेण तत्र निर्बाधं वस्तुञ्च शक्नुयात् एवम् आरामादन्यत्र सर्वत्रैव धर्माचरणदर्शनात् तद-पेक्षया आरामे वासस्य ईषत् स्वानुकूलत्वमिति भावः ॥२०६॥

दलेति ।—सः कलिः, तत्र गृहारामे, दलैः पत्रैः, पुष्पैः कुसुमैः, फलैः शस्यैश्च, देवानां हरिहरादीनां, द्विजानां ब्राह्मणानाञ्च, पूजायाः अर्चनायाः, अभिसन्धिना अभिप्रायेण हेतुना, नलेन नैषधेन, अर्जितान् रोपितान्, द्रुमान् वृक्षान्, विभीतकतरूनिति भावः ; आक्रमितुम् अधिष्ठातुं, न प्राप न शशाक इत्यर्थः, तेषां धर्मकार्य्योपयोगित्वेन स्वस्य च पापरूप-त्वेन तानारोढुं नापारयदित्यर्थः ॥ २०७ ॥

अथेति ।—अथ उद्यानप्रवेशानन्तरं, सः कलिः, कर्मणि वट्टते

विभीतकं ददर्शैकं कुटं धर्मेऽप्यकर्मठम् ॥ २०८ ॥
स तं नैषधसौधस्य निकटं निष्कुटध्वजम् ।
बहु मेने निजं तस्मिन् कलिरालम्बनं वने ॥ २०९ ॥
निष्पदस्य कलेस्तत्र स्थानदानात् विभीतकः ।
कलिद्रुमः परं नामोदासीत् कल्पद्रुमोऽपि सः ॥ २१० ॥

---

इति कर्मठं कर्मक्षमं, तन्न भवतीति अकर्मठं, ["कर्मणि घटोऽठच्" इति सप्तम्यन्तकर्मशब्दात् अठच्-प्रत्ययः] धर्मे धर्मकार्य्ये, अकर्मठमपि अनुपयुक्तमपि, सर्वेषां समस्तजातीयानाम्, उद्भिदां तरुगुल्मलतादीनाम्, आसत्तेः विद्यमानतायाः, पूरणाय पूर्त्त्यै, रोपितम् अर्जितम्, अत्रोद्याने सर्वविधतरुगुल्मादयः सन्तीति कीर्त्तिस्थापनायारोपितं न तु देवद्विजपूजाद्यर्थं, तत्पत्रादीनां देवपूजाद्यनर्हत्वादिति भावः; विभीतकं कर्षफलं नाम, एकं कञ्चित्, कुटं वृक्षं, ("वृक्षो महीरुहः शाखी अनोकहः कुटः शालः" इत्यमरः) ददर्श अवलोकयामास ॥ २०८ ॥

स इति ।—सः कलिः, तस्मिन् वने गृहारामे, नैषधसौधस्य नलप्रासादस्य, निकटं नेदिष्ठं, निष्कुटस्य गृहारामस्य, ("गृहारामस्तु निष्कुटः" इत्यमरः) ध्वजं चिह्नस्वरूपमित्यर्थः, तं विभीतकं, निजम् आत्मीयम्, आलम्बनम् आश्रयं, बहु अधिकं यथा तथा, मेने विवेचयामास; धर्मकार्य्यानुपयोगिनि तत्र सुखवाससम्भवात् प्रत्युत तस्मिन्नवस्थानेन नलदोषविचार-सम्भवाच्च तं स्वावलम्बनं बहु मेने इति भावः ॥ २०९ ॥

निष्पदस्येति ।—सः कलिवासत्वात् प्रसिद्धः, विभीतकः कर्षफलवृक्षः, निष्पदस्य निराश्रयस्य, क्वचिदपि स्थानमप्राप्तवत इत्यर्थः, कलेः युगाधमस्य, तत्र आरामे, स्थानदानात् आवासप्रदानात्, परं केवलं, कलिद्रुमः तत्र वासात्

ददौ पदेन धर्मस्य स्थातुमेकेन यत् कलिः ।
एकः सोऽपि तदा तस्य पदं मन्येऽमिलत् ततः ॥ २११ ॥
उद्भिद्विरचितावासः कपोतादिव तत्र सः ।
राज्ञः साग्नेर्द्विजात् तस्मात् सन्त्रासं प्राप दीक्षितात् ॥२१२॥

---

कलिसम्बन्धिवृक्ष एव, ("त्रिलिङ्गस्तु विभीतकः । नाऽक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ॥" इत्यमरः) न आसीत् न अभवत्, किन्तु कल्पद्रुमः कल्पवृक्षोऽपि, आसीत् अभवत्, वासरूपसङ्कल्पितार्थदानादिति भावः ॥ २१० ॥

ददाविति ।—यत् यस्मात्, कलिः युगाधमः, धर्मस्य पुण्यस्य, एकेन पदेन चतुर्थांशेन, स्थातुं वर्त्तितुं, ददौ दत्तवान्, सृष्टि-प्रवाहस्य अनादितया प्राक्तनकलियुगे कलिः धर्मस्य एकेन पदेन स्थानमर्पितवानित्यर्थः, ततः तस्मात्, तदा नलराज्यकाले परवर्त्तिसत्ययुगे, एकः केवलः, सोऽपि विभीतकतरुरेव, तस्य कलेः, पदं स्थानम्, अमिलत् जातम्, एकपदस्थानदानात् एकवृक्षरूपस्थानं प्राप्तमित्यर्थः, इति मन्ये विवेचयामि, अहमिति शेषः ; दानानुरूपं फलमश्नुते इति भावः ॥ २११ ॥

उद्भिदिति ।—उद्भिदि विभीतकवृक्षे, विरचितावासः कल्पित-स्थितिः, अन्यत्र—उद्भिदा तृणगुल्मादिना, विरचितावासः निर्मितगृहः, सः कलिः, कश्चित् पुरुषश्च, साग्नेः आहिताग्नेः, सजाठराग्नेश्च, द्विजात् द्विजातेः क्षत्रियात्, अण्डजाच्च, दीक्षितात् अग्निहोत्रे कृतदीक्षात्, अन्यत्र—ईक्षितात् गृहोपरि दृष्टात्, तस्मात् राज्ञः नलात्, कपोतात् अङ्गारभक्षपारावत-विशेषादिव, सन्त्रासम् अभिशापभयं, गृहे अग्निसंयोगभयञ्च, प्राप लेभे, [ लिट् ] अन्यत्र—प्रापत् अलब्धिष्ट ; इति [ लुङ् ] अत्र साग्नेर्दीक्षितादिति विशेषणद्वयेन नलस्य कलिं प्रति

विभीतकमधिष्ठाय तथाभूतेन तिष्ठता।
तेन भीमभुवोऽभीकः स राजर्षिरधर्षि न॥ २१३॥
तमालम्बनमासाद्य वैदर्भीनिषधेशयोः।
कलुषं कलिरन्विष्यन्नवात्सीत् वत्सरान् बहून्॥ २१४॥

तपःप्रभावजन्याभिशापप्रदानसामर्थ्यं राज्ञो द्विजादिति विशेषण-द्वयेन च तस्य क्षत्रियराजोचितदण्डदानसामर्थ्यं सूचितम्॥२१२॥

विभीतकमिति।—तथाभूतेन नलरन्ध्रान्वेषिणा, अत एव विभीतकम् अक्षवृक्षम्, अधिष्ठाय अधिरुह्य, तिष्ठता विद्यमानेन, तेन कलिना, भीमभुवः भैम्याः, अभिकामयते इति अभीकः कमिता, कामुक इत्यर्थः, [“अनुकाभिकाभीकः कमिता” इति कन्प्रत्ययान्तो निपातनात् साधुः। “कामुके कमिताऽनुकः कम्रः कामयिताऽभीकः” इत्यमरः] सः राजर्षिः मुनितुल्यो राजा नलः, न अधर्षि न अभ्यभावि, न पीडयितुं शक्त इत्यर्थः; भूतावासापराख्यं विभीतकवृक्षमाश्रित्य तिष्ठता तथा तादृशेन, अतिमहता इत्यर्थः, भूतेन देवयोनिविशेषेण, भीमभुवो भयङ्करस्थानात्, अभीको निर्भीकः, राजर्षि, राजश्रेष्ठः, धार्मिकः इत्यर्थः, भूतापसारकमन्त्रवादी इत्यर्थो वा, न पराभूयते इति ध्वनिः; तेन च राजमन्त्रवादिनोरौपम्यं गम्यते॥ २१३॥

तमिति।—कलिः तुरीययुगं, तं वृक्षम्, आलम्बनम् आश्रयम्, आसाद्य प्राप्य, वैदर्भीनिषधेशयोः भैमीनलयोः, कलुषं दुष्कृतं, पापानुष्ठानमित्यर्थः, अन्विष्यन् अनुसन्दधत्, बहून् अनेकान्, वत्सरान् वर्षान्, [अत्यन्तसंयोगे द्वितीया] अवात्सीत् उवास, [वसेर्लुङि सिचि, “सः स्यार्द्धधातुके” इति सस्य तत्वं, “वदव्रज—” इत्यादिना वृद्धिः]॥ २१४॥

यथाऽऽसीत् कानने तत्र विनिद्रकलिका लता।
तथा नलच्छलासक्ति-विनिद्रकलिकालता॥ २१५॥
दोषं नलस्य जिज्ञासुर्बभ्राज द्वापरः क्षितौ।
नादोषः कोऽपि लोकस्य मुखेऽस्तीति दुराशया॥ २१६॥
अमुष्मिन्नारामे सततनिपतद्दोहदतया
प्रसूनैरुन्निद्रैरनिशममृतांशुप्रतिभटे।

यथेति।—तत्र तस्मिन्, कानने वने, यथा विनिद्रकलिका उन्निद्रकोरका, लता व्रततिः, आसीत् अवर्त्तत, तथा तद्वदेव, नलस्य वैरसेनेः, छले छलने, रन्ध्रान्वेषणे इत्यर्थः, आसक्त्या अभिनिवेशेन, विनिद्रः जागरूकः, सततमप्रमत्त इत्यर्थः, कलिः कलिरूपः, कालः समयो यस्मिन् तस्य भावः तत्ता, आसीत् इति शेषः, अत्रार्थभेदेऽपि विनिद्रकलिकालतेति शब्दमात्र-साम्यात्तयोरिति सादृश्यमुक्तम्॥ २१५॥

दोषमिति।—अथ द्वापरः तृतीययुगमपि, नलस्य नैषधस्य, दोषम् अनाचारं, जिज्ञासुः ज्ञातुमिच्छुः सन्, लोकस्य जनस्य, मुखे वाचि, अदोषः निर्दोषः, कोऽपि कश्चिदपि, नास्ति न विद्यते, इति दुराशया दुष्टवाञ्छया, लोको हि सर्वत्र दोषदृष्टिपरत्वात् सर्वथा दोषलेशं द्रक्ष्यति वक्ष्यति चेति दुराग्रहेण इत्यर्थः, क्षितौ भुवि, बभ्राज रराज, बभ्रामेति यावत्॥ २१६॥

अमुष्मिन्निति।—सततम् अविरतं, निपतद्दोहदतया मिल-द्धूपादिसंस्कारतया, ("तरुगुल्मलतादीनामकाले कुशलैः कृतम्। पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रिया॥" इति शब्दार्णवः) उन्निद्रैः विकसितैः, प्रसूनैः कुसुमैः, अनिशं निरन्तरम्, अमृतांशुप्रतिभटे चन्द्रस्पर्द्धिनि, चन्द्रकल्पे इत्यर्थः,

असौ बद्धालम्बः कलिरजनि कादम्बविहग-
च्छदच्छायाभ्यङ्गोचितरुचितया लाञ्छनमृगः ॥ २१७ ॥
स्फारे तादृशि वैरसेनिनगरे पुण्यैः प्रजानां घनं
विघ्नं लब्धवतश्चिरादुपनतिस्तस्मिन् किलासीत् कलेः।
एतस्मिन् पुनरन्तरेऽन्तरमितानन्दः स भैमीनला-
वाराद्धुं व्यधित स्मरः श्रुतिशिखावन्दारुचूडं धनुः ॥२१८॥

अमुष्मिन् अस्मिन्, आरामे गृहोद्याने, बद्धालम्बः कृताश्रयः, असौ कलिः युगविशेषः, कादम्बविहगस्य कलहंसस्य, यः छदः पक्षः, धूम्रवर्ण इति भावः, तस्य छाया कान्तिः, तया अभ्यङ्गे लेपने, उचिता अभ्यस्ता, रुचिः स्पृहा यस्य तस्य भावः तत्ता तया कलहंसपक्षवत् कृष्णवर्णतया इत्यर्थः, लाञ्छनमृगः कलङ्कशशः, अजनि जनितः, चन्द्रे कलङ्कवत् उद्यानचन्द्रस्य अयं कृष्णवर्णकलङ्करूपः अभूत् इति भावः ॥ २१७ ॥

स्फारे इति।—तादृशि तथाभूते, स्फारे विशाले, वैरसेनेः नलस्य, नगरे पुरे, निषधराज्ये इत्यर्थः, प्रजानां लोकानां, पुण्यैः धर्म्मैरेव, घनं निरन्तरं, विघ्नं कार्य्यप्रतिबन्धं, लब्धवतः प्राप्तवतः, अपूर्णमनोरथस्य इत्यर्थः, कलेः कलियुगस्य, तस्मिन्नुद्याने, चिरात् बहुकालम्, उपनतिः स्थितिः, अभूत् आसीत् किल, एतस्मिन् अन्तरे अस्मिन् अवकाशे पुनः, अन्तः अन्तःकरणे, अमितानन्दः अतिहृष्टः, सः अमोघलक्ष्यः, स्मरः कन्दर्पः, भैमीनलौ दमयन्तीनैषधौ, आराद्धुम् उपासितुं, वशीकर्त्तुमिति यावत्, श्रुतिशिखाम् आकर्णाग्र, वन्दारुः उपनता इति यावत्, चूड़ा कोटिः यस्य तत् तादृशम्, आकर्णाकृष्टम् इत्यर्थः, धनुः चापं, व्यधित विहितवान्, बाणेन संयोजितवानित्यर्थः, कलेराक्रमणात् प्राक् तौ यथाकामं कामसुखम् अन्वभूताम् इति निष्कर्षः ॥२१८॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
यातः सप्तदशः स्वसुः सुसदृशि छन्दःप्रशस्तेर्महा-
काव्ये तद्भुवि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ २१९ ॥

---

# अष्टादशः सर्गः।

सोऽयमित्थमथ भीमनन्दिनीं दारसारमधिगम्य नैषधः।
तां हृतीयपुरुषार्थवारिधेः पारलम्भनतरीमरीरमत् ॥ १ ॥

---

श्रीहर्षमिति।—स्वसुः सोदर्य्याः, एककर्तृत्वात् एकोदरत्व-व्यपदेशः। छन्दःप्रशस्तेः छन्दोबद्धराजचरितवर्णनाग्रन्थस्य, स्वकृतेरिति भावः, सुसदृशि अत्यन्ततत्सदृशि। तस्मात् श्रीहर्षात् भवतीति तद्भुवि। व्याख्यातमन्यत् ॥ २१९ ॥

---

सोऽयमिति।—अथ इति वाक्यारम्भे अध्यायारम्भे वा, सः प्रसिद्धः, अयं नैषधः नलः, इत्थम् एवं, पूर्ववर्णितप्रकारेणेत्यर्थः, दारसारं दारेषु स्त्रीषु, सारं वरं, श्रेष्ठमित्यर्थः, स्त्रीरत्नमिति यावत्, ("सारो बले स्थिरांशे च न्याय्ये सारं वरे तथा" इति शाश्वतः) भीमनन्दिनीं भैमीं, [नन्द्यादित्वात् ल्यु-प्रत्ययः] अधिगम्य प्राप्य, हृतीयपुरुषार्थवारिधेः कामसागरस्य, पार-लम्भने परतीरप्राप्तौ, तरीं नावं, तरणीस्वरूपामित्यर्थः, तां दमयन्तीम्, अरीरमत् रमयामास, [रमेर्णौ चङ्]। अस्मिन् सर्गे रथोद्धतावृत्तम्—"रो नराविह रथोद्धता लगौ" इति लक्षणात् ॥ १ ॥

आत्मवित् सह तया दिवानिशं भोगभागपि न पापमाप सः।
आहृता हि विषयैकतानता ज्ञानधौतमनसं न लिम्पति ॥२॥
न्यस्य मन्त्रिषु स राज्यमादरादाराराध मदनं प्रियासखः।
नैकवर्णमणिकोटिकुट्टिमे हेमभूमिभृति सौधभूधरे ॥ ३ ॥

आत्मेति।—आत्मवित् आत्मज्ञानी, जीवब्रह्माभेदबुद्धिशाली इति यावत्, सः नलः, तया भैम्या सह, दिवानिशम् अहोरात्रं, [ द्वन्द्वैकवद्भावः। अत्यन्तसंयोगे द्वितीया ] भोगभाक् अपि विषयसुखमनुभवन् अपीत्यर्थः, [ "भजो ण्विः" ] पापम् इन्द्रियानिग्रहजनितप्रत्यवायं, न आप न लेभे। ननु "अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" इति निषेधात् कथं दिवानिशं विषयलोलुपस्य न पापमत आह, आहृतेति।—हि तथाहि, आहृता कृत्रिमा, विषयेषु शब्दादिषु, एकतानता एकाग्रता, ("एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि" इत्यमरः) ज्ञानेन तत्त्वबुद्ध्या, धौतमनसं निर्मलान्तःकरणं, जनमिति शेषः, न लिम्पति न स्पृशति, न पातयति इत्यर्थः; "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा" इति भगवद्वचनादिति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २ ॥

न्यस्येति।—सः राजा, मन्त्रिषु अमात्येषु, राज्यं राज्यभारं, न्यस्य निधाय, नैकवर्णाः अनेकवर्णाः, [ नञर्थस्य न-शब्दस्य सुप्सुपेति समासः ] मणिकोटयः असङ्ख्यरत्नानि यस्मिन् तादृशं, कुट्टिमं बद्धभूमिः यस्मिन् तथोक्ते, हेमभूमिभृति सुवर्णमयभुयुक्ते, [ भृञः क्विप् ] सौधः प्रासाद एव, भूधरः पर्वतः तस्मिन्, पर्वतसदृशे अत्युच्चप्रासादे, प्रियासखः भैमीद्वितीयः सन्, आदरात् आग्रहादित्यर्थः, मदनं कन्दर्पम्, आरराध सिषेवे,

वीरसेनसुतकण्ठभूषणीभूतदिव्यमणिपङ्क्तिशक्तिभिः।
कामनापनमदर्थतागुणात् यस्तृणीकृतसुपर्वपर्वतः॥ ४॥
धूपितं यदुदराम्बरं चिरं मेचकैरगुरुसारदारुभिः।
जालजालधृतचन्द्रचन्दनक्षोदमेदुरसमीरशीतलम्॥ ५॥
क्वापि कामशरवृत्तवर्त्तयो यं महासुरभितैलदीपिकाः।
तेनिरे वितिमिरं स्मरस्फुरद्दोःप्रतापनिकराङ्कुरश्रियः॥६॥

शच्या सह मेरौ इन्द्रः इव सः भैम्या सह तत्र सौधे रतिसुख-मन्वभूदिति भावः॥ ३॥

अथ चतुर्विंशतिश्लोक्या सौधं वर्णयति, वीरेत्यादि।—यः सौधः, वीरसेनसुतस्य नलस्य, कण्ठभूषणीभूतायाः गलदेशस्य आभरणस्वरूपायाः, दिव्यायाः अलौकिक्याः, मणिपङ्क्तेः रत्नमालिकायाः, शक्तिभिः अचिन्त्यप्रभावैः, कामनया सङ्कल्प-मात्रेणैव, उपनमदर्थता सम्प्राप्तेष्टवस्तुता, सैव गुणः उत्कर्षः तस्मात्, तृणीकृतः अवधीरितः, सुपर्वपर्वतः सुराचलः, सुमेरु-भूधरः इत्यर्थः येन तादृशः, न केवलमौन्नत्येन सम्पदाऽपि सुमेरोरधिकः सः इति निष्कर्षः॥ ४॥

धूपितमिति।—यस्य सौधस्य, उदराम्बरम् अभ्यन्तराकाशं, मध्यदेशमित्यर्थः, चिरं नित्यं, मेचकैः कृष्णैः, अगुरुणः तदाख्यचन्दनविशेषस्य, सारदारुभिः अभ्यन्तरस्थदृढकाष्ठैः, धूपितं तद्गन्धवासितमित्यर्थः, किञ्च, जालजालेषु गवाक्ष-समूहेषु, धृतैः स्थितैः, चन्द्रचन्दनक्षोदैः कर्पूरश्रीखण्डचूर्णैः, मेदुरेण सान्द्रसुगन्धेन, मृदुसुरभिणेति यावत्, समीरेण वायुना, शीतलं हिमं, दूरीभूतधूपजसन्तापमित्यर्थः॥ ५॥

क्वापीति।—कामशरः चूतमुकुलः, कर्पूरविशेषः इति वा, तेन वृत्ताः निष्पन्नाः, वर्त्तयः दशाः यासां तादृश्यः, महासुरभीणि

कुङ्कुमैणमदपङ्कलेपिताः क्षालिताश्च हिमबालुकाऽम्बुभिः।
रेजुरध्वततशैलजस्रजो यस्य मुग्धमणिकुट्टिमा भुवः॥ ७॥
नैषधाङ्गपरिमर्दमेदुरामोदमार्दवमनोज्ञवर्णया।
यद्भुवः क्वचन सूनशय्ययाऽभाजि भालतिलकप्रगल्भता॥८॥

अतिशयसुगन्धीनि, तैलानि तिलजानि यासां तादृश्यः, दीपिकाः प्रदीपाः, स्मरस्य कामस्य, स्फुरतोः स्पन्दमानयोः, भैमीनलक्ष्यधार्थं चलितयोरित्यर्थः, दोषोः भुजयोः, प्रताप-निकरस्य तेजोराशेः, अङ्कुराणां प्ररोहाणां, श्रीः शोभा इव, श्रीः यासां तादृश्यः सत्यः, यं सौधं, क्वापि कुत्रचित्, भैमीनला-लङ्कृतदेशे इत्यर्थः वितिमिरं तमोरहितं, तेनिरे चक्रिरे॥ ६॥

कुङ्कुमेति।—कुङ्कुमैणमदयोः काश्मीरजकस्तूरिकयोः, पङ्केन कर्दमेन, घृष्टकुङ्कुमसृगमदाभ्यामित्यर्थः, लेपिताः दिग्धाः, च किञ्च, हिमबालुकाऽम्बुभिः कर्पूरोदकैः, ("अथ कर्पूरमस्त्रियाम। घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमबालुका" इत्यमरः) क्षालिताः धौताः, तथा अध्वसु प्रवेशमार्गेषु, तताः विस्तृताः, शैलजस्य शैलेयस्य, शिलाकुसुमाख्यगन्धद्रव्यस्येत्यर्थः, स्रजः माला यासु तादृश्यः, तथा मुग्धाः सुन्दराः, मणीनां रत्नानां, मणिमया इत्यर्थः, कुट्टिमाः निबद्धप्रदेशाः यासु तादृश्यः, ("कुट्टिमोऽस्त्री निबद्धा भूः" इति यादवः) यस्य सौधस्य, भुवः अङ्गणादिप्रदेशा इत्यर्थः, रेजुः शुशुभिरे। चूतवृक्षवत् सामान्यविशेषभावाद-पौनरुक्त्यम्। समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारः॥ ७॥

नैषधेति।—नैषधस्य नलस्य, अङ्गपरिमर्देन शरीरमर्दनेन, अङ्गलोठनेनेत्यर्थः, मेदुरः सान्द्रः, आमोदः गन्धः, मार्दवं मृदुत्वं, मनोज्ञः मनोरमः, वर्णश्च शौभ्रञ्चेत्यर्थः यस्याः तादृश्या, सूनशय्यया कुसुमशयनेन, यस्य सौधस्य, भुवः

क्वापि यन्निकटनिष्कुटस्फुटत्कोरकप्रकरसौरभोर्मिभिः।
सान्द्रमध्रियत भीमनन्दिनीनासिकापुटकुटीकुटुम्बिता ॥ ९ ॥
रुद्धसर्वऋतुवृक्षवाटिकाकोरकृत्तसहकारशीकरैः।
यज्जुषः स्म कुलमुख्यमाशुगो घ्राणवातमुपढौकयत्यति ॥ १० ॥

प्रदेशविशेषाः, क्वचन कुत्रचित्, जनस्य शयनस्थाने इति यावत्, भालतिलकस्य ललाटदेशे तिलकधारणस्य, प्रगल्भता स्पर्द्धा, शोभेति यावत्, अभाजि प्राप्ता इति निदर्शनालङ्कारः ॥ ८ ॥

क्वापीति।—क्वापि क्वचित् प्रदेशे, यस्य सौधस्य, निकटे समीपस्थे, निष्कुटे गृहारामे, स्फुटतां विकसतां, कोरकप्रकराणां कलिकानिवहानां, सौरभोर्मिभिः परिमलपरम्पराभिः, सान्द्रं निरन्तरं, भीमनन्दिनी भैमी, तस्याः नासिकापुटयोः नासारन्ध्रयोः, कुटीकुटुम्बिता गार्हस्थ्यं, नित्यस्थायित्वमित्यर्थः, अध्रियत अधारि, नन्दनविहारसुखम् अनुभूयते तया इति भावः ॥ ९ ॥

रुद्धेति।—आशुगः वायुः, वहिश्चरो वायुरिति भावः, ("आशुगोऽर्के शरे वायौ" इति यादवः) कुलमुख्यं वंशमध्ये श्रेष्ठं, नलदमयन्त्योः तत्परिजनानाञ्च घ्राणरन्ध्रे स्थानलाभादिति भावः, यज्जुषः यत्सौधसेविनः, जनस्य इति शेषः, घ्राणवातं निःश्वाससमारुतं, रुद्धाः अवरुद्धाः, एकत्र सम्भूय स्थिता इत्यर्थः, [ रुधेः कर्मणि क्तः ] ऋद्धा इति पाठे—ऋद्धाः समृद्धाः, [ ऋध्यतेः कर्त्तरि क्तः ] सर्वे समस्ताः, ऋतवः वसन्तादयः यस्यां तादृश्याम्, [ "ऋत्यकः" इति प्रकृतिभावः ] एकत्रावस्थितषड्ऋतुकायामित्यर्थः, वृक्षवाटिकायां गृहसंलग्नोपवने, कोरैः शुकैः, कृत्तानां खण्डितानां, सहकाराणां सुरभिचूतवृक्षाणां, शीकरैः अम्बुकणैः, जलकणामिश्रित-

कुत्रचित् कनकनिर्मिताखिलः क्वापि यो विमलरत्नजः किल ।
कुत्रचित् रचितचित्रशालिकः क्वापि चास्थिरविधैन्द्रजालिकः ॥११॥
चित्रतत्तदनुकार्य्यविभ्रमाधायिनैकविधरूपरूपकम् ।
वीक्ष्य यं बहु धुवन् शिरो जराबातकी विधिरकल्पि शिल्पिराट् ॥१२॥

---

मृदुभीरभैरवैरित्यर्थः, उपदाभिः उपायनैः, अञ्चति स्म पूजयति स्म ॥ १० ॥

कुत्रचिदिति ।—यः सौधः, कुत्रचित् क्वापि प्रदेशे, कनकनिर्मितं सुवर्णमयम्, अखिलं समग्रांशं यस्य सः तादृशः, क्वापि कुत्रचित् प्रदेशे, विमलरत्नेभ्यः उज्ज्वलमणिभ्यः, जातः निर्मितः, भास्वररत्नघटित इत्यर्थः, किल इति प्रसिद्धं, कुत्रचित् कस्मिन्नपि भागे, रचिताः निर्मिताः, चित्रशालिकाः आलेख्यगृहाः यस्य तादृशः, बहुचित्रसमन्वितगृहविशिष्टः चित्राङ्कितगृहविशिष्टो वा इत्यर्थः, क्वापि च कस्मिंश्च भागे, अस्थिरविधः क्षणे क्षणे परिवर्त्तितप्रकारः, कदाचित् तमसः कदाचिदालोकस्य प्रकाशादिरूपः इत्यर्थः, ऐन्द्रजालिकः इन्द्रजालवान्, प्रतिक्षणमन्यथाऽन्यथा प्रतीयमानत्वात् आश्चर्यदर्शनः इत्यर्थः [मत्वर्थीयष्ठन्] ॥ ११ ॥

चित्रेति ।—चित्रेषु आलेख्येषु, तेषां तेषाम् अन्यत्र दृष्टानां प्रसिद्धानां वा, अनुकार्य्याणाम् अनुकरणयोग्यानां राजर्षिमनुष्यादीनां, विभ्रमस्य विलासस्य, आधायीनि उत्पादकानि, नैकविधरूपाणि नानाप्रकारस्वरूपाणि, रूपाण्येवेति रूपकाणि प्रतिकृतयः यस्मिन् तादृशं, यं सौधं, वीक्ष्य दृष्ट्वा, बहु पुनः पुनः, शिरः मस्तकं, धुवन् कम्पयन्, शिल्पिराट् कारुश्रेष्ठः, विधिः स्रष्टा, जरया वार्द्धकेन, वातकी वातरोगी, वेपथुवाताक्रान्त इत्यर्थः, ["वातातिसाराभ्यां कुक् च" इति कुक्,

भित्तिगर्भगृहगोपितैर्जनैर्यः कृताद्भुतकथादिकौतुकः।
सूत्रयन्त्रजविशिष्टचेष्टयाऽऽश्चर्यसञ्जिबहुशालभञ्जिकः॥ १३॥
तामसीष्वपि तमीषु भित्तिगै रत्नरश्मिभिरमन्दचन्द्रिकः।
यस्तपेऽपि जलयन्त्रपातुकासारदूरधुततापतन्द्रिकः॥ १४॥

चकारात् इनि-प्रत्ययश्च] इति अकल्पि अतर्कि, देवादिभिरिति शेषः,सौधशिल्पिनः आश्चर्यशिल्पनैपुण्यं दृष्ट्वा विस्मयवशात् तदा शिल्पिश्रेष्ठेन विधात्रा अपि पुनः पुनः शिरः कम्पितम् इत्यर्थः॥१२॥

भित्तीति।—यः सौध, भित्तिगर्भेषु कुड्याभ्यन्तरेषु, ये गृहाः कक्षाः, तेषु गोपितैः गुप्तभावेनावस्थितैः, जनैः लोकैः, कृतं विहितम्, अद्भुतकथादिकौतुकं विस्मयजनकभाषणादि-कुतूहलं येन सः तादृशः, स्वयमेव सौधः कथयतीति भ्रान्तिकरः इत्यर्थः, ("कौतूहलं कौतुकञ्च कुतुकञ्च कुतूहलम्" इत्यमरः) किञ्च, सूत्राणां यन्त्रेण तन्तुनिर्मितयन्त्रविशेषेण, जाता उत्पादिता, या विशिष्टचेष्टा हसितनिमेषोन्मेषादिरूपासाधारण-क्रियाविशेषः तया, आश्चर्यं विस्मयं, सञ्जयन्ति उत्पादयन्तीति तत्सञ्जिन्यः, बह्व्यः अनेकाः, शालभञ्जिकाः दारुपुत्तलिकाः यत्र सः तादृशः॥ १३॥

तामसीष्विति।—यः सौधः, तामसीषु तमस्विनीषु अपि, ["ज्योत्स्नादिभ्य उपसङ्ख्यानम्" इति मत्वर्थीयोऽण्-प्रत्ययः] तमीषु रात्रिषु, भित्तिगैः कुड्यगतैः, रत्नरश्मिभिः मणिप्रभाभिः, अमन्दा प्रभूता, चन्द्रिका ज्योत्स्ना यस्य तादृशः, तथा तपेऽपि ग्रीष्मेऽपि, जलयन्त्रेभ्यः जलोत्सारकयन्त्रविशेषेभ्यः, कृत्रिम-प्रस्रवणेभ्यः इत्यर्थः, पातुकैः पतनशीलैः, आसारैः धारा-सम्पातैः, दूरम् अतिशयेन, धुता निराकृता, तापतन्द्रिका ग्रीष्मजनितमोहप्रायावस्था यस्य सः तादृशः॥ १४॥

यत्र पुष्पशरशास्त्रकारिका शारिकाऽध्युषितनागदन्तिका ।
भीमजानिषधसार्वभौमयोः प्रत्यवैक्षत रते कृताकृते ॥ १५ ॥
यत्र मत्तकलविङ्कशारिकाश्लेषकेलिपुनरुक्तिवत्तयोः ।
क्वापि दृष्टिभिरवापि वापिकोत्तंसहंसमिथुनस्मरोत्सवः ॥ १६ ॥
यत्र वैणरववैणवस्वरैर्हङ्कृतैरुपवनीपिकालिनाम् ।
कङ्कणालिकलहैश्च नृत्यतां गापितं सुरतकूजितं तयोः ॥ १७ ॥

यत्रेति ।—यत्र सौधे, पुष्पशरशास्त्रस्य वात्स्यायनादिप्रणीत-कामतन्त्रस्य, कारिका कर्त्री, प्रायश एव लोकमुखे श्रवणात् तत्पुनरुक्तिकारिणीत्यर्थः, तथा अध्युषिता अधिष्ठिता, नाग-दन्तिका भित्तिनिर्गतदारुविशेषः यया तादृशी ("नागदन्तो द्विपरदे गृहान्निर्गतदारुणि" इति मेदिनी ) शारिका शारीति-ख्यातः पक्षिविशेषः, ("शारिका शारी" इति यादवः ) भीमजानिषधसार्वभौमयो भैमीनलयोः, रते सुरते, कृताकृते विहिताविहिते, कामशास्त्रानुसारेण सुरतमनुष्ठितं न वा इत्यादिरूपे इत्यर्थः, प्रत्यवैक्षत निपुणभावेनापश्यत्, इदं कृतम् इदं न कृतम् इति अनुसन्दधे इत्यर्थः ॥ १५ ॥

यत्रेति ।—यत्र सौधे, क्वापि कुत्रचित् प्रदेशे, तयोः भैमी-नलयोः, दृष्टिभिः दर्शनैः, वापिकोत्तंसानां दीर्घिकालङ्काराणां, हंसमिथुनानां हंसद्वन्द्वानां, स्मरोत्सवः सुरतकेलिः, मत्तानां हृष्टानां, कलविङ्कानां चटकानां, तथा शारिकाणां पक्षि-विशेषाणाञ्च, आश्लेषकेलिभिः ग्राम्यक्रीडाभिः, पुनरुक्तिवत् पौनरुक्त्यमिव, अवापि अबोधि, तत्तुल्यम् अदर्शि इत्यर्थः ॥१६॥

यत्रेति ।—यत्र सौधे, वैणैः वीणासम्बन्धिभिः, रवैः शब्दैः, वैणवैः वेणुसम्बन्धिभिः, स्वरैः ध्वनिभिः, तथा उपवन्याम् आरामे, पिकानां कोकिलानाम्, अलिनां भृङ्गाणां

कृष्णसारमृगशृङ्गभङ्गुरा स्वादुरुज्ज्वलरसैकसारणिः।
नानिशं त्रुटति यत्पुरः पुरा किन्नरीविकटगीतिझङ्कृतिः॥ १८॥
भित्तिचित्रलिखिताखिलक्रमा यत्र तस्थुरतिहाससङ्कथाः।
पद्मनन्दनसुतारिरंसुताऽमन्दसाहसहसन्मनोभुवः॥ १९॥

---

हुङ्कारैः, तथा नृत्यतां नर्त्तकीजनानां, कङ्कणालिकलहैः करभूषणावलीकलकलैश्च, तयोः दम्पत्योः, सुरतकूजितं शृङ्गारकालिकमणितादिशब्दः, गोपितं तिरस्कृतम्, अतो न विस्रम्भविघातः इति भावः॥ १७॥

कृष्णेति।—यत्पुरः यस्य सौधस्य सम्मुखदेशे, कृष्णसार-मृगस्य कालसाराख्यहरिणस्य, शृङ्गवत् विषाण इव, भङ्गुरा भङ्गवती, अतिवक्रेति यावत्, एकत्र—कण्ठस्वरस्य कम्पन-विशेषेण तथोच्चारणात्, अन्यत्र—स्वभावादिति भावः, अत एव उज्ज्वलरसस्य शृङ्गाररसस्य, ("शृङ्गारः शुचिरुज्ज्वलः" इत्यमरः) एका मुख्या, सारणिः कुल्या, स्वल्पनदीत्यर्थः, ("प्रसारण्यां स्वल्पनद्याञ्च सारणिः" इति मेदिनी) शृङ्गाररसात्मिका इति भावः, स्वादुः मधुरा, किन्नरीणां किन्नरस्त्रीणां, देवगायिकाना-मित्यर्थः, विकटा विपुला, गीतस्य गानस्य, झङ्कृतिः झङ्काराख्यस्वरः, अनुकारिशब्दोऽयम्; अनिशं नित्यं, पुरा अतीते वर्त्तमाने भाविनि वा इत्यर्थः, न त्रुटति न छिनत्ति, न विच्छिन्ना इत्यर्थः। ["पुरि लुङ् चास्मे" इति भूते लट्] अत्र गीतझङ्कृतेः शृङ्गाररससारणित्वेन रूपणात् रूपका-लङ्कारः॥ १८॥

भित्तीति।—यत्र सौधे, भित्तिषु कुड्येषु, चित्रलिखिता आलेख्यरूपतया अङ्किताः, अखिलाः सकलाः, क्रमाः अनुक्रमाः, पूर्वापरघटनाविशेषाः इत्यर्थः यासां तादृश्यः, पद्मनन्दनस्य

पुष्पकाण्डजयडिण्डिमायितं यत्र गौतमकलत्रगामिनः।
पारदारिकविलाससाहसं देवभर्त्तुरुदटङ्कि भित्तिषु ॥ २० ॥
उज्ज्वलत्कलरवालिकैतवात् वैजयन्तविजयार्जिता जगत्।
यस्य कीर्त्तिरवदायति स्म सा कार्त्तिकीतिथिनिशीथिनीस्वसा ॥ २१ ॥

पद्मयोनेः ब्रह्मणः, तस्य विष्णुनाभिकमलोत्पन्नत्वादिति भावः, सुतया कन्यया भारत्या, रिरंसुता रन्तुमिच्छुता, सा एव अमन्दं महत्, साहसम् अविमृश्यकारित्वं, तेन हतन् स्वप्रयाससाफल्य-सन्तापात् स्मयमानः, मनोभूः कामः यासु तथाभूताः, इतिहास-सङ्कथाः पुरावृत्तोक्तवृत्तान्ताः, तस्युः विद्यन्ते स्म, यस्य सौधस्य भित्तौ कामस्य ब्रह्मणोऽपि पराभवादिप्रभावः चित्रकरेण अङ्कितः अवर्त्तत इत्यर्थः ॥ १९ ॥

पुष्पेति।—यत्र सौधे, भित्तिषु कुड्येषु, पुष्पकाण्डस्य कुसुमेषोः, जयडिण्डिमायितं विजयघोषकडिण्डिमाख्यवाद्य-विशेषवत् आचरितम्, [ "उपमानादाचारे" इति क्यजन्तात् कर्त्तरि क्तः ] गौतमकलत्रगामिनः अहल्यागन्तुः, देवभर्त्तुः इन्द्रस्य, परदारान् गच्छतीति पारदारिकः, [ "गच्छतौ पर-दारादिभ्यः" इत्युपसङ्ख्यानात् ठक् ] तस्य विलासः विजृम्भणं, तत् एव साहसं हठकारिता, उदटङ्कि उट्टङ्कितम्, अङ्कितम् इत्यर्थः, चित्रशिल्पिभिरिति शेषः, ब्रह्मादिकीटपर्य्यन्तं जगत् कामोन्मत्तमिति ज्ञापनार्थं तथा दम्पत्योः हर्षजननार्थञ्च सर्वमेतत् वृत्तान्तं तत्र लिखितम् इति भावः ॥ २० ॥

उज्ज्वलदिति।—कृत्तिकाभिः नक्षत्रेण युक्ता पौर्णमासी कार्त्तिकी, [ "नक्षत्रेण युक्तः कालः" इत्यण् ] सा एव तिथिः पूर्णिमा, तस्याः निशीथिनी रात्रिः, तस्याः स्वसा भगिनी, तत्-सदृशी सुशुभ्रा इत्यर्थः,तथा वैजयन्तस्य इन्द्रप्रासादस्य, ( "स्यात्

गौरभानुगुरुगेहिनीस्मरोद्भूतभावमितिवृत्तमाश्रिताः।
रेजिरे यदजिरेऽभिनीतिभिर्नाटिका भरतभारतीसुधाः॥ २२॥
शम्भुदारुवनसम्भ्रमक्रियामाधवव्रजवधूविलासयोः।
गुम्फितैरुपगनमा सुभाषितैर्यस्य हाटकविटङ्कमङ्कितम्॥ २३॥

---

प्रासादो वैजयन्तः" इत्यमरः) विजयेन पराभवेण, श्रीमत्येन सौन्दर्य्येण च इति भावः, अर्जिता लब्धेत्यर्थः, यस्य सौधस्य, सा प्रसिद्धा, कीर्त्तिः यशः, धवलतेति यावत्, "यशसि धवलता वर्ण्यते हासकीर्त्त्योः" इत्युक्तेरिति भावः, उच्चलताम् उड्डीयमानानां, कलरवालीनां पारावतश्रेणीनां, कैतवात् व्याजात्, इत्यपह्नवभेदः; जगत् भुवनम्, अवदायति स्म शोधयति स्म, शुभ्रीकरोति स्म इत्यर्थः, सौधोपरि उड्डीयमाना एते तावत् पारावता न भवन्ति, परन्तु एतस्य शरच्चन्द्रचन्द्रिकातुल्या कीर्त्तिरेवेति भावः। [दै प शोधने इत्यस्य लट्]॥ २१॥

गौरेति।—यस्य सौधस्य, अजिरे प्राङ्गणे, गौरभानोः सितांशोः, चन्द्रस्येत्यर्थः, गुरुगेहिन्यां वृहस्पतिपत्न्यां तारायां, स्मरोद्भूतभावं कामजव्यापारमेव, इतिवृत्तं वर्णनीयविषयम्, आश्रिताः अवलम्बिताः, तद्वर्णनपराः इत्यर्थः, भरतभारतीसुधाः नाट्यशास्त्रस्य सारभूताः अमृतकल्पाः, नाटिकाः चतुरङ्गरूपकविशेषाः, "चतुरङ्गा तु नाटिका" इत्युक्तलक्षणात्, अभिनीतिभिः अभिनयैः, रेजिरे शुशुभिरे॥ २२॥

शम्भुदार्विति।—यस्य सौधस्य, हाटकविटङ्कं हिरण्मयकपोतपालिका, ("हिरण्यं हेम हाटकं" "कपोतपालिकायान्तु विटङ्कं पं नपुंसकम्" इति चामरः) शम्भोः हरस्य, दारुवनं

अह्नि भानुभुवि दाशदारिकां यच्चरः परिचरन्तमुज्जगौ।
कालदेशविषयासहस्मरादुत्सुकं शुकपितामहं शुकः॥ २४॥
नीतमित्र करलभ्यपारतामप्रतीर्थ्य मुनयस्तपोऽर्णवम्।
अप्सरःकुचघटावलम्बनात् स्थायिनः क्वचन यत्र चित्रगाः॥२५॥

देवदारुकानने, शम्भुजिक्रिया कोचस्त्रीभिः सह सम्भोगव्यापारः, माधवस्य श्रीकृष्णस्य, व्रजवधूविलासः गोपाङ्गनाविहारश्च तयोः विषये, उशनसा शुक्राचार्य्येण, गुम्फितैः विरचितैः, सुभाषितैः सूक्तैः, शिवकृष्णविहारवर्णनैरित्यर्थः, अङ्कितं चित्रितं, तत्र लिखितम् इत्यर्थः॥ २३॥

अह्नीति।—यच्चरः यत्सौधचारी, शुकः कीरः, कालः रात्र्यादिः, देशः निर्जनादिः, विषयः उपभोग्याया नार्य्या अवस्थादिः, तेषाम् असहात् अक्षमात्, योग्यायोग्यविचारविलम्बासहिष्णोरित्यर्थः, स्मरात् कामात्, कामताडनादित्यर्थः, उत्सुकम् इच्छापूरणायोद्युक्तम्, ("इष्टार्थोद्युक्त उत्सुकः" इत्यमरः) अत एव अह्नि दिवैव, न रात्रौ इति भावः, भानुभुवि सूर्य्यतनयाया यमुनायां, यमुनामध्यस्थद्वीपे इत्यर्थः, न विविक्ते इति भावः, ("कालिन्दी सूर्य्यतनया यमुना शमनस्वसा" इत्यमरः) दाशदारिकां कैवर्त्तकन्यां, सत्यवतीमित्यर्थः, न तु कुलीनामिति भावः, ("कैवर्त्ते दासधीवरौ" इत्यमरः) परिचरन्तं सेवमानं, रमयन्तमिति यावत्, शुकपितामहं व्यासपितरं पराशरं, ("शुको व्याससुते कीरे" इति विश्वः) उज्जगौ गायति स्म, पराशरस्य दासराजकन्यकासमागमं पुराणादौ श्रुतं पुनः पुनरुच्चैः पपाठेत्यर्थः॥ २४॥

नीतमिति।—यत्र सौधे, क्वचन कुत्रचित् प्रदेशे, करलभ्यपारतां पाणिप्राप्यचरमसीमात्वम्, अचिरमेव लप्स्य-

यत्र वीक्ष्य नलभीमसम्भवे मुह्यतो रतिरतीशयोरपि ।
स्पर्द्धयेव जयतोर्जयाय ते कामकामरमणीबभूवतुः ॥ २६ ॥
तत्र सौधसुरभूधरे तयोराविरासुरथ कामकेलयः ।
ये महाकविभिरप्यवीक्षिताः पांशुलाभिरपि ये न शिक्षिताः ॥२७॥

---

मानफलत्वमित्यर्थः, नीतमेव प्राप्तमेव, तीर्णप्रायमेवेत्यर्थः, तपोऽर्णवं तपस्यासागरम्, अप्रतीर्य्य अनुत्तीर्य्य, तपस्यातो विरत्येत्यर्थः. अप्सरसां स्वर्वेश्यानां, कुचाः स्तना एव, घटाः कुम्भाः, तेषाम् अवलम्बनात् आश्रयात्, स्थायिनः अवतिष्ठमानाः, विश्रामपराः इत्यर्थः, तरणश्रान्ताः घटादिकमवलम्ब्य विश्राम्यन्तीति प्रसिद्धिः ; मुनयः विश्वामित्रादयः, चित्रगाः आलेख्यवर्त्तिनः, चित्रे श्रङ्किताः विद्यन्ते स्म इत्यर्थः ॥ २५ ॥

यत्रेति ।—यत्र सौधे, नलभीमसम्भवे निषधेशभैम्यौ, वीक्ष्य दृष्ट्वा, मुह्यतोः मोहं गच्छतोः, रूपदर्शनात् विस्मयविमूढयोरित्यर्थः, अत एव स्पर्द्धया साम्येनेव, तुल्यताभिमानेनेवेत्यर्थः, जयतोः अभिभवतोः, रतिरतीशयोः रतिकामयोरपि, जयाय अभिभवाय, ते नलदमयन्त्यौ, कामकामरमणीबभूवतुः तज्जयाय स्वयमन्ये ततोऽप्युत्कृष्टे कन्दर्पकन्दर्पस्त्रियौ जज्ञाते, ते अतिशय्य स्थिते इत्यर्थः । [ अभूततद्भावे च्विः ] ॥ २६ ॥

तत्रेति ।—तत्र तस्मिन्, सौधसुरभूधरे मेरुतुल्यप्रासादे, तयोः भैमीनलयोः, कामकेलयः अनङ्गक्रीडाः, ( "द्रवकेलिपरिहासाः क्रीड़ा खेला च" इत्यमरः ) अथ आरम्भे कार्त्स्न्येन वा, आविरासुः आविर्बभूवुः, विहारस्य प्रथमप्रवृत्तिः कार्त्स्न्येन वा प्रवृत्तिरभूदित्यर्थः, [ प्रादुराविःशब्दयोः कृभ्वस्तिपरनियमात् तत्राम्-प्रत्ययवत् कृभ्वस्तिग्रहणसामर्थ्यात् नास्ति भूभावः ये केलयः, महाकविभिः वात्स्यायनशास्त्रज्ञैरपि, अवीक्षिताः ,

पौरुषं दधति योषिता नले स्वामिनि श्रिततदीयभावया।
यूनि शैशवमतीर्णया कियत् प्रापि भीमसुतया न साध्वसम् ॥२८॥
दूत्यसङ्गतिगतं यदात्मना प्रागशिश्रवदियं प्रिय गिरः।
त विचिन्त्य विनयव्ययं ह्रिया न स्म वेद करवाणि कीदृशम् ॥२९॥

अदृष्टाः,वर्णितुमशक्ता इत्यर्थः, तथा ये पांशुलाभिः कुलटाभिरपि, न शिक्षिताः न अभ्यस्ताः, एतेन वर्णयिष्यमाणकामकेलीनाम् असाधारणत्वं सूच्यते ॥ २७ ॥

पौरुषमिति।—पौरुषं पुरुषत्वं, [ युवादित्वादण्-प्रत्ययः ] दधति दधाने, यूनि तरुणे, स्वामिनि पत्यौ, नले नैषधविषये, क्रमात् योषिता स्त्रिया, भीरुस्वभावया इत्यर्थः, शैशवम् अतीर्णया अद्यापि अनुत्तीर्णबाल्यया, [ कर्त्तरि क्तः ] श्रितः अवलम्बितः, तदीयभाव नलाभिप्रायः, तदधीनत्वमिति यावत्, यया तादृश्या, अस्वतन्त्रया इत्यर्थः, भीमसुतया भैम्या, साध्वसं सङ्गमभयं, कियत् किञ्चिन्मात्रं, न प्रापि न अलम्भि, परन्तु महदेव भयं प्रापि इति भावः, तच्च रसीभवतः स्थायिनः अङ्गं पत्युः अत्यानन्दकरञ्च इति प्रपञ्चितं कुमारसम्भवसञ्जीवन्यां "भावसाध्वसपरिग्रहात्" इत्यत्र। अत्र भयहेतूनां नलगत-पौरुषादीनां त्रयाणां भैमीगतस्त्रीत्वादीनां त्रयाणाञ्च यथासङ्ख्य सम्बन्धात् यथासङ्ख्यालङ्कारः॥ २८ ॥

दूत्येति।—इय दमयन्ती, प्राक् स्वयंवरात् पूर्वं, दूत्ये इन्द्रस्य दूतकर्मणि, सङ्गतिगतं समागमं प्राप्तं, प्रियं नलम्, आत्मना स्वयं, गिरः नवमसर्गोक्तवाक्यानि, हृदयनिहितसप्रेम-भाषणानीति यावत्, अशिश्रवत् श्रावयति स्म, [ शृणोतेर्णौ चङ्युपधाया ह्रस्वे सन्वद्भावः, "स्रवतिशृणोति" इत्यादिना विकल्पादभ्यासस्येत्वम् ] इति यत्, तं पूर्वकृतं, विनयव्ययम्

यत् तया सदसि नैषधः स्वय प्राक् वृतः सपदि वीतलज्जया।
तन्निजं मनसिकृत्य चापलं सा शशाक न विलोकितुं नलम् ॥३०॥
आसने मणिमरीचिमांसले या दिशं स परिरभ्य तस्थिवान्।
तामसूयितवतीव मानिनी न व्यलोकयदियं मनागपि ॥ ३१ ॥
ह्रीसरिन्निजनिमज्जनोचितं मौलिदूरनमनं दधानया।

---

अविनयं, प्रगल्भतामिति यावत्, विचिन्त्य अनुस्मृत्य, ह्रिया लज्जया, सा भैमी, कीदृश किं, करवाणि विदधानि, इति न वेद स्म न बुबुध, शालीनताऽभावस्मरणात् लज्जया इतिकर्त्तव्यताविमूढा अभवदित्यर्थः ॥ २८ ॥

यदिति।—किञ्च, तया भैम्या, प्राक् पूर्वं, स्वयंवरकाले इत्यर्थः, सदसि स्वयंवरसभायां, सपदि सहसा, वीतलज्जया विगतत्रपया सत्या, नैषधः नलः, स्वयम् आत्मना, नलकर्त्तृकयाच्ञाऽभावेऽपि इति भावः, वृतः पतित्वेन स्वीकृतः, इति यत् तत् स्वयंवरणरूपं, निजम् आत्मीयं, चापलं धाष्ट्यं, मनसिकृत्य हृदि निधाय, [ "अनत्याधान उरसिमनसी" इति समासे क्त्वो ल्यबादेशः ] सा भैमी, नलं नैषधं, विलोकितुं द्रष्टुमपि, न शशाक न चक्षमे ॥ ३० ॥

आसन इति।—सः नलः, मणिमरीचिभिः रत्नकिरणैः, मांसले सान्द्रे, समृद्धामिति इत्यर्थः, आसने मणिपीठे, यां दिशं ककुभं, परिरभ्य आश्रित्य इत्यर्थः, तस्थिवान् उपविवेश, यद्दिगाभिमुख्येनावस्थित इत्यर्थः, मानिनी अभिमानवती, इयं दमयन्ती, तां प्रियपरिरब्धां दिशम्, असूयितवतीव दिशः स्त्रीत्वेन सापत्न्यात् ईर्ष्यितवतीव इत्युत्प्रेक्षा, मनागपि ईषदपि, न व्यलोकयत् न अपश्यत्, नलन्तु किमु वक्तव्यमिति भावः ॥३१॥

ह्रीति।—ह्रीसरिति लज्जानद्यां,निजस्य आत्मनः, निमज्जनं

द्वारि चित्रयुवतिश्रिया तया भर्त्तृहूतिशतमश्रुतीकृतम् ॥ ३२ ॥
वेश्म पत्युरविशन्न साध्वसात् वेशितापि शयनं बभाज न ।
भाजितापि सविधं न साऽस्वपत् स्वापितापि न च सम्मुखा-
ऽभवत् ॥ ३३ ॥
आत्मनाऽपि हरदारसुन्दरी यत् किमप्यभिललाष चेष्टितुम् ।

---

निमग्नीभवनं, तस्य उचितं योग्यं, लज्जाप्रयुक्तत्वात् मौलि-नमनस्येति भावः, मौलेः मूर्द्धः, दूरम् अत्यर्थं, नमनं नतिं, दधानया धारयन्त्या, अत एव द्वारि द्वारदेशे, चित्रयुवतेः आलेख्यलिखितायाः तरुण्याः, श्रीरिव श्रीः कान्तिः यस्याः तथाभूतया, तद्वन्निश्चलया इत्यर्थः, तया भैम्या, भर्त्तुः नलस्य, हूतिशतं पुनः पुनराह्वानं, ("हूतिराकारणाह्वानम्" इत्यमरः) अश्रुतीकृतं न श्रवणविषयीकृतं, श्रुतम् अपि लज्जया प्रत्युत्तरा-प्रदानात् अगमनाच्च अश्रुतमिव कृतमित्यर्थः, ह्रिया प्रियं न किञ्चित् प्रत्युवाच इति निष्कर्षः [अभूततद्भावे च्विः] ॥ ३२ ॥

वेश्मेति ।—सा भैमी, साध्वसात् भयात्, पत्युः भर्त्तुः, वेश्म गृहं, न अविशत् न प्रविष्टवती, वेशिताऽपि सखीभिः कथञ्चित् गृहान्तः प्रापिताऽपि, शयनं तल्पं, न बभाज न सिषेवे, शय्यायां न आगच्छदित्यर्थः, भाजिताऽपि सखीभिरनुनयादिना शयनं प्रापिताऽपि, सविधं समीपम्, [ अत्यन्तसंयोगे द्वितीया ] न अस्वपत् न अशेत, ( "स्वापः शयननिद्रयोः" इति मेदिनी ) स्वापिताऽपि सखीभिः समीपे शायिताऽपि, सम्मुखा अभिमुखी, न अभवत् न बभूव । एतेन नवोढ़ाया मौग्ध्यात् लज्जा-विजितमन्मथत्वमुक्तम् ॥ ३३ ॥

आत्मनेति ।—हरदारा: पार्वती इव, सुन्दरी सुरूपा, सा भैमीति शेषः, आत्मना स्वयमपि, यत् किमपि चेष्टितुं यत् किञ्चन

स्वामिना यदि तदर्थमर्थिता मुद्रितस्तदनया तदुद्यमः ॥ ३४ ॥
क्षोभरात् विमुखया तया भियं सञ्चितामननुरागशङ्किनि।
स स्वचेतसि लुलाप संस्मरन् दूत्यकालकलितं तदाशयम् ॥ ३५॥
पार्श्वमागमि निजं सहालिभिस्तेन पूर्वमथ सा तयैकया।
क्वापि तामपि नियुज्य मायिना स्वात्ममात्रसचिवाऽवशेषिता ॥ ३६ ।

कटाक्षवीक्षणादि कर्त्तुम्, अभिललाष स्पृहयामास, किन्तु स्वामिना पत्या, तदर्थं तन्निमित्तम्, अर्थिता यदि प्रार्थिता चेत्, तत् तदैव, अनया भैम्या, तदुद्यमः तस्य नलस्य, उद्यमः चेष्टा, स्वकीयकटाक्षवीक्षणादिचेष्टा वा, मुद्रितः प्रतिबद्धः, निरुद्धीकृतः इत्यर्थः, स्वयं चिकीर्षितमपि लज्जावशात् न करोति इति निष्कर्षः ॥ ३४ ॥

क्षोभरादिति।—सः नलः, क्षोभरात् लज्जातिशयात्, विमुखया प्रतिकूलया, तया भैम्या, अननुरागशङ्किनि वैमुख्यदर्शनात् अनुरागाभावसन्देहिनि, स्वचेतसि निजमनसि, सञ्चितां पुञ्जीकृतां, भियं विरागसम्भावनाजनितं भयं, दूत्यकाले दूतकर्मसमये, कलितम् अवगतं, तस्याः भैम्याः, आशयं चित्तवृत्तिं, संस्मरन् सञ्चिन्तयन्, लुलाप विनाशयामास, तदनुरागस्य स्मरणेन भयं नुनोद इत्यर्थः ॥ ३५ ॥

पार्श्वमिति।—मायिना कपटपटुना, चतुरेणेत्यर्थः, तेन नलेन, सा भैमी, पूर्वम् आदौ, आलिभिः वह्वीभिः सखीभिः सह, निजं पार्श्वं स्वसमीपम्, आगमि आगमिता, आनीतेत्यर्थः, [ गमेर्ण्यन्तात् कर्मणि लुङ्, मित्त्वात् ह्रस्वत्वम् ] अथ अन्यासां सखीनां कार्य्यव्यपदेशेन प्रस्थापनानन्तरम्, एकया एकमात्रया, तया आल्या सह, अवशेषिता अवशिष्टीकृता, अथ ताम् एकामपि आलिं, क्वापि ताम्बूलानयनादिरूपे कस्मिन्नपि

सन्निधावपि निजे निवेशितामालिभिः कुसुमशस्त्रशास्त्रवित्।
आनयत् व्यवधिमानिव प्रियामङ्कपालिवलयेन सन्निधिम् ॥३७॥
प्रागचुम्बदलिके ह्रिया नतां तां क्रमाद्दरनतां कपोलयोः।
तेन विश्वसितमानसां झटित्यानने स परिचुम्ब्य सिष्मिये ॥३८॥

कर्माणि, नियुज्य सम्प्रेष्य, स्वात्ममात्रं केवलं स्वयमेव, सचिवः सहायः, सहचर इत्यर्थः यस्याः सा तादृशी, चक्रे इति शेषः, विविक्तमकरोदित्यर्थः ॥ ३६ ॥

सन्निधाविति।—कुसुमशस्त्रशास्त्रवित् कामतन्त्रपारगः नलः, आलिभिः सहचरीभिः, निजे सन्निधौ स्वसमीपे, निवेशिता स्थापितामपि, प्रिया दमयन्तीं, व्यवधिमान् इव असन्निहितः इव, अङ्कपालिः पृष्ठदेशस्पर्शपूर्वकालिङ्गनविशेषः, तद्रूपेण वलयेन वलयाकारवेष्टनेन, सन्निधिं स्वसमीपम, आनयत् आनीतवान्। "आदौ रतं वाह्यमेव प्रयोज्य तत्रापि चालिङ्गनमेव पूर्वम्" "तथा सामीप्यगा भीरु नवोढ़ां सन्निधापयेत्। विश्वासच्छद्मना गाढ़ालिङ्गनात् त्याजयेत् भयम् ॥" इति कामशास्त्रादिति भावः ॥ ३७ ॥

प्रागिति।—स नलः, ह्रिया लज्जया, नतां नम्रमुखीं, तां भैमीं, प्राक् पूर्वम्, अलिके ललाटपट्टके, ("ललाटमलिकं गोधिः"इत्यमरः) अचुम्बत् चुम्बितवान्, अथ क्रमात् क्रमशः, दरनताम् ईषदवनतां, पूर्वापेक्षया किञ्चिदुन्नमितमुखीमित्यर्थः, कपोलयोः गण्डयोः, तामचुम्बदिति पूर्वेणान्वयः; तेन पूर्वोक्तरूपमृदुव्यवहारेणेत्यर्थः, विश्वसितमानसां विस्रब्धचित्तां, तामिति शेषः, झटिति द्राक्, आनने मुखे, परिचुम्ब्य चुम्बयित्वा, सिष्मिये स्मितवान्, अधरचुम्बनहर्षात् ईषत् जहासेत्यर्थः, अनुप्रवेशलाभात् इति भावः ॥ ३८ ॥

लज्जया प्रथममेत्य हुङ्कृतः साध्वसेन बलिनाऽथ तर्जितः।
किञ्चिदुच्छ्वसित एव तद्धृदि न्यग्बभूव पुनरर्भकः स्मरः॥ ३९॥
वल्लभस्य भुजयोः स्मरोत्सवे दित्सतोः प्रसभमङ्कपालिकाम्।
एककश्चिरमरोधि बालया तल्पयन्त्रणनिरन्तरालया॥ ४०॥

लज्जयेति।—अर्भकः शिशुः, अप्रगल्भावस्थत्वात् तथा रूपणम्; स्मरः कामः, तस्याः दमयन्त्याः, हृदि चेतसि, किञ्चित् ईषत्, उच्छ्वसितः स्फुरित एव, पूर्वोक्तचुम्बनाद्युपलालनेन किञ्चिदुल्लसितः सन् एवेत्यर्थः, प्रथमम् आदौ, लज्जया ह्रिया, एत्य आगत्य, हुङ्कृतः हुङ्कारेण वारितः, अथ तदनन्तरं, तथाऽप्युल्लसने बलिना ततोऽपि प्रबलेन, साध्वसेन त्रासेन, तर्जितः भर्त्सितः सन्, पुनः भूयः, न्यग्बभूव सञ्चुकोच, प्रशशामेत्यर्थः॥ ३९॥

वल्लभस्येति।—स्मरोत्सवे सुरतारम्भे, प्रसभं बलात्, अङ्कपालिकाम् आलिङ्गनं, ("सम्परीरम्भ आश्लेषः परिष्वङ्गः प्रगूहनम्। आलिङ्गनमपि क्रोडीकरणञ्चाङ्कपाल्यपि॥" इति यादवः) दित्सतोः दातुमिच्छतोः, आलिङ्गनप्रवृत्तयोरित्यर्थः, [ददातेः सनन्ताल्लटः शत्रादेशः, "सनि मीमा—" इत्यादिना इत्वेऽभ्यासलोपः] वल्लभस्य प्रियस्य, भुजयोः बाह्वोः, एककः एको भुजः, [असहाये कन्-प्रत्ययः] तल्पयन्त्रणे शय्यानिरोधने, शय्याऽऽश्लेषणे इत्यर्थः, निरन्तरालया अव्यवधानया, दृढरूपेण निरन्तराश्लिष्टतल्पया इत्यर्थः, बालया तरुण्या भैम्या, चिरं दीर्घकालम्, अरोधि निरुद्धः, तल्पमाश्लिष्य प्रियस्य एकं करमरुणत् इत्यर्थः, भैम्याः पृष्ठदेशशय्ययामध्ये अन्तरालाभावात् नलः एकं हस्तं तत्र प्रवेश्य दमयन्तीमालिङ्गितुं न समर्थः इति भावः॥ ४०॥

हारसाधिमविलोकने मृषा कौतुकं किमपि नाटयन्नयम् ।
कण्ठमूलमदसीयमस्पृशत् पाणिनोपकुचधाविना धवः ॥४१॥
यत् त्वयाऽस्मि सदसि स्रजाऽञ्चितस्तन्मयाऽपि भवदर्हणाऽर्हति ।
इत्युदीर्य निजहारमर्पयन्नस्पृशत् स तदुरोजकोरकौ ॥ ४२ ॥
नीविसीम्नि निहितं स निद्रया सुभ्रुवो निशि निषिद्धसंविदः ।

हारेति ।—धवः पतिः, अयं नलः, हारस्य मुक्तावल्याः, साधिम्नः अतिशयेन साधुतायाः, रमणीयताया इत्यर्थः, विलोकने दर्शने, परीक्षार्थमित्यर्थः, किमपि अनिर्दिष्टमित्यर्थः, मृषा मिथ्या, कौतुकं कुतूहलं, नाटयन् प्रदर्शयन्नित्यर्थः, वस्तुतस्तु पीडनाभिप्रायेणैवेति भावः, उपकुचं कुचसमीपे, धावति द्रुतं गच्छतीति तद्धाविना स्तनसमीपगामिना, पाणिना करेण, अमुष्याः इदम् अदसीयं दमयन्तीसम्बन्धि, [ "त्यदादीनि च" इति वृद्धसंज्ञायां "वृद्धाच्छः" इति छ-प्रत्ययः ] कण्ठमूलं गलाधोभागम्, उरःस्थलमित्यर्थः, अस्पृशत् स्पृष्टवान् ॥ ४१ ॥

यदिति ।—हे प्रिये ! यत् यस्मात्, त्वया भवत्या, सदसि स्वयंवरसभायां, स्रजा वरणमालया, अञ्चितः पूजितः, [ "अञ्चेः पूजायाम्" इतीडागमः, "नाञ्चेः पूजायाम्" इत्यनुनासिकलोपप्रतिषेधः ] अस्मि भवामि, अहमिति शेषः, तत् तस्मात्, मयाऽपि भवत्याः तव, अर्हणा पूजा, [ "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" ] अर्हति युज्यते, इति एवम्, उदीर्य उक्त्वा, निजं स्वकं, हारं कण्ठभूषाम्, अर्पयन् ददन्, गलदेशे सन्निधापयन्नित्यर्थः, सः नलः, तस्याः दमयन्त्याः, उरोजकोरकौ कुचकुड्मलौ, अस्पृशत् स्पृष्टवान् ॥ ४२ ॥

नीवीति ।—सः नलः, निशि रात्रौ, निद्रया स्वापेन, निषिद्धसंविदः निवृत्तसंज्ञायाः, सुभ्रुवः सुन्दरभ्रूशालिन्याः

कम्पितं शयमपासयन्निजं दोलनैर्जनितबोधयाऽनया ॥ ४३ ॥
स प्रियोरुयुगकञ्चुकांशुके न्यस्य दृष्टिमथ निर्ष्मिये नृपः ।
आववार तदथाम्बराञ्चलैः सा निरावृतिरिव त्रपावृता ॥ ४४ ॥
बुद्धिमान् व्यधित तां क्रमादयं किञ्चिदित्थमपनीतसाध्वसाम् ।
किञ्च तन्मनसि चित्तजन्मना ह्रीरनामि धनुषा समं मनाक् ॥४५॥

---

प्रियायाः, नीविसीम्नि कटीवस्त्रग्रन्थिसमीपे, निहितं स्थापितम्, उन्मोचनाय इति भावः, अत एव कम्पितं भयात् सकम्पं, निजं स्वीयं, शयं पाणिं, दोलनैः पाणिकम्पनैः, कम्पनाद्धेतोः दमयन्त्याः गात्रे सहसा संलग्नत्वात् इति भावः, जनितबोधया प्रबुद्धया, अनया भैम्या, [ प्रयोज्यया ] अपासयत् अपासारयत् ॥ ४३ ॥

स इति ।—सः नृपः नलः, प्रियायाः दमयन्त्याः, ऊरुयुगस्य सक्थिद्वयस्य, कञ्चुकं चोलकं, आवरकं इत्यर्थः, अंशुकं सूक्ष्मवस्त्रे, दृष्टिं नेत्रं, न्यस्य निक्षिप्य, निर्ष्मिये स्मितवान्, सूक्ष्मवस्त्राभ्यन्तरात् ऊरुयुगसौन्दर्यं दृष्ट्वा आनन्दोदयादिति भावः ; अथ दर्शनानन्तरं, सा दमयन्ती, निरावृतिरिव आवरणरहितेव, साक्षाद्दृष्टोरुयुगा इवेत्यर्थः, अत एव त्रपावृता लज्जामग्ना सती, तदूरुयुगम्, अम्बराञ्चलैः वस्त्रप्रान्तैः, आववार आच्छादयामास, आवृतमपि अनावृतमितीव आवृणोदिति त्रपातिशयोक्तिः ॥४४॥

अथ ग्रन्थेर्मौग्ध्यत्यागात् मध्यमावस्थां प्रापितत्याह, बुद्धिमानिति ।—बुद्धिमान् उपायज्ञः, अयं नलः, तां प्रियां, क्रमात् क्रमशः, इत्थम् उक्तरीत्या, किञ्चित् ईषत्, अपनीतसाध्वसाम् अपसारितभयां, व्यधित विहितवान् । किञ्च, चित्तजन्मना कामेनापि, तस्याः भैम्याः, मनसि चेतसि, ह्रीः लज्जा, धनुषा समं चापेन सह, मनाक् ईषत्, अनामि नामिता, एकत्र

सिष्मिये न हसति तेन न स्म सा प्रीणिताऽपि परिहासभाषणैः।
कौ हि दर्शयति ते परेण काऽनर्घ्यदन्तकुरुविन्दमालिके ॥४६॥
वीक्ष्य भीमतनयास्तनद्वयं मग्नहारमणिमुद्रयाऽङ्कितम्।
सोढकान्तपरिरम्भगाढ़ता सा त्रमानि सुमुखी सखीजनैः ॥४७॥

—अल्पोकृता. अन्यत्र—न्युब्जीकृतेत्यर्थः, [ "ज्वलह्वल—" इति वार्त्तिकात् मित्त्वाभावपक्षे वृद्धिः ] शनैर्लज्जानमनेन कामः स्वयमुत्थितः इति भावः। अत्र हि क्रोनमन-धनुर्नमनयोः कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययेण सहोक्त्यलङ्कारः ॥ ४५ ॥

सिष्मिये इति।—सा भैमी, तेन नलेन, परिहासभाषणैः नर्मोक्तिभिः, प्रीणिता हर्षिताऽपि, [ प्रीञो ण्यन्तात् कर्मणि क्तः, "धूञ्प्रीञोर्नुक् वक्तव्यः"] सिष्मिये स्मितवती, न तु हसति स्म न जहास, स्मितमात्रमकरोत् न तु हसितवतीति गाम्भीर्य्योक्तिः ; हसितं लक्ष्यदशनं स्मितञ्च न तथा इति उभयोर्भेदः ; हि तथाहि, का स्त्री, स्वे आत्मीये, ते अतिसुन्दरे इत्यर्थः, अनर्घ्याः अतिसुन्दरत्वात् बहुमूल्याः, दन्ताः दशना एव, कुरुविन्दाः पद्मरागाः, ताम्बूलरञ्जितत्वादिति भावः, ( "कुरुविन्दस्तु मुस्तायां पद्मरागे" इति यादवः ) तेषां मालिके मालाद्वयं, दन्तपङ्क्तिद्वयमित्यर्थः, परेण अन्येन, दर्शयति ? दर्शनविषयीकरोति ? नैव दर्शयतीत्यर्थः, [ "अणौ यः कर्त्ता" इति कर्त्तृसंज्ञानुवादेन कर्मत्वविधानात् संज्ञापूर्वकविधेरनित्यत्वात् परेण इत्यत्र दृशिर्बुद्ध्यर्थत्वात् "गतिबुद्धि—" इत्यादिना प्राप्तकर्मत्वाभावः ] ॥ ४६ ॥

वीक्ष्येति।—सखीजनैः सहचरीभिः, भीमतनयास्तनद्वयं भैम्याः कुचयुगलं, मग्नानां नलोरसा दृढ़निपीडनात् अन्तःप्रविष्टानां, हारमणीनां कण्ठभूषणस्थितरत्नानां, मुद्रया चिह्नेन,

याचते स्म परिधापिकाः सखीः सा स्वनीविनिविडक्रियां यथा ।
अन्वमिन्वत तथा विहस्य ता वृत्तमत्र पतिपाणिचापलम् ॥४८॥
कुर्वती निचुलितं ह्रिया कियत् सौहृदात् विवृतसौरभं कियत् ।
कुड्मलोन्मिषितसूनसेविनीं पद्मिनीं जयति सा स्म पद्मिनी ॥४९॥

---

अङ्कितं चिह्नितं, वीक्ष्य दृष्ट्वा, सुमुखी सुवदना, सा भैमी, सोढा चान्ता, सोढुं समर्था इत्यर्थः, कान्तस्य प्रियस्य, यः परिरम्भः आलिङ्गनं, तस्य गाढता दार्ढ्यं यया सा तादृशी, इति असमानि अबोधि, गाढपरिरम्भं विना स्तनयोस्तादृशचिह्नासम्भवः इत्यनुमितमित्यर्थः ॥ ४७ ॥

याचते इति ।—सा दमयन्ती, परिधापिकाः वस्त्रपरिधापनकारिकाः, सखीः सहचरीः, यथा यादृशभावेन, स्वस्याः आत्मनः, नीवेः वस्त्रग्रन्थेः, निविडक्रियां दृढतासम्पादनं, याचते स्म प्रार्थयामास, तथा तेनैव कृत्वेत्यर्थः, ताः सख्यः, विहस्य मध्यमस्मितं कृत्वा, अत्र नीविदेशे, पत्युः भर्त्तुः, पाणिचापलं करचाञ्चल्यं, नीविग्रन्थेराकर्षणमित्यर्थः, वृत्तं भूतम्, अन्वमिन्वत इत्यनुमितवत्यः, अन्यथा एतत्प्रार्थनाऽनुपपत्तेरिति भावः । [ मिनोतेर्लङि तङ् ] ॥ ४८ ॥

कुर्वतीति ।—पद्मिनी पद्मिनीस्त्रीजातीया, सा भैमी, कियत् किञ्चित् रतिवृत्तं, ह्रिया लज्जया, निचुलितं सखीसमीपेऽपि निगूहितं, कियत् किञ्चिच्च, सुहृदो भावः सौहृदं तस्मात् सौहृदात् सौहार्दात्, प्रणयाधिक्यादित्यर्थः, [ युवादित्वादण्-प्रत्ययः । हृदयस्य "हृदयस्य हृल्लेखयदण्लासेषु" इति हृद्भावे बाहुलकान्नोभयपदवृद्धिः ] विवृतं प्रकटितं, सौरभं मनोज्ञत्वं सौगन्ध्यञ्च यस्य तत् तादृशं, कुर्वती विदधती सती, कुड्मलानि मुकुलानि, उन्मिषितसूनानि प्रस्फुटितकुसुमानि

नाविलोक्य नलमासितुं स्मरो ह्रीर्न वीक्षितुमदान्मृगीदृशः।
तद्दृशः पतिदिशाऽचलन्नथ व्रीडिताः समकुचन्मुहुः पथः॥५०॥
नानया पतिरनायि नेत्रयोर्लक्ष्यतामपि परोक्षतामपि।
वीक्ष्यते स खलु यद्विलोकने तत्र तत्र नयने ददानया॥५१॥

---

च, सेवते भजते इति तादृशीं, पद्मिनीं कमलिनीं, जयति स्म विजितवती, कियत्कलिकाढ्या कियद्विकसितकमलाढ्या च कमलिनीव सा बभौ इत्यर्थः, रहस्यगोपने कलिकातुल्यं रहस्यप्रकटने च विकाशितपद्मतुल्यमिति भावः॥ ४९ ॥

नेति।—स्मरः कामः, मृगीदृशः हरिणलोचनायाः भैम्याः सम्बन्धे, नलं नैषधम्, अविलोक्य अदृष्ट्वा, आसितुं स्थातुं, न अदात् न दत्तवान्, ह्रीः लज्जा पुनः, वीक्षितुं द्रष्टुं, न अदात्, अत एव तस्याः दमयन्त्याः, दृशः दृष्टयः, पतिदिशा स्वामिनं प्रतीत्यर्थः, मुहुः पुनः पुनः, अचलन् अगच्छन्, अथ अनन्तरमेव, व्रीडिताः लज्जिताः सत्यः, पथः तन्मार्गात्, समकुचन् सङ्कुचिताः अभवन्, अतीव कौतुकमिदमित्याशयः॥ ५० ॥

नेति।—अनया भैम्या, पतिः नलः, नेत्रयोः नयनयोः, लक्ष्यता विषयतामपि, न अनायि न नीतः, लज्जावशादिति भावः, तथा परोक्षताम् अविषयतामपि, न अनायि इति पूर्वेणान्वयः; अनुरागवशादिति भावः, ननु लक्ष्यताऽलक्ष्यतयो-रेकतराकरणे प्रकारान्तराभावात् कथमिषोक्तिः सङ्गच्छते? इत्याह, यत् यस्मात्, विलोकने दर्शने निमित्ते, दर्शनार्थ-मित्यर्थः, तत्र तत्र तेषु तेषु विषयेषु, आदर्शादौ इति भावः, नयने ददानया दत्तदृष्ट्या तया, स नलः, आदर्शादौ प्रति-बिम्बित इति भावः, वीक्ष्यते स्म अवलोक्यते स्म खलु, अवज-नीयतया वाञ्छितः एव प्राय इति भावः॥ ५१ ॥

वासरे विरहनिःसहा निशां कान्तयोगसमयं समैहत ।
सा ह्रिया निशि पुनर्दिनोदयं वाञ्छति स्म पतिकेलिलज्जिता
॥ ५२ ॥
तत् करोमि परमभ्युपैषि यत् मा ह्रियं व्रज भियं परित्यज ।
आलिवर्ग इव तेऽहमित्यमूं शश्वदाश्वसनमूचिवान् नलः ॥ ५३ ॥
येन तन्मदनवह्निना स्थितं ह्रीमहौषधिनिरुद्धशक्तिना ।
विद्धिमह्निरुद्धतेजि तैः पुनः स प्रियप्रियवचोऽभिमन्त्रणैः ॥५४॥

---

वासरे इति।—सा भैमी, वासरे दिवसे, विरहस्य विच्छेदस्य, निःसहा सहनासमर्था सती, [ पचाद्यच् ] कान्तयोगसमयं प्रियसमागमकालं, निशां रात्रिं, समैहत ऐच्छत्, निशि पुनः रात्रौ तु, पत्युः भर्त्तुः, केलिषु अनङ्गक्रीडासु, लज्जिता प्राप्तलज्जा सती, ह्रिया सहजलज्जया, दिनोदयं दिवसप्रादुर्भावं, वाञ्छति स्म अभिललाष ; विचित्रा हि नवोढानां चित्तवृत्तिरिति भावः ॥५२॥

तदिति।—हे प्रिये ! यत् चुम्बनादिषु यत् किञ्चिन्मात्रम्, अभ्युपैषि स्वीकरोषि, अनुमोदसे इत्यर्थः, त्वमिति शेषः, परं केवलं, तत् तन्मात्रमेव, करोमि सम्पादयामि, अहमिति शेषः, न पुनस्तवानभिप्रेतं किञ्चिदपि करोमीति भावः, अत एव ह्रियं लज्जा, मा न, व्रज गच्छ, भियं त्रासञ्च, परित्यज दूरीकुरु, अहं ते तव, आलिवर्गः सखीजनः इव, विश्रम्भभाजनमिति भावः, नलः नैषधः, अमूं प्रियाम्, इति एवं, शश्वत् मुहुर्मुहुः, ("मुहुः पुनः पुनः शश्वत्" इत्यमरः) आश्वसनं सान्त्वनावचनम्, ऊचिवान् उवाच ॥ ५३ ॥

येनेति।—येन तन्मदनवह्निना तस्याः दमयन्त्याः, कामाग्निना, ह्रीः लज्जा एव, महौषधिः अव्यर्थभेषजं, तया निरुद्धशक्तिना प्रतिबद्धवीर्य्येण सता, स्थितं तस्थे, [ भावे क्तः ]

यद्विधूय दयितार्पितं करं दोर्द्वयेन पिदधे कुचौ दृढम्।
पार्श्वगं प्रियमपास्य सा ह्रिया तं हृदि स्थितमिवालिलिङ्ग तत्
॥ ५५ ॥

अन्यदस्मि भवतीं न याचिता वारमेकमधरं धयामि ते।
इत्युपांशु काकुवाक् सोपमर्दहठवृत्तिरेव तम् ॥ ५६ ॥

---

सः मदनवह्निः, सिद्धिमद्भिः साफल्यजनकशक्तियुक्तैः, तैः पूर्वोक्तैः, प्रियस्य पत्युः, प्रियवचोभिः एव सप्रेमभाषणैरेव, अभिमन्त्रणैः मन्त्रप्रयोगैः, पुनः भूयः, उदतेजि उत्तेजितः, [तिज निशाने इति धातोर्ण्यन्तात् कर्मणि लुङ्] औषधप्रतिबद्धोऽग्निः प्रतिमन्त्रेण पुनरुद्दीपितो भवतीति लोके दृश्यते। रूपकालङ्कारः ॥ ५४ ॥

यदिति।—सा भैमी, दयितेन प्रियेण, अर्पितम् उरसि स्थापितं, करं पाणिं, विधूय अपसार्य्य, दोर्द्वयेन निजभुजयुगेन, कुचौ स्तनौ, दृढम् अशिथिलं यथा तथा, यत् पिदधे आच्छादयामास, तत् तेन कुचापिधानेन इत्यर्थः, एवमवगम्यते यदिति शेषः, ह्रिया लज्जया, पार्श्वगं बहिःसमीपस्थं, प्रियं नलम्, अपास्य निरस्य, हृदि हृदयमध्ये, स्थितं वर्त्तमानं, तं प्रियम्, आलिलिङ्ग इव आलिङ्गितवतीव, इत्युत्प्रेक्षा। अन्तरालस्थितस्य आलिङ्गने अन्यैर्दर्शनसम्भावनाविरहात् लज्जाऽभावेन हृदयाभ्यन्तरस्थ नल दृढरूपेण आलिङ्गितवतीवेति भावः ॥ ५५ ॥

अन्यदिति।—हे प्रिये! भवतीं त्वाम्, अन्यत् अपरं किमपि, याचिता प्रार्थयिता, [ तृन्. दुहादित्वात् द्विकर्मता ] न अस्मि न भवामि, किन्तु वारमेकम् एकवारमात्रं, ते तव, अधरं दन्तच्छदं, धयामि पास्यामि, [ धेट पाने इत्यस्य भविष्यत्सामीप्ये लट् ] इति इत्थम्, उपांशु रहसि, काकुः अनुनयेन विकृतस्वरा, वाक् वचनं यस्य तादृशः, नलः इति शेषः, उपमर्दं

चुम्बनादिषु बभूव नाम किम् ? तद्‌वृथा भयमिहापि मा कृथाः ।
आलपन्निति तदीयमादिमं स व्यधत्त रसनावलिव्ययम् ॥ ५७ ॥
अस्तिवाम्यभरमस्तिकौतुकं माऽस्तिघर्मजलमस्तिवेपथु ।
अस्तिभीति रतमस्तिवाञ्छितं प्रापदस्तिसुखमस्तिपीडनम् ॥ ५८ ॥

कुचपीडने, हठेन अनुमतिमनपेक्ष्येव बलात्कारेण, वृत्तिः प्रवृत्तिः, तया सह इति सः तादृशः सन् एव, तम् अधरम्, अभिस्वदत् स्वादितवान्, चुचुम्बेत्यर्थः, [ स्वदर्णौ चङ्युपधाया ह्रस्वः ] ॥ ५६ ॥

चुम्बनेति ।—हे प्रिये ! चुम्बनादिषु अधरपानादिषु कृतेषु, किं नाम तव किमनिष्टमित्यर्थः, नाम इति प्रश्ने, बभूव ? सञ्जातम् ? न किञ्चिदपीत्यर्थ, तत् तस्मात्, इह करिष्यमाणे अस्मिन् सुरतेऽपि, वृथा मिथ्या भयं शङ्कां मा कृथाः न कुरु, इति एवम्, आलपन् उदीरयन्नेव, स नलः, तदीयं तस्याः प्रियायाः इदं दमयन्तीसम्बन्धिनम्, आदिमम् आद्यम्, [ "अग्रादि-पश्चाड्डिमच्" इति वार्त्तिकवचनात् डिमच्-प्रत्ययः ] रसना-वलिव्ययं काञ्चीदाममोचनं, व्यधत्त चकार, रन्तुमिति भावः ॥ ५७ ॥

अस्तीति ।—सा भैमी, अस्ति विद्यमानः, वाम्यस्य सर्वेष्वेव व्यापारेषु प्रतिकूलतायाः, भरः आतिशय्यं यस्मिन् तत् तादृशम्, [ "अस्ति" इति विभक्तिप्रतिरूपकं विद्यमानार्थक-मव्ययम्, अस्तिचोराचोरादयश्च" इति वचनात् बहुव्रीहिः । एव-मुत्तरत्रापि द्रष्टव्यम् ] अस्ति विद्यमानं, कौतुकम् औत्सुक्यं यस्मिन् तत् तादृशम्, अस्ति घर्मजलं स्वेदवारि, श्रमजनित-मिति भावः, यस्मिन् तत् तादृशम्, अस्ति वेपथुः कम्पः, शब्दोऽयं सात्त्विकमात्रोपलक्षणं, यस्मिन् तत् तादृशम्, अस्ति भीतिः

ह्रीस्तवेयमुचितैव यद्भवस्तावके मनसि मत्समागमः।
तत्तु निस्त्रपमजस्रसङ्गमात् व्रीड़मावहति मामकं मनः॥ ५९॥
इत्युपालभत सम्भुजिक्रियारम्भविघ्नघनलज्जितैर्जिताम्।
तां तथा स चतुरो न सा यथा व्रमुमैव तमनु त्रपामयात्॥६०॥
प्रातरात्मशयनाद्दिनिर्य्यतीं सन्निरुध्य यदसाध्यमन्यदा।
तन्मुखार्पणमुखं सुखं भुवो जम्भजित् चितिशचीमचीकरत्॥६१॥

भयं यस्मिन् तत् तादृशम्, अस्ति वाञ्छितम् ईप्सितं यस्मिन् तत् तादृशम्, अस्ति सुखम् आनन्दानुभवो यस्मिन् तत् तादृशम्, अस्ति पीडनं नखदन्तक्षतादिव्यथा यस्मिन् तत् तादृशं, रतम् एवम्भूतं सुरतसम्भोगं, प्रापत् अलभिष्ट, नलादिति शेषः॥५८॥

ह्रीरिति।—हे प्रिये! यत् यस्मात्, तावके त्वदीये, मनसि चेतसि,मत्समागमः मम सङ्गतिः, नवः साम्प्रतिक, इति सोल्लुण्ठोक्तिः; तत् तस्मात्, तव ते, इयम् एषा, ह्रीः लज्जा, उचिता अनुरूपा एव, तु किन्तु, अजस्रसङ्गमात् एतावन्तं कालं सदैव मनसा नित्यसमागमात् हेतोः, निस्त्रपं निर्लज्ज, मामकं मदीयं, मनोऽपि व्रीड़ं लज्जाम्, आवहति प्राप्नोति, त्वया सह बहिरभिनवसमागमादिति भावः॥ ५९॥

इतीति।—सम्भुजिक्रियारम्भस्य सम्भोगव्यापारोपक्रमस्य, विघ्नैः प्रतिबन्धकीभूतैः, घनलज्जितैः प्रगाढलज्जाभिः, जिताम् अभिभूता, तां प्रियां, चतुरः परिहासनिपुणः, स नलः, तथा तादृशरूपेण, उपालभत अभ्ययुङ्क्त, यथा येन कृत्वा, सा प्रिया, तम् अनु नलं प्रति, व्रमुमैव लज्जितुमेव, [ऊदित्वात् विकल्पादिडभावः] त्रपां लज्जाम्, अयात् अगच्छत्, प्राप्नवतीत्यर्थः, पुनरपि उपालम्भजनितलज्जाभयात् त्रपां जहौ इति भावः॥६०॥

प्रातरिति।—भुवः पृथिव्याः, जम्भजित् इन्द्रः, नलः इत्यर्थः,

नायकस्य शयनादहर्मुखे निर्गता मुदमुदीक्ष्य सुभ्रुवाम्।
आत्मना निजनवस्मरोत्सवस्मारिणीयमहृणीयत स्वयम्॥ ६२॥
तां मिथोऽभिदधतीं सखीः प्रियस्यात्मनश्च स निशाविचेष्टितम्।
पार्श्वगः सुरवरात् पिधां दधत् दृश्यतां श्रुतकथो हसन् गतः॥६३॥

प्रातः प्रभातसमये, आत्मशयनात् निजशय्यायाः, विनिर्यतीं निर्गच्छन्तीं, क्षितिशचीं भूलोकेन्द्राणीं, प्रियामिति शेषः, सन्नि-बध्य प्रतिबध्य, कराभ्यामाकृष्येति यावत्, अन्यदा अन्यस्मिन् समये, गृहान्निर्गमनानन्तरमित्यर्थः, यत् यादृश सुखम्, असाध्यं कर्त्तुमशक्यं, सखीसमीपे अवस्थानादिति भावः, तत् अनुभूत-चरं, मुखार्पणसुखं मुखचुम्बनादिरूपं, दमयन्तीकर्त्तृकमिति भावः, सुखम् अचीकरत् कारयामास, दमयन्तीमवबध्य तया निजमुखचुम्बनादिकमकारयदित्यर्थः। [ करोतिर्णौ चङ्युपधा-ह्रस्वादि। "हृक्रोरन्यतरस्याम्" इति विकल्पादणिकर्त्तुः कर्मत्वम् ]॥ ६१॥

नायकस्येति।—अहर्मुखे ऊषसि, [ "रोऽसुपि" इत्यह्नो न-कारस्य रेफादेशः ] नायकस्य पत्युः, शयनात् शय्यायाः, निर्गता निसृता, इयं भैमी, सुभ्रुवां सुलोचनानां सखीनां, मुदं हर्षं, स्वसम्भोगचिह्नदर्शनजन्यमिति भावः, उदीक्ष्य आलोक्य, आत्मना मनसा, [ "आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि" इति मेदिनी) निजं स्वकीयं, नवं नूतनं सद्यस्कं वा, स्मरोत्सवं सम्भोगानन्दं, स्मरति चिन्तयतीति तादृशी सती, स्वयम् एव आत्मनैव, अहृणीयत तत्प्रकाशनात् अजिह्रेत्, [ "त्रपायां हृणीङिति जिह्रेति लज्जते हृणीयते" इति भट्टमल्लः। कण्ड्वादियगन्तत्वाल्लङ्, तत्र हृणीङिति ङित्करणादात्मनेपदम् ]॥ ६२॥

तामिति।—पार्श्वगः समीपस्थोऽपि, सुराणाम् इन्द्रादीनां,

चक्रदारविरहेक्षणक्षणे बिभ्यती धवहसाय साऽभवत् ।
क्वापि वस्तुनि वदत्यनागतं चित्तमुद्यदनिमित्तवैकृतम् ॥ ६४ ॥
चुम्बितं न मुखमाचकर्ष यत् पत्युरन्तरमृतं ववर्ष तत् ।
सा नुनोद न भुजं यदर्पितं तेन तस्य किमभून्न तर्पितम् ? ॥६५॥

वरात् वरप्रसादात, पिधाम् अन्तर्द्धाम, [ "आतश्चोपसर्गे" इत्यङ्प्रत्ययः । "वष्टि भागुरिरल्लोपम्" इत्यकारलोपः ] दधत् धारयन्, सः नलः, प्रियस्य पत्युः, आत्मनश्च निजायाश्च, निशाविचेष्टितं रात्रिवृत्तं, मिथः रहसि, सखीः सहचरीः, अभिदधतीं भाषमाणां, सखीभ्यः कथयन्तीमित्यर्थः, [ ब्रुवेरर्थवत्त्वात् द्विकर्मकत्वम् ] तां प्रियां, श्रुतकथः आकर्णितप्रियावचनः, अत एव हसन् उच्चैर्हास्यं कुर्वन् सन्, दृश्यतां तासां नयनगोचरतां, गतः प्राप्तः ॥ ६३ ॥

अथास्याः प्रियविरहासहिष्णुतामाह, चक्रेति ।—चक्रदाराणां रात्रौ चक्रवाकवनितायाः, विरहेक्षणक्षणे वियोगदर्शनकाले, बिभ्यती स्वस्या अपि कदाचित् नलेन विरहसम्भावनया त्रस्यन्ती, सा भैमी, धवस्य प्रियस्य नलस्य,हसाय हास्याय, अभवत् अजायत, प्रियाया अकाण्डत्रासदर्शनात् प्रियो जहास इत्यर्थः, [ "स्वनहसोर्वा" इति विकल्पादप्-प्रत्ययः ] अथवा युक्तमेतत् भयमित्याह, क्वापीति ।—क्वापि कुत्रचित्, वस्तुनि विषये, उद्यत् उत्पद्यमानम, अनिमित्तवैकृतम् आकस्मिकविकारः यस्य तत तादृक्, चित्तं मनः कर्त्तृ, अनागतं भाविशुभाशुभादिकमेव, वदति ज्ञापयतीत्यर्थः । चक्रविरहदर्शनात् आशङ्कितनिजआगामिविरह एव भयहेतुभूत इति तात्पर्य्यम् ॥ ६४ ॥

चुम्बितमिति ।—सा भैमी, चुम्बितं नलेन चुम्बितुमारब्धं, "चुम्बितुम्" इति पाठे—चुम्बितुं नलेनाधरं पातुमुद्यते सतीत्यर्थः,

नीतयोः स्तनपिधानतां तया दातुमाप भुजयोः करं परम् ।
वीतबाहुनि ततो हृदंशुके केवलेऽप्यथ स तत्कुचद्वये ॥ ६६ ॥
याचनान्न ददतीं नखार्पणं तां विधाय कथयाऽन्यचेतसम् ।
वक्षसि न्यसितुमात्ततत्करः स्व बिभेद मुमुदे स तन्नखैः ॥ ६७ ॥

---

मुखं निजाननं, न आचकर्ष न अपासारयत्, इति यत् तत् चुम्ब्यमानमुखस्य अनाकर्षणमेव, पत्युः नलस्य, अन्तः अन्तः-करणे, अमृतं सुधा, ववर्ष निषिषेच, तत्तुल्यमानन्दमजनयदित्यर्थः, तथा अर्पितं स्तनोपरि न्यस्तं, भुज नलकरं, यत् न नुनोद न निरास, तेन भुजानपसारणेन, तस्य नलस्य सर्वास्थ, किं किं वस्तु, अङ्ग वा चित्तं वा इत्यर्थः, न तर्पितम् अभूत् ? न आप्यायितम् अभूत् ? अपि तु सर्वाङ्गमन्तर्पणमिवाभूदित्यर्थः ॥ ६५॥

नीतयोरिति ।—सः नलः, तया भैम्या, स्तनपिधानतां कुचावरणतां, नीतयोः प्रापितयोः, भुजयोः तद्दोर्युगयोः, परं केवलं, प्रथममिति भावः, आदौ केवलं कुचस्थभुजोपरि इति निष्कर्षः, ततः अनन्तरं, वीतबाहुनि अपसारितभुजे, शनैः शनैः नलेनैवेति भावः, हृदंशुके स्तनावरकवस्त्रे, अथ तदनन्तरं, केवलेऽपि अपसारितांशुकत्वात् उन्मुक्तेऽपि इति भावः, तत्कुचद्वये दमयन्तीस्तनयुगले, करं हस्तं, दातुम् अर्पयितुम्, आप शशाक इत्यर्थः, दमयन्त्या अपि क्रमशो मन्मथोदयेन लज्जाजन्यसङ्कोचापगमादिति भावः । अत्रैकस्य करस्य क्रमादनेकेषु भुजांशुककुचेषु वृत्तिकथनात् "क्रमेणैक-मनेकस्मिन्" इत्याद्युक्तलक्षणः पर्य्यायालङ्कारभेदः ॥ ६६ ॥

याचनादिति ।—स नलः, याचनात् मा नखेन विदारय इति प्रार्थनाकरणादपि, नखार्पणं नखेन भेदनं, न ददतीं नार्पयन्तीं, स्नेहवशात् नखक्षतमकुर्वतीमित्यर्थः, तां प्रिया,

स प्रसह्य हृदयापवारकं हर्त्तुमक्षमत सुभ्रुवो बहिः।
क्षौमयं न तु तदीयमान्तरं तद्विनेतुमभवत् प्रभुः प्रभुः॥ ६८॥
सा स्मरेण बलिनाऽप्यहापिता क्षौचमैं भृशमशोभताबला।
भाति चापि वसनं विना न तु व्रीड़धैर्य्यपरिवर्जने जनः॥ ६९॥
माऽस्थ नेति रतयाचितं न यत् मामतोऽनुमतवत्यसि स्फुटम्।

कथया विविधालापप्रसङ्गेन, ["चिन्तिपूजिकथि—"इत्यादिना अङ्प्रत्ययः] अन्यचेतसम् अन्यमानसां, प्रसङ्गान्तरव्यासक्तचित्तामित्यर्थः, विधाय कृत्वा, वक्षसि स्वोरसि, न्यसितुं स्थापयितुम्, आत्ततत्करः गृहीतभैमीपाणिः सन्, तन्नखैः प्रियाया एव नखैः, स्वम् आत्मानं, बिभेद अभिनत्, व्यदारयदित्यर्थः, मुमुदे च ननन्द च॥ ६७॥

स इति।—प्रभुः स्वामी, सः नलः, सुभ्रुवः सुलोचनायाः प्रियायाः, बहिः बाह्यं, हृदयापवारकं वक्षोदेशाच्छादकं, स्तनावरणवस्त्रमित्यर्थः, प्रसह्य बलात्, हर्त्तुम् अपसारयितुम्, अक्षमत अशक्नोत्, तु किन्तु, तदीय दमन्तीयम्, आन्तरम् अन्तर्वर्त्ति, क्षौमयं लज्जारूपं, तत् हृदयापवारकं, विनेतुम् अपसारयितुं, न प्रभुः न समर्थः, अभवत् अजायत, तस्य सहजत्वादिति भावः॥ ६८॥

सेति।—बलिना प्रबलेनापि, स्मरेण कामेन, क्षौचमैं लज्जाधैर्य्यं, अहापिता अत्याजिता, त्यर्जायतुमक्षमेत्यर्थः, [जहातेर्ण्यन्तात् पुंसि द्विकर्मकादप्रधाने कर्मणि क्तः] अबला दुर्बला, सा भैमी, भृशम् अत्यर्थम्, अशोभत अराजत, "नारीणां भूषणं लज्जा" इति नीतिशास्त्रोक्तेरिति भावः; तथा हि, जनः लोकः, वसनं वस्त्रं, विनाऽपि ऋतेऽपि, भाति शोभते, तु किन्तु, व्रीड़धैर्य्ययोः लज्जाधीरत्वयोः, परिवर्जने परित्यागे, न च नैव, भातीति अन्वयः॥ ६९॥

इत्यमुं तदभिलापनोत्सुकं धूनितेन शिरसा निरास सा ॥ ९० ॥
या शिरोविधुतिराह नेति ते सा मया न किमियं समाकलि?।
तन्निषेधसमसङ्ख्यताविधिर्व्यक्तमेव तव वक्ति वाञ्छितम् ॥ ७१ ॥

आत्थेति।—हे प्रिये! मां रतयाचितं सुरतभिक्षां, यत् यतः, न इति "न दास्यामि" इति, न आत्थ न ब्रवीषि, मम सुरतप्रार्थनायां न दास्यामि इति यत् त्वं न वदसीत्यर्थः, अतः अप्रतिषेधाद्धेतोः, स्फुटं व्यक्तम्, अनुमतवती स्वीकृतवती, असि भवसि, "अप्रतिषिद्ध परमतम् अनुमतं भवति" इति न्यायात् इति भावः; इति इत्थं, तस्याः दमयन्त्याः, तस्य अप्रतिषेधवचनस्येत्यर्थो वा, अभिलापनाय वाचनाय, उत्सुकम उद्युक्तम्, आग्रहान्वितमित्यर्थः, अमुं प्रियं, सा भैमी, धूनितेन कम्पितेन, [ "धूञ्-प्रीञोर्नुगवक्तव्यः" ] शिरसा मूर्द्धा, निषेधसूचकशिरश्चालनेनेत्यर्थः, निरास प्रत्याख्यातवती, अहो! अत्यन्ताभिमतार्थेऽपि निषेधशीलता स्त्रीणामिति भावः ॥ ९० ॥

येति।—हे प्रिये! ते तव, या शिरोविधुतिः निषेधसूचकमस्तकचालनं, [ कर्त्री ] न इति आह न दास्यामि इति निषेधं ब्रूते, सा इयं शिरोविधुतिः, मया न समाकलि किम? न सम्यक् अबोधि किम्? अपि तु गृहीतार्थैव इत्यर्थः, [ कलयतेः कर्मणि लुङ् ] किं त्वया समाकलि? इत्याह,तस्य शिरोविधुतिद्वयरूपस्य प्रतिपाद्यस्य, निषेधस्य असम्मतेः, समसङ्ख्यतया प्रतिपादकस्य नञोऽपि द्विसङ्ख्यतया, प्रतिपादितो विधिः विधानं, "द्वौ नञौ प्रकृतमर्थं गमयतः" इति न्यायात् सुरतानुमोदनरूप इत्यर्थः, तव वाञ्छितम् अभिलाषं, व्यक्तं स्फुटमेव, वक्ति कथयति, [ वचेर्लट् ] निषेधार्थमपि वारद्वयशिरोविधूननं ते सम्मतिमेव सूचयति, नञ्द्वयेन प्रकृतार्थस्य गम्यमानत्वादिति भावः ॥ ७१ ॥

नात्थ नात्थ शृणवानि तेन किं ते न वाचम् ? इति तां निगद्य सः ।
सा स्म दूत्यगतमाह तं यथा तज्जगाद मृदुभिस्तदुक्तिभिः ॥ ७२ ॥
नीविसीम्नि निविडं पुराऽकृणत् पाणिनाऽथ शिथिलेन तत्करम् ।
सा क्रमेण न न नेति वादिनी विघ्नमाचरदमुष्य केवलम् ॥ ७३ ॥

नेति ।—हे प्रिये ! न आत्थ मया सह त्वं न आलपसि, न आत्थ नैव कथयसि, तेन अनालपनेन हेतुना, ते तव, वाचं वचनं, न शृणवानि किम् ? न शृणुयां किम् ? अपि तु शृणुयामेव, इत्यमन्त्रणानिषेधः ; सः नलः, तां प्रियाम्, इति एवं, निगद्य उक्त्वा, सा भैमी, दूत्यगतं दूतरूपेण दमयन्तीसमीपमुपस्थितं, तम् आत्मानं नलं,यथा नवमसर्गोक्तेन येन प्रकारेण, आह स्म उक्तवती, तत् सर्वं, मृदुभिः नम्राभिः, तस्याः दमयन्त्या एव, उक्तिभिः कथाभि ,दमयन्तीवाक्यानुकरणैरित्यर्थः,जगाद उवाच। तदा मत्समीपे वाक्यमुच्चार्य्य इदानीमनुच्चारणे न किमपि फलम्, अतोऽवश्यमेव मया सह आलापिष्यसीति भावः ॥ ७२ ॥

नावीति ।—सा दमयन्ती, नीविसीम्नि कटीवस्त्रग्रन्थिसमीपे, तत्करं प्रियहस्तं, ग्रन्थिमोचनाय उपस्थितमिति भावः, पुरा प्रथमं, पाणिना स्वकरेण, निविड दृढ़ यथा तथा, अकृणत् रुद्धवती, [ कृणाडेः कर्त्तरि लङ् ] अथ कियद्दिनानन्तरं, शिथिलेन श्लथेन, अदृढ़ेनेत्यर्थः, पाणिना अकृणदित्यन्वयः, क्रमेण क्रमशः भयभङ्गेन, तत्परमित्यर्थः, केवलं न न नेति वादिनी केवलं वाचिकनिषेधम् एव कुर्वती सती, अमुष्य प्रियकरव्यापारस्य, विघ्नं नीविमोचनप्रतिबन्धम्, आचरत् अकुर्वदित्यर्थः, क्रमशो लज्जापगमात् वाङ्मात्रेणैव केवलं विघ्नमाचरत् न तु अङ्गेनेति भावः । अत्रैकस्मिन् नीविदेशे क्रमादनेकव्यापारसम्बन्धोक्तेः पर्य्यायालङ्कारभेदः ॥ ७३ ॥

रूपवेषवसनाङ्गवासनाभूषणादिषु पृथग्विदग्धताम् ।
साऽन्यदिव्ययुवतिभ्रमक्षमा नित्यमेत्य तमगान्नवा नवा ॥ ७४ ॥
इङ्गितेन निजरागसागरं संविभाव्य चटुभिर्गुणज्ञताम् ।
भक्ततां च परिचर्य्ययाऽनिशं साऽधिकाधिकवशं व्यधत्त तम् ॥७५॥
स्वाङ्गमर्पयितुमेत्य वामतां रोषितं प्रियमथानुनीय सा ।

रूपेति ।—रूपं सौन्दर्य्यं, वेषः विविधप्रकारनेपथ्यं, वसनं वस्त्रम्, अङ्गवासना धूपादिना शरीरसंस्कारः, भूषणं कङ्कणादि, तानि आदिः येषां तेषु विविधप्रकारप्रसाधनादिषु विषयेषु, नित्यं प्रत्यहमेव, पृथक् भिन्नाभिन्नरूपां, विदग्धतां कुशलताम्, एत्य प्राप्य, प्रत्यहमेव नवनववेशरचनां कुर्वतीत्यर्थः, अत एव नवा नवा नूतना नूतना सती, [ आभीक्ष्ण्ये द्विर्भावः ] सा भैमी, अन्या अपरा काचित्, दिव्या स्वर्गीया,युवतिः तरुणी,उर्वश्यादिरित्यर्थः, इति भ्रमे भ्रान्तिजनने, क्षमा समर्था सती, तं नलम्, अगात् अगच्छत्, समतोषयदित्यर्थः [ इणो गा लुङि ] ॥ ७४ ॥

इङ्गितेनेति ।—सा भैमी, अनिशं निरन्तरम्, इङ्गितेन कटाक्षवीक्षणादिचेष्टितेन, निजं स्वकीयं, रागसागरम् अनुरागार्णवं, सागरवदसीममनुरागाधिक्यमित्यर्थः, चटुभिः प्रियवादैः, गुणज्ञतां पत्युः गुणाभिज्ञतां, तथा परिचर्य्यया सेवया, भक्ततां च तस्मिन् भक्तिमत्त्वञ्च, संविभाव्य सम्यग् ज्ञापयित्वा, तं प्रियम्, अधिकाधिकवशम् उत्तरोत्तरमधिकायत्तं, [ "प्रकारे गुणवचनस्य" इति द्विरुक्तिः, कर्मधारयवद्भावात् सुपो लुक् ] व्यधत्त अकरोत्, इङ्गिताद्यनुमितैः रागादिगुणैस्तस्याः सोऽत्यन्तवशंवदोऽभूत् इति निष्कर्षः ॥ ७५ ॥

स्वाङ्गमिति ।—सा दमयन्ती, स्वाङ्गं निजवराङ्गादिकम्, अर्पयितुं नलकर्त्तृकस्पर्शनाद्यर्थं प्रदातुं, वामतां प्रतिकूलताम्,

आतदीयहठसम्बुभुक्षुतं नान्वमन्यत पुनस्तमर्थिनम् ॥ ७६ ॥
आद्यसङ्गमसमादराण्यधात् वल्लभाय दधती कथञ्चन ।
अङ्गकानि घनमानवामताव्रीडलम्भितदुरापतानि सा ॥ ७७ ॥
पत्युरागिरिशमातरु क्रमात् स्वस्य चागिरिजमाक्षतं वपुः ।
तस्य चार्द्धमखिलं पतिव्रता क्रीडति स्म तपसा विधाय सा ॥ ७८॥

असम्मतिमित्यर्थः, एत्य प्राप्य, अथ तदनन्तरं, रोषितम् इच्छा-ऽपूरणात् कोपितं, प्रियं पतिम्, अनुनीय चरणधारणादिना प्रसाद्य, पुनः भूयः, अर्थिनम् अङ्गार्पणयाचिनं, तं प्रियं, तदीया प्रियसम्बन्धिनी, या हठात् बलात्, सम्बुभुक्षुता सम्भोक्तुमिच्छा, तावत् पर्य्यन्तम् आतदीयहठसम्बुभुक्षुतं, यावत् स बलपूर्वकं न सम्भोक्तुमैच्छत् तावत्पर्य्यन्तमित्यर्थः, [ "आङ् मर्य्यादाऽभि-विध्योः" इत्यव्ययीभावेन नपुंसकत्त्वम् ] न अन्वमन्यत न अनुमोदितवती, व्यवहारोऽयं सम्भोगपिपासावर्द्धनार्थमिति भावः ॥ ७६ ॥

आद्येति ।—सा नलप्रिया, घनैः प्रगाढ़ैः, मानवामताव्रीडैः प्रणयकोपप्रतिकूलतात्रपाभिः,लम्भिता प्रापिता,दुरापता दौर्लभ्यं येषां तादृशानि,अङ्गकानि सदयभोग्यानि सुकुमारावयवानीत्यर्थः, [ ह्रस्वे अनुकम्पायां वा कन् ] वल्लभाय प्रियनलाय, कथञ्चन लज्जावशात् कृच्छ्रेण, दधती धारयन्ती, ददती सतीत्यर्थः, आद्यसङ्गमेन प्रथमसम्भोगकालेन, समः तुल्यः, आदरः प्रागाग्रहः येषां तादृशानि, अधात् धृतवती, प्रथमसङ्गम-तुल्यादरं प्रापानीव स्वाङ्गानि प्रियाय अर्पितवतीति भावः ॥७७॥

पत्युरिति ।—पतिव्रता साध्वी, सा दमयन्ती, तपसा पति-सेवारूपेण तपस्याप्रभावेण, क्रमात् क्रमानुसारेण, औचित्यानु-सारेणेत्यर्थः, पत्युः नलस्य, आगिरिशं शङ्करमारभ्य, आतरु

न स्थली न जलधिर्न काननं नाद्रिभूर्न विषयो न विष्टपम्।
क्रीड़िता न सह यत्र तेन सा सा विधैव न यया यया न वा ॥७९॥
नम्रयाऽंशुकविकर्षिणि प्रिये वक्त्रवातहृतदीप्तदीपया।
भर्त्तृमौलमणिदीपितास्तया विस्मयेन ककुभो निभालिताः ॥८०॥

---

वृक्षपर्य्यन्तं, स्वस्य आत्मनश्च, आगिरिजं गिरिजाम् अम्बिकामारभ्य, आलतं लतापर्य्यन्तं, [ सर्वत्राभिविधावव्ययीभावः ] वपुः देवगन्धर्वोरगमृगविहगादिदम्पतीशरीरं, तथा तस्य वपुषः, अर्हम् अनुरूपम्, अखिलञ्च समग्रं क्रीड़ासाधनञ्चेत्यर्थः, विधाय कृत्वा, क्रीडति स्म चक्रीड़, पत्युर्गिरिशस्वरूपत्वे स्वस्य गिरिजास्वरूपत्वं तथा तदनुरूपं व्याघ्रचर्मादिरूपशय्यादिकं, तथा नलस्य वृक्षस्वरूपत्वे स्वस्य लतास्वरूपत्वञ्च सम्पाद्य सा इच्छानुरूपं रेमे, निरङ्कुशमहिमत्वात् पतिव्रतानामिति भावः ॥७८॥

नेति।—सा भैमी, तेन नलेन सह, यत्र यस्मिन् प्रदेशे, न क्रीडिता न क्रीड़ितवती, [ कर्त्तरि क्तः ] सा तादृशी, स्थली अकृत्रिमभूमिः, स्थलदेश इत्यर्थः, न, [ "जानपद—" इत्यादिना अकृत्रिमार्थे ङीष् ] स जलधिः नदीसागरतड़ागादिजलाधार इत्यर्थः, न, तत् काननं वनं, न, सा अद्रिभूः पर्वतसानुः, न, स विषयः देशः, न, तत् विष्टपं जगत्, न, सर्वत्र आसीदिति शेषः, किञ्च सा तादृशी, विधैव प्रकारः एव, न, आसीदिति शेषः, यया यया विधया धेनुकादिबन्धप्रकारेण, न वा, क्रीड़िता इति शेषः, तेन सह सर्वत्रैव विजहार इत्यर्थः ॥ ७९ ॥

नम्रयेति।—प्रिये नले, अंशुकविकर्षिणि परिहितवसनाकर्षणकारिणि सति, नम्रया नतया, गूढाङ्गगोपनाय अवनतपूर्वकायया इत्यर्थः, तथा वक्त्रवातेन मुखमारुतेन, फुत्कारेणेत्यर्थः, हृतः निर्वापितः, दीप्तः प्रज्वलितः, दीपः प्रदीपः यया तया-

कान्तमूर्द्ध्नि दधती पिधित्सया तन्मणेः श्रवणपूरमुत्पलम्।
रन्तुमर्चनमिवाचरत् पुरः सा स्ववल्लभतनोर्मनोभुवः॥ ८१॥

तं पिधाय मुदिताऽथ पार्श्वयोर्वीक्ष्य दीपमुभयत्र सा स्वयोः।
चित्तमाप कुतुकाद्भुतत्रपाऽऽतङ्कसङ्कटनिवेशितस्मरम्॥ ८२॥

भूतया, तया भैम्या, भर्त्तृमौलिमणिभिः पत्युर्मुकुटस्थरत्नैः, दीपिताः प्रकाशिताः, ककुभः दिशः, विस्मयेन दीपे निर्वापितेऽपि कथमालोकप्रकाश इत्याश्चर्य्येण, निभालिताः दृष्टाः॥८०॥

कान्तेति।—सा भैमी, तस्य भर्त्तृमौलिस्थितस्य, मणेः रत्नस्य, पिधित्सया पिधातुम् आवरितुम् इच्छया, कान्तस्य प्रियस्य, मूर्द्ध्नि शिरसि, श्रवणपूर निजकर्णभूषणीभूतम्, उत्पलं नीलोत्पलं, दधती स्थापयन्ती सती, रन्तुं रतिकर्म कर्त्तुं, पुरः कर्मप्रारम्भे, स्ववल्लभः निजपतिः एव, तनुः मूर्त्तिः यस्य तादृशस्य नलमूर्त्तेः, मनोभुवः कामस्य, रत्यधिदेवतस्य इति यावत्, अर्चनं पूजनम्, आचरत् इव अन्वतिष्ठदिव इत्युत्प्रेक्षा॥ ८१॥

तमिति।—सा भैमी, तं दिगुद्भासकं शिरोमणिं, पिधाय कर्णोत्पलेन आच्छाद्य, मुदिता अन्धकारसम्भावनया हृष्टा, अभूदिति शेषः, अथ अनन्तरं, स्वयोः स्वकीययोः, उभयत्र उभयोः, पार्श्वयोः दीपं प्रज्वलितप्रदीपद्वयमित्यर्थः, वीक्ष्य दृष्ट्वा, कुतुकम् अकस्माद्दीपदर्शनात् कौतुकम्, अद्भुतं निर्वापितस्यापि पुनः प्रादुर्भावादाश्चर्य्यं, त्रपा पत्या विवस्त्रीकरणात् लज्जा, आतङ्कः कोऽयमदृष्टपूर्वव्यापार इति शङ्का, तेषां सङ्कटे सम्बाधे, परस्परसङ्घर्षे इत्यर्थः, निवेशितः सस्थापितः, निरुद्ध इत्यर्थः, स्मरः कामः यस्मिन् तत् तादृक्, चित्तं मनोभावम्, आप प्राप्तवती, तथा प्रहृष्टोऽपि कामः तदा किञ्चित् सङ्कुचितः इव आसीत् इति भावः॥ ८२॥

एककस्य शमने परं पुनर्जाग्रत शमितमप्यवेक्ष्य तम्।
जातवह्निवरसंस्मृतिः शिरः सा विधूय निमिमील केवलम् ॥८३॥
पश्य भीरु! न मयाऽपि दृश्यसे यन्निमेषितवती दृशावसि।
इत्यनेन परिहस्य सा तमः संविधाय समभोजि लज्जिता ॥ ८४ ॥
चुम्बसेऽयमयमङ्कसे नखैः श्लिष्यसेऽयमयमर्प्यसे हृदि।

एककस्येति।—एककस्य तयोरेकस्य, दीपस्य प्रदीपस्य, शमने निर्वापणे कृते सति, शमितमपि पूर्वं निर्वापितमपि, परम् अपर, तं दीपं, पुनः भूयः, जाग्रतं नलमायया प्रज्वलन्तं, [ "नाभ्यस्ताच्छतु" इति नुमः प्रतिषेधः ] अवेक्ष्य विलोक्य, जाता उत्पन्ना, वह्नेः अग्नेः,वरस्य "या दाहपाकौपयिकी तनु." इत्यादिनोक्तवरदानस्य, संस्मृतिः सम्यक् स्मरणं यस्याः सा तादृशी, सा भैमी, शिरः मस्तकं, विधय कम्पयित्वा, स्मरणं नाटयित्वा दुर्वारत्वं निश्चित्येति भावः, केवलं निमिमील स्वयं निमीलिताक्षी जाता, स्वाभाविकलज्जावशादिति भावः ॥८३॥

पश्येति।—भीरु! हे वराङ्गने! लज्जाया वराङ्गनाभूषणत्वादिति भावः, [ "भियः क्रुक्लुकनौ" इति क्रु-प्रत्ययः, ततः ऊङन्तत्वात् नदीत्वात् ह्रस्वः। "भीरुरार्त्ते त्रिलिङ्गः स्यात् वरयोषिति योषिति" इति मेदिनी ] यत् यतः, दृशौ नयनद्वयं, निमिषितवती लज्जया निमीलितवती, असि भवसि, त्वमिति शेषः, मम दर्शनभयादिति भावः, तत् तत एव, मया अपि न दृश्यसे अवलोक्यसे, त्वमिति शेषः, त्वन्निमीलने सर्वस्यान्धकारावृतत्वादिति भावः, पश्य अवलोकय, इति इत्थम्, अनेन नलेन, परिहस्य उपहस्य, तमः अन्धकारं, संविधाय निर्माय, लज्जिता व्रीड़िता, सा दमयन्ती, समभोजि सम्भुक्ता, अन्यथा उभयोस्तुल्यप्रीतेरयोगादिति भावः ॥ ८४ ॥

नो पुनर्न करवाणि ते गिरं हुं त्यज त्यज तवास्मि किङ्करा ॥८५॥
इत्यलीकरतकातरा प्रियं विप्रलभ्य सुरते ह्रियं च सा।
चुम्बनादि विततार मायिनी किं विदग्धमनसामगोचरः? ॥८६॥

---

अथान्धकारकल्पनायाः फलं युग्मेनाह, चुम्बसि इत्यादि।—हे प्रियतम! इत्यामन्त्रणपदमूहनीयम्; अयं त्वं, चुम्बसि तव अधरः पीयते, अयं त्वं, नखैः अङ्कसि चतकरणेन चिह्नसि, अयं त्वं. श्लिष्यसि आलिङ्गसि, अयं त्व, हृदि उरसि, अर्प्यसे स्थाप्यसे इत्यर्थः, सर्वत्र मयेति शेष, ते तव, गिरं वाक्यं, चुम्बनादिप्रार्थनारूपामित्यर्थ, पुनः न करवाणि? न पालयामि? इति नो न, अवश्यमेव करवाणीत्यर्थः, हुमिति अनुनये, त्यज त्यज मा मुञ्च मुञ्च, ते तव, किङ्करा दासी, [ "किंयत्तत्बहुषु कृञोऽज्विधानम्" इत्यच्-प्रत्यये टाप् ] अस्मि भवामि, अतस्तवाभिलाषः सर्वथैव पूरणीया मयेति भावः॥ ८५॥

इतीति।—इति इत्थम्, अलीकं मिथ्या यथा तथा, रते रमणे, कातरा असमर्था,कपटेनैव रतकातर्य्यं नाटयन्ती न पुनस्तत्त्वत इति भाव, मायिनी वाक्छलचतुरा, सा भैमी, सुरते रमणकाले, प्रिय नलं, ह्रियञ्च लज्जाञ्च, विप्रलभ्य प्रतार्य्य, चुम्बनादि केवलमधरपानादिकमेवेत्यर्थः,विततार नलाय ददौ; मध्यानायिकाभावत्वेऽपि मुग्धात्वप्रकटनात् प्रकृतसुरताकरणेन प्रियविप्रलम्भः, किञ्च चुम्बनादिषु लज्जातिशयसम्भवेऽपि तदवलम्बनाभावात् लज्जाविप्रलम्भ इति भावः, तथा हि विदग्धानि कालोचितव्यवहारकुशलानि, मनांसि धियः येषां तादृशानां, जनानामिति शेषः, किं वैदग्धाम्, अगोचरः? अविषयः? न किमपीत्यर्थः। अत एव सा विसब्धं विहर्त्तुं शशाक इति भावः॥ ८६॥

क्षेपितोद्गमितमात्रलुप्तया दीपिकाचपलया तमोघने ।
निर्विशङ्करतजन्मतन्मुखाकूतदर्शनसुखान्यभुङ्क्त सः ॥ ८७ ॥
यद्भ्रुवौ कुटिलिते तया रते मन्मथेन तदनामि कार्मुकम् ।
यत्तु हुं हुमिति सा तदा व्यधात्तत् स्मरस्य शरमुक्तिहुङ्कृतम् ॥८८॥
ईच्छितोपदिशतीव नर्त्तितुं तत्क्षणोदितमुदं मनोभुवम् ।
कान्तदन्तपरिपीड़िताधरा पाणिधूननमियं वितन्वती ॥ ८९ ॥

क्षेति ।—सः नलः, तमः अन्धकार एव, घनः मेघः तस्मिन्, क्षेपितेन निजेच्छामात्रेणेव, उद्गमितमात्रं प्रज्वलनक्षणमेव, लुप्ता विनष्टा तया तथोक्तया, क्षणिकयेत्यर्थः, दीपिका प्रदीप एव, चपला विद्युत् तया तद्द्वारा इत्यर्थः, ("विद्युच्चञ्चला चपलाऽपि च" इति यादवः ) निर्विशङ्करतात् अन्धकारजन्यनिरुद्वेगरमणात्, जन्म सम्भवः येषां तादृशानां, तस्याः भैम्याः, मुखाकूतानां वदनचेष्टितानां, दर्शनात् अवलोकनात्, यानि सुखानि हर्षाः तानि, अभुङ्क्त अन्वभूत्, स्थिरप्रकाशे तद्विस्रम्भविघातभयात् क्षणिकप्रकाशेन तन्मुखदर्शनसुखम् अनुभूतवान् इत्यर्थः ॥८७॥

अथ तन्मुखाकूतान्येवाह, यदित्यादि ।—तया भैम्या, रते सुरतकाले, यत् भ्रुवौ भ्रूद्वयं, कुटिलिते सुखातिरेकात् सङ्कोचिते, तत् एव भ्रुकुटिलीकरणमेव, मन्मथेन कामेन, कार्मुकं धनुः, अनामि नमितम्, आकर्षीत्यर्थः, तस्या भ्रूद्वयस्य कामकार्मुकवत् मनोहरत्वादिति भावः ; किञ्च, सा भैमी, तदा रमणकाले, हुं हुम् इति यत् व्यधात् सुखातिरेकात् "हुं हुं" इति यत् अव्यक्तशब्दम् अकरोत्,तत्तु तत् हुङ्कृतमेव, स्मरस्य कामस्य, शरमुक्तिहुङ्कृतं बाणमोचनस्य हुङ्कारस्वरूपम्, अभूदिति शेषः, तत् सर्वं तस्य अधिकमुद्दीपकम् अभूत् इति भावः ॥८८॥

ईच्छितेति ।—कान्तस्य प्रियस्य, दन्तैः दशनैः, परिपीड़िता-,

सा शशाक परिरम्भदायिनी गाहितुं बृहदुरः प्रियस्य न ।
चक्षमे स च न भङ्गरभ्रुवस्तुङ्गपीनकुचदूरतां गतम् ॥ ९० ॥
बाहुवल्लिपरिरम्भमण्डली या परस्परमपीडयत् तयोः ।
आस्त हेमनलिनीमृणालजः पाश एव हृदयेशयस्य सः ॥ ९१ ॥

धरा दंशनेन व्यथितरदनच्छदा, अत एव पाणिधननं तन्नि-वारणाय करकम्पनं, वितन्वती कुर्वती, इयं दमयन्ती, तत्क्षणे सुरतकाले, उदितमुदं स्वप्रभावदर्शनात् सञ्जातहर्षं, मनोभुवम् अनङ्गं, नर्त्तितुं नृत्यं कर्त्तुम्, उपदिशतीव इत्थं नृत्यं कुरु इति शिक्षयन्ती इव,स्थितेति शेषः, [ "आक्रोशन्योर्नम" इति विकल्पा-नुभावः ] ईक्षिता दृष्टा, प्रियेणेति शेषः। नृत्यशिक्षका हि हस्तनर्त्तनेनैव स्वशिष्यान् नर्त्तितुं शिक्षयन्तीति लौकिकाः ॥८९॥

सेति।—परिरम्भदायिनी आलिङ्गनप्रदायिनी, सा भैमी, प्रियस्य नलस्य, बृहत् विशालम्, उरः वक्षस्थल, गाहितुं प्रवेष्टुं, साकल्येनाभिव्याप्तुमित्यर्थः, न शशाक न चक्षमे, नलोरःस्थल-मपेक्ष्य स्वस्य क्षीणाङ्गत्वादिति भावः, इत्याश्रयाधिक्येनाधिका-लङ्कारभेदः। सः च नलोऽपि, भङ्गरभ्रुवः सुवङ्किमभ्रूशालिन्याः प्रियायाः, तुङ्गपीनकुचाभ्याम् उन्नतस्थूलपयोधराभ्यां, दूरतां व्यवधानं, गतं प्राप्तम, उरः गाहितुमिति पूर्वेणान्वयः, न चक्षमे न शशाक, कुचयोरोन्नत्यस्थौल्याभ्यां व्यवहितत्वादिति भावः ; इति सम्बन्धेऽप्यसम्बन्धरूपातिशयोक्तिः ॥ ९० ॥

बाह्विति।—तयोः भैमीनलयोः,या बाहुवल्लिभ्यां भुजलताभ्यां, परिरम्भेण परस्परमश्लेषेण, मण्डली वेष्टनं, भुजचतुष्टयाना मण्डलाकारता इत्यर्थः, परस्परम् अन्योऽन्यम्, अपीडयत् प्रगाढसंश्लेषेण पीडितवती, सः परिरम्भव्यापार इत्यर्थ, हृदये शेते इति हृदयेशयः कामः तस्य, [ "अधिकरणे शेतेः" इत्यच्-

वल्लभेन परिरम्भपीडितौ प्रेयसीहृदि कुचाववापतुः ।
केलतीमदनयोरुपाश्रये तत्र वृत्तमिलितोपधानताम् ॥ ९२ ॥
तत् प्रियोरुयुगलं नलार्पितैः पाणिजस्य मृदुभिः पदैर्बभौ ।
उत्प्रशस्ति रतिकामयोर्जयस्तम्भयुग्ममिव शातकुम्भजम् ॥ ९३ ॥
वल्गमानि विधिनाऽपि तावकं नाभिमूरुयुगमन्तराऽङ्कनम् ।

प्रत्ययः । "शयवासवासिष्वकालात्" इत्यलुक्] हेमनलिनी-मृणालात् स्वर्णकमलिनीदण्डात्, जायते इति तज्जः अतिगौर-त्वात् मृदुत्वाच्च सुवर्णमयकमलदण्डात् जात इव प्रतीयमानः, पाशः पाशाख्यबन्धनरज्जुरिव, आस्त अभवत् इत्युत्प्रेक्षा ॥ ९१ ॥

वल्लभेनेति।—वल्लभेन प्रियेण नलेन, परिरम्भेण प्रगाढालिङ्ग-नेन, पीडितौ चिपिटीकृतौ इत्यर्थः, प्रेयस्याः दमयन्त्याः, हृदि वक्षसि, स्थितौ इति शेषः, कुचौ स्तनौ एव, केलतीमदनयोः रतिकामयोः, ("कामस्त्री केलती रतिः" इति यादवः) उपाश्रये अवष्टम्भभूते, तत्र दमयन्तीवक्षसि, वृत्ते वर्त्तुले, मिलिते परस्परसङ्गते, उपधाने उपबर्हे, ("उपधानं तूपबर्हम्" इत्य-मरः) तयोः भावः तत्ता तां शिरोनिधानताम्, अवापतुः जग्मतुः, इवेति शेषः, इत्युत्प्रेक्षा ॥ ९२ ॥

तदिति।—तत् अतिमनोज्ञं, प्रियायाः कान्तायाः, ऊरु-युगलं सक्थिद्वयं, नलेन अर्पितैः न्यस्तैः, कृतैरित्यर्थः, मृदुभिः कोमलैः, ईषन्मात्रैरित्यर्थः, पाणिजस्य नखस्य, पदैः चिह्नैः, नखव्रणैरित्यर्थः, उत् उन्नता, उत्कीर्णा इत्यर्थः, प्रशस्तिः प्रशंसा-वचनं यत्र तत् तादृशम् उत्प्रशस्ति उत्कीर्णप्रशंसावचनं, शातकुम्भजं हिरण्मयं, रतिकामयोः जयस्तम्भयुग्मम् इव जेतृत्वसूचकस्तम्भद्वयमिव, बभौ शुशुभे इत्युत्प्रेक्षा ॥ ९३ ॥

वल्गमानीति।—हे प्रिये! तावकं त्वदीयं, नाभिम् ऊरुयुगस्य

स व्यधादधिकवर्णकैरिदं काञ्चनैर्यदिति तां पुराऽऽह सः ॥९४॥
पीडनाय मृदुनी विगाह्य तौ कान्तपाणिनलिने स्पृहावती ।
तत्कुचौ कलशपीननिष्ठुरौ हारहासविहते वितेनतुः ॥ ९५ ॥
यौ कुरङ्गमदकुङ्कुमाञ्चितौ नीललोहितरुचौ वधूकुचौ ।

---

अन्तरा तन्मध्यवर्त्ति, [ "अन्तराऽन्तरेण युक्ते" इति द्वितीया । "अन्तराशब्दो मध्यनाधेयप्रधानमाचष्टे" इति काशिका ] अङ्कम् अत्यन्ताभिलषणीयत्वेन आदरणीयमङ्गं, वराङ्गमित्यर्थः, विधिना वेधसाऽपि, बहु श्रमानि अतिशयेन समाहृतम्; कुतः ? यत् यस्मात्, सः विधिः, इदम् अङ्कम्, अधिकवर्णकैः समुज्ज्वलाभैः, काञ्चनैः सुवर्णैः, व्यधात् सृष्टवानिव, इति इत्थं, सः नलः, तां प्रियां, पुरा सुरतारम्भात् पूर्वम्, आह उक्तवान्, [ "पुरि लुङ् चास्मे" इति भूते लट् ] ॥ ९४ ॥

पीडनायेति ।—कलशवत् घटवत्, पीनौ स्थूलौ, निष्ठुरौ कठिनौ च, तस्याः दमयन्त्याः, कुचौ स्तनौ, [ कर्त्तारौ ] मृदुनी कोमले, तथाऽपि तौ अतिकठिनौ दमयन्तीकुचौ, विगाह्य अवगाह्य, प्राप्य इत्यर्थः, पीड़नाय पीड़नं कर्त्तुं, स्पृहावती अभिलषितवती, व्याप्रियमाणे इत्यर्थः, कान्तस्य नलस्य, पाणिनलिने करकमले, [ कर्मणी ] हारः कुचविलम्बिमुक्तावली एव, हासः हास्यं शुक्लत्वादिति भावः, तेन विहते तिरस्कृते, तिरस्कारेण विताड़िते इव इत्यर्थः, वितेनतुः चक्रतुः, कोमलत्वात् दुर्बलयोः नलपाण्योः स्थूलकठिनयोः बलिनोः दमयन्तीकुचयोः पीड़नप्रवृत्तौ दुर्बलस्य प्रबलकर्त्तृकहास-ताड़नयोरवश्यभाव्यत्वादिति भावः । अशक्यार्थप्रवृत्ताः परिहासास्पदं भवन्तीति निष्कर्षः ॥ ९५ ॥

याविति ।—यौ वधूकुचौ दमयन्तीस्तनौ, कुरङ्गमदकुङ्कुमाभ्यां

स प्रियोरसि तयोः स्वयम्भुवोराचचार नखकिंशुकार्चनम् ॥८६॥
अम्बुधेः कियदनुत्थितं विधुं स्वानुबिम्बमिलितं व्यडम्बयत्।
चुम्बदम्बुजमुखीमुखं तदा नैषधस्य वदनेन्दुमण्डलम् ॥ ८७ ॥
पूगभोगबहुताकषायितैर्वामितैर्हृदयभास्करेण तौ।
चक्रतुर्निधुवनेऽधरामृतैस्तत्र साधु मधुपानविभ्रमम् ॥ ८८ ॥

कस्तूरिकाकश्मीरजाभ्याम्, अञ्चितौ पूजितौ, लेपनेन शोभितौ सन्तौ इत्यर्थः, अत एव नीला कस्तूरीलिप्तस्थाने कृष्णवर्णा च, सा लोहिता कुङ्कुमलिप्तस्थाने रक्तवर्णा च, [ "वर्णो वर्णेन" इति तत्पुरुषसमासः ] रुक् प्रभा ययोः तादृशौ, अन्यत्र—नीलः कण्ठे लोहितः केशेषु इति नीललोहितः महादेवः, तस्मिन् रुक् रुचिः, अनुराग इत्यर्थः ययोः तादृशौ, बभूवतुरिति शेषः, प्रियायाः भैम्याः, उरसि वक्षसि, स्वयम्भुवोः यौवनागमे स्वतः एव उत्पन्नयोः, अन्यत्र—स्वयम्भूमूर्त्त्योश्च, तयोः वधूकुचयोः, सः नलः, नखैः नखक्षतैरेव, किंशुकैः पलाशकुसुमैः, रक्तवर्णता-साम्यात् वक्रतारूपाकारसाम्याच्चेति भावः, अर्चनं पूजनम्, आचचार चकारेव ; स्वयम्भूत्वेन देवत्वात् तयोरर्चनाया औचित्यादिति भावः। गम्योत्प्रेक्षा ॥ ८६ ॥

अम्बुधेरिति।—तदा संसर्गकाले, अम्बुजमुख्याः कमलवदनायाः प्रेयस्याः,मुखं वदनं,चुम्बत् अधरं स्वदमानं,नैषधस्य नलस्य, वदनेन्दुमण्डलं मुखचन्द्रबिम्बं, [कर्त्तृ] अम्बुधेः सागरात्, कियत् किञ्चित्, अनुत्थितम् अनुदितम्,अधिकांशमुदितम् ईषत् समुद्रगर्भे अवस्थितमित्यर्थः, स्वानुबिम्बेन स्वस्य विधोरेव जलान्तर्वर्त्ति-प्रतिबिम्बेन,मिलितं युक्तं,विधुम् इन्दुं,व्यडम्बयत् अनुचकार। तयोः मुखयोर्मिथः संश्लेषात् कार्त्स्न्येनादृश्यमानत्वादिदमुपमितम् ॥८७॥

पूगेति।—तौ भैमीनलौ, तत्र तस्मिन्, निधुवने रते,

आह नाथवदनस्य चुम्बत: सा स्म शीतकरतामनन्तरम् ।
सीत्कृतानि सुदती वितन्वती सत्त्वदत्तपृथुवेपथुस्तदा ॥ ८९ ॥
चुम्बनाय कलितप्रियाकुचं वीरसेनसुतवक्त्रमण्डलम् ।

( "व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम्" इत्यमर: ) पूगभोग: क्रमुकभक्षणं, ताम्बूलचर्वणमिति यावत्, ( "पूग: क्रमुकवृन्दयो:" इत्यमर: ) तस्य बहुतया बाहुल्येन ; "पूगभाग" इति पाठे—चर्व्यमाणताम्बूले गुवाकभागस्य आधिक्यतया इत्यर्थ:, कषायितै: सञ्जातकषायरसै:, तथा उदयभास्करेण कर्पूरविशेषेण, वासितै: सुरभितै, अधरामृतै: परस्परमधरसुधापानैरित्यर्थ:, साधु सम्यक्, मधुपानस्य मद्यपानस्य, विभ्रममिव विभ्रमं लीलां, चक्रतु: आचेरतु:, गुवाकादिमदकारकद्रव्यमिश्रानजमद्यपानेन यथा मत्तता जायते तथा तादृशाधरमधुपानेनापि मत्तौ तौ सुरतं चक्रतुरिति निष्कर्ष: । अत्र सादृश्याक्षेपात् निदर्शनालङ्कार: ॥८८॥

आहेति ।—सुदती मनोज्ञदशना, सा भैमी, तदा अधरपानकाले, सीत्कृतानि दंशनवेदनया सीत्कारान्, वितन्वती कुर्वती, तथा सत्त्वेन सत्त्वगुणोद्रेकेण, दत्त: जनित:, पृथु: महान्, वेपथु: कम्पाख्य: सात्त्विकभाव: यस्या: सा तादृशी च सती, चुम्बत: चुम्बनं कुर्वत:, नाथवदनस्य प्रियमुखस्य, शीतकरतां शीतांशुत्वमेव शीतकारित्वं, [ "कृञो हेतु—" इत्यादिना ताच्छील्ये ट-प्रत्यय: ] अनन्तरम् अव्यव्यमेव, आह स्म उवाच, ज्ञापयमासेत्यर्थ:, अन्यथा कथं शीतजन्यं कम्पसीत्कारादिकार्य्यमिति भाव: ॥ ८९ ॥

चुम्बनायेति ।—चुम्बनाय स्तनोपरि चुम्बनकरणाय, कलित: गृहीत:, मुखेनैव स्पृष्ट इत्यर्थ:, प्रियाकुच: भैमीस्तनो येन तादृशं, वीरसेनसुतवक्त्रमण्डलं नलमुखबिम्बं, [ कर्तृ ]

प्राप भर्त्तुममृतैः सुधांशुना सक्तहाटकघटेन मित्रताम् ॥ १०० ॥
वीक्ष्य वीक्ष्य पुनरैक्षि साऽमुना पर्य्यरम्भि परिरभ्य चासकृत्।
चुम्बिता पुनरचुम्बि चादरात्तृप्तिराप न कथञ्चनापि च ॥ १०१॥
छिन्नमप्यतनु हारमण्डलं मुग्धया सुरतलास्यकेलिभिः।
न व्यतर्कि सुदृशा चिरादपि स्वेदविन्दुकितवक्षसा हृदि ॥१०२॥

अमृतैः सुधाभिः, भर्त्तुं पूरयितुं, सक्तः सृष्टः, हाटकस्य कनकस्य, घटः कुम्भो यस्मिन् तादृशेन, सुधांशुना चन्द्रेण, मित्रतां सदृशतां, प्राप लेभे, नलमुखस्य चन्द्रतुल्यत्वात् भैमीकुचस्य च स्वर्णघट-साम्यादिति भावः। कनककलशे अमृतसम्भरणार्थं समागतः साक्षात् अमृतांशुरिव इत्युत्प्रेक्षया अमृतकरत्वं व्यज्यते इति अलङ्कारेण वस्तुध्वनिः ॥ १०० ॥

वीक्ष्येति।—अमुना नलेन, सा भैमी, आदरात् आग्रहातिशयात्,पदमिदं चुम्बनालिङ्गनयोरपि योज्यम्; वीक्ष्य वीक्ष्य पुनः पुनर्दृष्ट्वाऽपि, पुनः भूयः, ऐक्षि ईक्षिता, असकृत् वारं वारम्, आदरात् परिरभ्य आलिङ्ग्यापि, पर्य्यरम्भि पुनः परिरब्धा, [ "रभेरशब्लिटोः" इति नुमागमः ] तथा आदरात् चुम्बिता कृतचुम्बनाऽपि, पुनश्च भूयोऽपि, अचुम्बि चुम्बिता, कथञ्चनापि केनापि प्रकारेण, तृप्तिः आकाङ्क्षापूर्त्तिः, न च आपि नैव प्राप्ता, रागातिरेकात् इति भावः। [सर्वत्र कर्मणि लुङ्] ॥ १०१ ॥

छिन्नमिति।—मुग्धया सुरतमोहितचित्तया, सुदृशा सुनयनया, भैम्येति शेषः, सुरतानि रमणान्येव, लास्यकेलयः नृत्यक्रीड़ाः तैः, हृदि वक्षोपरि, स्थितमिति शेषः, अतनु महत्, हारमण्डलं मुक्ताकलापः, छिन्नं त्रुटितमपि, स्वेदविन्दवः एव स्वेदविन्दुकाः घर्मोदककणाः, [ स्वार्थे कः ] ते अस्य सञ्जाताः इति स्वेदविन्दुकितं सुरतश्रमजन्यघर्मविन्दुयुक्तं, [ "तारकादि-

यत् तदीयहृदि हारमौक्तिकैरासि तत्र गुण एव कारणम्।
अन्यथा कथममुत्र वर्त्तितुं तैरशाकि न तदा गुणच्युतैः? ॥१०३॥
एकवृत्तिरपि मौक्तिकावलिश्छिन्नहारविततौ तदा तयोः।
छाययाऽन्यहृदयेऽपि भूषणं भ्रान्तिवारिभरभावितेऽभवत्॥ १०४॥

त्वादितप्] वक्षः उरःस्थलं यस्याः तादृशया सत्या, चिरात् दीर्घकालेनापि, न व्यतर्कि न व्यभावि, छिन्नेति न अज्ञायि इत्यर्थः, स्वेदबिन्दुषु हारभ्रमादिति भावः। अत एव भ्रान्तिमदलङ्कारः॥ १०२॥

यदिति।—तदीये भैमीसम्बन्धिनि, हृदि वक्षसि, अन्तःकरणे च, हारमौक्तिकैः हारस्थितमुक्तावलीभिः, यत् आसि अवस्थितम्, [ भावे लुङ् ] तत्र स्थितौ, गुणः एव मुक्तानां छिद्रान्तर्वर्त्तिसूत्रमेव, सूत्रेण ग्रथितत्वमित्यर्थः, कान्तिमत्त्वादि-गुण एव च, कारणं हेतुः, अन्यथा तद्वैपरीत्ये, तदा सुरतकाले, गुणच्युतैः गुणभ्रष्टैः, तैः हारमौक्तिकैः, अमुत्र अस्मिन् वक्षसि मनसि च, वर्त्तितुं स्थातुं, कथं कस्मात्, न अशाकि? न शक्तम्? अच्छिन्नसूत्रैः कतिपयमौक्तिकैरेव तत्र स्थितं न पुनश्छिन्नसूत्राग्रैः, ततो गुण एव अत्र कारणम् अन्यथा पतन-प्रसङ्गादनुपादेयत्वाच्चेति भावः॥ १०३॥

एकेति।—तदा तत्काले, तयोः दमयन्तीनलयोः मध्ये, एकस्मिन् नले एव, वृत्तिः अवस्थानं यस्याः सा तादृशी अपि, नलवक्षःस्थिता अपीत्यर्थः, मौक्तिकावलिः मुक्ताहारः, छिन्ना त्रुटिता, हारविततिः विस्तृतहारो यस्य तादृश [भाषित-पुंस्कत्वात् पुंवद्भावः] भ्रान्तिवारिभरेण सुरतश्रमोद्भूतस्वेदपूरेण, भाविते आप्लुते, अन्यस्याः भैम्याः, हृदये वक्षसि, ["सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इति पुंवद्भावः] छायया प्रतिबिम्बेन,

वामपादतललुप्तमन्मथश्रीमदेन मुखरोचिषाऽनिशम् ।
भुज्यमाननवयौवनाऽमुना पारसीमनि चचार सा मुदाम् ॥१०५॥
आन्तरानपि तदङ्गसङ्गमैस्तर्पितानवयवानमन्यत ।
नैवयारमृतसारपारणां तद्विलोकनमचिन्तयन्नलः ॥ १०६ ॥
बह्वमन्यत विदर्भजन्मनो भूषणानि स दृशा न चेतसा ।
तैरभावि कियदङ्गदर्शने यत् विधानमयविघ्नकारिभिः ॥ १०७॥

---

विभूषणम् अलङ्करणम्, अभवत् अजायत। अत्र एकस्यैव हारस्य उभयत्र भूषणत्वेन असम्बन्धेऽपि सम्बन्धोक्तेः तद्रूपातिशयोक्तिरलङ्कारः ॥ १०४ ॥

वामेति।—वामपादस्य सव्यचरणस्य, तलेन अधःप्रदेशेन, अत्यन्तापकृष्टावयवेनेति भावः, लुप्तः हृतः, मन्मथस्य कामस्य, श्रियः मदः सौन्दर्यदर्पः येन तादृशेन, अतिसुन्दरेणेत्यर्थः, अनिशं निरन्तरं, मुखरोचिषा दमयन्तीवदनदर्शिना, अमुना नलेन, भुज्यमानम् उपभोगं कुर्वन्तं, नवयौवनम् अभिनवतारुण्यं यस्याः तादृशी, सा भैमी, मुदाम् आनन्दानां, पारसीमनि चरमावस्थायां, चचार विचरितवती, नलसम्भोगात् परमानन्दमाप इत्यर्थः ॥ १०५ ॥

आन्तरानिति।—नलः तस्याः दमयन्त्याः, अङ्गसङ्गमैः बाह्यावयवसम्पर्कैः, आन्तरान् आभ्यन्तरानपि, न केवल वचःप्रभृतिबहिरवयवानिति भावः, अवयवान् अन्तःकरणादीन् अंशान्, तर्पितान् प्रीणितान्, अमन्यत अबुध्यत, तथा तस्याः भैम्याः, विलोकनं साक्षात्कारं, नेत्रयोः स्वाक्ष्णोः, अमृतस्य पीयूषस्य, सारेण उत्कृष्टांशेन, पारणाम् उपवासानन्तरमाहारविशेषमिव, अचिन्तयत् अभावयत्, तद्वत् तृप्तिबोधादिति भावः ॥ १०६ ॥

बह्विति।—सः नलः, विदर्भजन्मनः वैदर्भ्याः, भूषणानि

योजनानि परिरम्भणेऽन्तरं रोमहर्षजमपि स्म बोधतः।
तौ निमेषमपि वीक्षणे मिथो वत्सरव्यवधिमभ्यगच्छताम् ॥१०८॥
वीक्ष्य भावमधिगन्तुमुत्सुकां पूर्वमच्छमणिकुट्टिमे मृदुम्।
कोऽयमित्युदितसम्भ्रमोक्तितां स्वानुबिम्बमदर्शतैष ताम् ॥१०९॥

आभरणानि, दृशा दृष्ट्या एव, बहु अमन्यत अत्यर्थं समादृतवान्, दमयन्त्यङ्गस्पर्शसौभाग्यलाभादिति भावः, चेतसा मनसा, न, बहु अमन्यत इति शेषः, कुतः? यत् यस्मात्, तैः भूषणैः, कियताम् अङ्गानां प्रकोष्ठादीनां केषाञ्चिदवयवानां, दर्शने विलोकने, पिधानमय छादनरूपं, विघ्नं प्रत्यूहं, कुर्वन्तीति तादृशैः, दृष्टिव्याघातोत्पादकैरित्यर्थः, अभावि भूतम्; अतः भूषणबहुमानः नातिपुष्कलः इति भावः॥ १०७॥

योजनानीति।—तौ भैमीनलौ, परिरम्भणे आलिङ्गनकाले, रोमहर्षात् सात्त्विकभावोदयेन रोमाञ्चात्, जातम् उत्पन्नम्, अन्तरमपि तन्मात्रव्यवधानमपि, योजनानि बहुयोजनव्यवधानानीत्यर्थः, बोधतः स्म अबुध्यताम्; [ बोधतेर्भौवादिकात् भूते "लट् स्मे" इति लट् ] तथा मिथः अन्योऽन्यं, वीक्षणे दर्शनविषये, निमेषमपि अक्षिवर्त्मनिमीलनोन्मीलनकालव्यवधानमपि, वत्सरव्यवधिं वर्षकालव्यवधानम्, अध्यगच्छतां मन्येते स्म, अनुरागाधिक्यादिति भावः॥ १०८॥

अथानयोः रतिसुखं पद्यैर्वर्णयति, वीक्ष्येत्यादि।—एषः नैषधः, तां प्रियां, मृदुं कोमलां, परिश्रमासहिष्णुत्वात् श्लथावयवामिति यावत्, अत एव पूर्वम् आत्मनः प्राक्, भावं रतिसुखावस्थाम्, अधिगन्तुं प्राप्तुम्, उत्सुकाम् इच्छन्तीं,वीक्ष्य गाढालिङ्गनादिलिङ्गैः ज्ञात्वा, कोऽयम्? अयं कः अत्र समागतः? इति, उक्ता इति शेषः, उदितः सञ्जातः, सम्भ्रमः भयचकित-

तत्क्षणावहितभावभावितद्वादशात्मसितदीधितिस्थितिः ।
आत्मनोऽनभिमतक्षणोदया भावलाभलघुतां नुनोद सः ॥ ११० ॥
स्वेन भावभजने स तु प्रियां बाहुमूलकुचनाभिचुम्बनैः ।
निर्ममे रतरहःसमापनाग्रमंसारसममंविभागिनीम् ॥ १११ ॥

भावो यस्याः सा उदितसम्भ्रमा, अतां तां जाताम् उदितसम्भ्रमीभूताम्, [ अभूततद्भावे च्विः ] प्रियामिति शेषः, अच्छे निर्मले, प्रतिबिम्बग्राहिणि इत्यर्थः, मणिकुट्टिमे रत्ननिबद्धभूमौ, स्वानुबिम्बं निजप्रतिबिम्बम्, अदर्शत दर्शितवान्, मत्प्रतिबिम्बदर्शनात् भ्रान्तं मया इति तस्याः त्रासम् अपाचकार इत्यर्थः। [ दृशेर्णौ चङि "णिचश्च" इति तङ्। "अभिवादिदृशोरात्मने पदे वेति वाच्यम्" इति अणिकर्तुः कर्मत्वम् ] उभयोर्युगपद्भावप्रारम्भे तस्याः प्राक् पातं व्यासङ्गेन प्रत्यवायात्, अन्यथा वैरस्यं स्यादिति भावः ॥ १०९ ॥

तदिति।—स नलः, तस्मिन् क्षणे आसन्नच्युतिसमये, अवहितभावेन अवहितत्वेन, एकाग्रतया इति यावत्, भाविता ध्याता, द्वादशात्मसितदीधित्योः सूर्य्याचन्द्रमसोः, स्थितिः नभोदेशे अवस्थानक्रमः येन सः तादृशः सन्, तेन च विषयान्तरनिविष्टतया च्युतिनिरोध इति भावः, आत्मनः स्वस्य, अनभिमतक्षणे अनभिप्रेतकाले, उदयः प्रादुर्भावः यस्याः तादृशीं, भावलाभस्य च्युतिसुखप्राप्तेः, लघुताम् आशुभावितां, नुनोद निवारयामास। "तत्काले हृदि सोमार्कधारणात् सिद्धिः" इति रतिरहस्ये। अत्र पुंस एव शक्त्या धक्कात्क्या योषितो बहुशक्तिप्रयुक्तरसाभासशङ्काऽपि समूलमाषकषितेति द्रष्टव्यम ॥११०॥

स्वेनेति।—तु पुनः, सः नलः, भावभजने च्युतिसुखप्राप्तिविषये, बाहुमूलयोः कक्षदेशयोः, कुचयोः स्तनयोः, नाभौ

विश्लथैरवयवैर्निमीलया लोमभिर्द्रुतमितैर्विनिद्रताम्।
सूचितं श्वसितसीत्कृतैश्च तौ भावमक्रमजमभ्यगच्छताम्॥११२॥
आस्त भावमधिगच्छतोस्तयोः सम्मदेषु करजप्रसर्पणा।
फाणितेषु मरिचावचूर्णना सा स्फुटं कटुरपि स्पृहावहा॥११३॥

---

नाभिदेशे च, चुम्बनैः पुनरुद्दीपनार्थं चुम्बनरूपैः उपायैः, स्वेन आत्मना सह प्रियां दमयन्तीं, रतरहसः सुरतरहस्यस्य, समापनायां समाप्तिकाले, यः शर्मसारः च्युतिसुखोत्कर्षः, तत्र समसंविभागिनीं समानसुखभागिनीं, निर्ममे चक्रे, युगदेवोभयोर्बीजनिःसरणात् समानसुखभागित्वमिति भावः, एतेन तयोर्विप्रलम्भवत् सम्भोगस्यापि समानशक्तित्वमुक्तं भवतीत्यनुसन्धेयम्॥१११॥

विश्लथैरिति।—तौ भैमीनलौ, विश्लथैः शिथिलप्रायैः, अवयवैः हस्तपादाद्यङ्गैः, निमीलया उत्कटसुखानुभवजनितनेत्रनिमीलनेन, [भिदादित्वादङ्] द्रुतं हठात्, विनिद्रताम् उद्भेदम्, इतैः प्राप्तैः, कण्टकितैरित्यर्थः, लोमभिः रोमभिः, रोमाञ्चोद्गमैरित्यर्थः, तथा श्वसितानि श्रमजनितद्रुतनिःश्वासाः, सीत्कृतानि सीत्काराश्च तैः, सूचितं ज्ञापितं, "स्रस्तता वपुषि मीलनं दृशोर्मूर्च्छना च रतिलाभलक्षणम्। श्लेषयत् स्वजघनं घनं मुहुः सीत्कृतानि गजगर्जितानि च॥" इत्युक्तत्वादिति भावः; अक्रमात् पौर्वापर्यं विहाय, जायते इति अक्रमजं युगपज्जातं, भावं पातसुखम्, अभ्यगच्छतां प्राप्तवन्तौ, ज्ञातवन्तौ वा, एवञ्च उभयोः समरागिता सम्भवति अन्यथा पूर्वच्युतस्य उत्तरच्याविनि वैराग्येण तदङ्गप्रसङ्गः इति भावः॥११२॥

आस्तेति।—भावं च्युतिसुखम्, अधिगच्छतोः प्राप्नुवतोः, तयोः दम्पत्योः, करजप्रसर्पणा पुनरपि मिथो नखक्षतकरणं, सम्मदेषु आनन्दलाभेषु, आस्त स्थिता, अन्तर्भूता इत्यर्थः, ननु

अर्द्धमीलितविलोलतारके सा दृशौ निधुवनक्लमालसा।
यन्मुहूर्त्तमवहन्न तत् पुनस्तृप्तिरास्त दयितस्य पश्यतः ॥ ११४ ॥
तत्क्लमस्तमदिदीपत क्षणं तालवृन्तचलनाय नायकम्।
तद्विधाधिभवधूननक्रिया वेधसोऽपि विदधाति चापलम् ॥११५॥

---

नखक्षतं वेदनाजनकमपि कथमानन्देषु अन्तर्भूतमित्याशङ्क्याह —सा नखक्षतक्रिया, कटुः तीक्ष्णा अपि कटुरसा अपि च, ("रसे कटुः कट्वकार्य्ये त्रिषु मत्सरतीक्ष्णयोः" इत्यमरः) फाणितेषु खण्डविकारेषु, ("मत्स्यण्डी फाणितं खण्डविकारे" इत्यमरः) मरिचस्य अवचूर्णना चूर्णैः अवध्वंसना, तच्चूर्णमिश्रणमित्यर्थः, ["सत्याप—" इत्यादिना णयन्तात् "ण्यासश्रन्थो युच्" इति युच्] स्फुटं व्यक्तम्, अत एव स्पृहावहा रुचिकरी, या इयं मन्मथेषु नखार्पणा सा फाणितेषु मरिचार्पणावत् दृष्टा एव अभूदित्यर्थः। अत्र वाक्यार्थयोः सादृश्ययोगेन सादृश्याक्षेपात् असम्भवद्वस्तु-सम्बन्धलक्षणो वाक्यार्थवृत्तिनिदर्शनाभेदोऽलङ्कारः ॥ ११३ ॥

अर्द्धेति।—निधुवनक्लमालसा सुरतश्रमेणावसन्ना, सा भैमी, मुहूर्त्तं किञ्चित्कालमपि, यत् अर्द्धमीलिते ईषत्सङ्कुचिते च, ते विलोलतारके चञ्चलकनीनिके चेति ते तादृश्यौ, ("तारकाऽक्ष्णः कनीनिका" इत्यमरः) दृशौ नेत्रे, अवहत् अधारयत्, अकारयदित्यर्थः, तत् तादृशीमवस्थामित्यर्थः, पश्यतः विलोकयतः, दयितस्य प्रियस्य नलस्य पुनः, तृप्तिः आकाङ्क्षापूर्त्तिः, न आस्त नासीत्, अतिरमणीयत्वात् पुनः पुनरेव तामवस्थां ददर्श स मुग्धो नलः इति भावः ॥ ११४ ॥

तदिति।—तस्याः दमयन्त्याः, क्लमः श्रान्तिः, तं नायकं स्वामिनं नलं, क्षणं क्षणकालं, तालवृन्तचलनाय व्यजनवीजनाय, ("व्यजनं तालवृन्तकम्" इत्यमरः) अदिदीपत दीपयति

स्वेदबिन्दुकितनासिकाशिखं तन्मुखं सुखयति स्म नैषधम् ।
प्रोषिताधरशयालुयावकं संविलुप्ततिलकं कपोलयोः ॥ ११६ ॥
ह्रीणमेव पृथु सस्मयं कियत् क्लान्तमेव बहु निर्वृतं मनाक् ।
कान्तचेतसि तदीयमाननं तत्तदालभत लक्षमादरात् ॥ ११७ ॥

स्म, प्रावर्त्तयदित्यर्थः, तथा हि तद्विधः तादृशः, यः आधिः श्रम-कातर्य्यं, तद्भवे तदुद्भूते सन्तापे, धूननक्रिया व्यजनसञ्चालनं, व्यजनक्रियया सुरतश्रान्तिशान्तिचेष्टेत्यर्थः,वेधसः जितसर्वेन्द्रियस्य लोकपितामहस्य ब्रह्मणोऽपि, चापलं तरलतां, तत्करणार्थं चित्तचाञ्चल्यमित्यर्थ, विदधाति जनयति, किमुतान्यस्येति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ११५ ॥

स्वेदेति ।—स्वेदबिन्दुकिता सञ्जातघर्मबिन्दुका, नासिका-शिखा नासाग्रं यस्य तत् तादृशं, प्रोषिताधरशयालुयावकम् अधरपानात् प्रमृष्टौष्ठगतालक्तकं, कपोलयोः गण्डयोः, संविलुप्ततिलकं चुम्बनादेव विनष्टविशेषकं, ("तमालपत्र-तिलकचित्रकाणि विशेषकम्" इत्यमरः) तस्याः दमयन्त्याः, मुखं वदनं, नैषधं नलं, सुखयति स्म आनन्दयामास ॥ ११६ ॥

ह्रीणमिति ।—पृथु एव भूयिष्ठमेव, ह्रीणं लज्जितं, सुरत-कालिकनिजाचरणस्मरणादिति भावः, कियत् किञ्चित्, सस्मयं सगर्वं, सुरते कान्तं सन्तोषयितुं निजसामर्थ्यस्मरणादिति भावः, तथा बहु एव बाहुल्येनैव, क्लान्तं परिश्रान्तं, बहुक्षणं व्याप्य सुरतपरिश्रमादिति भावः, ईषत् मनाक्, निर्वृतं सुखितं, काम-वेगस्य किञ्चित् प्रशमादिति भावः, तदीयं दमयन्तीसम्बन्धि, तत् लज्जागर्वादिभावसमावेशादतिमनोज्ञम, आननं मुखं, तदा तत्काले, सुरतावसाने इत्यर्थः, कान्तचेतसि नलहृदये, आदरात् पुनरपि रमणाग्रहात्, लक्षं व्याजम्, उद्दीपकतया पुनः सुरताय

स्वेदवारिपरिपूरितं प्रियारोमकूपनिवहं यथा यथा।
नैषधस्य दृगपात् तथा तथा चित्रमापदपतृष्णतां न सा ॥११८॥
वान्तमाल्यकचहस्तसंयमन्यस्तहस्तयुगया स्फुटीकृतम्।
बाहुमूलमनया तदुज्ज्वलं वीक्ष्य सौख्यजलधौ ममज्ज सः ॥११९॥
वीक्ष्य पत्युरधरं कृशोदरी बन्धुजीवमिव भृङ्गसङ्गतम्।
मञ्जुलं नयनकज्जलैर्निजैः संवरीतुमशकत् स्मितं न सा ॥१२०॥

---

हेतुस्वरूपमित्यर्थः, अलभत प्राप्नोत, बहुमतमभूदित्यर्थः; सर्वावस्थामनोहरं तन्मुखमिति भावः॥ ११७॥

स्वेदेति।—नैषधस्य नलस्य, दृक् दृष्टिः, स्वेदवारिणा घर्मोदकेन, परिपूरितं सम्भृतं, प्रियायाः भैम्याः, रोमकूपाणां लोमच्छिद्राणां, निवहं समूहं, यथा यथा येन येन, यावता परिमाणेनेत्यर्थः, अपात् पिबति स्म, [पिबतेर्लुङि "गातिस्था—" इत्यादिना सिचो लुक्] सा दृष्टिः, तथा तथा तेन तेन, तावता परिमाणेनेत्यर्थः, अपतृष्णतां पिपासानिवृत्तिं, न आपत् नालभत, वितृष्णा नाभूदित्यर्थः, इति चित्रम् आश्चर्यं, बहुकूपसम्भृतोदकपानेऽपि तृष्णा न अपगता इति विरुद्धमित्यर्थः, लोकोत्तरवस्तुदर्शने तृष्णा वर्द्धते एवेति विरोधाभासोऽलङ्कारः॥ ११८॥

वान्तेति।—सः नलः, वान्तम् उद्गीर्णं, परित्यक्तमित्यर्थः, प्रबलरमणवेगजसञ्चालनेनेति भावः, "वान्त" इत्यत्र "वीत"इति पाठान्तरं साधु; माल्यं कुसुमस्रक् येन तादृशस्य, कचहस्तस्य केशपाशस्य, संयमे बन्धने, न्यस्तं निवेशितं, हस्तयुगं करद्वयं यया तादृश्या, अनया भैम्या, स्फुटीकृतं हस्तोत्तोलनेन व्यक्तीकृतम्, उज्ज्वलं सुन्दरं, तत् अतिमनोहरं, बाहुमूलं कक्षदेशं, वीक्ष्य दृष्ट्वा, सौख्यजलधौ आनन्दसागरे, ममज्ज निमग्नीभूतः, बाहुमूलदर्शनस्य उद्दीपकत्वादिति भावः॥११९॥

तां विलोक्य विमुखश्रितस्मितां पृच्छतो हसितहेतुमीशितुः।
ह्रीमती व्यतरदुत्तरं वधूः पाणिपङ्करुहि दर्पणार्पणाम् ॥१२१॥
लाक्षयाऽऽत्मचरणस्य चुम्बनाच्चारुभालमवलोक्य तन्मुखम्।
सा ह्रिया नतनताननाऽस्मरच्छेषरागमुदितं पतिं निशः ॥१२२॥

---

वीक्ष्येति।—कृशोदरी क्षीणमध्या, सा दमयन्ती, मञ्जुलं मनोहरं, पत्युः नलस्य, अधरं दशनच्छदं, निजैः स्वकैः, नयन-कज्जलैः नेत्राञ्जनैः, नेत्रचुम्बनसङ्क्रान्तैरिति भावः, भृङ्गसङ्गतम् अलिचुम्बितं, बन्धुजीवं बन्धूकपुष्पम् इव स्थितं, वीक्ष्य दृष्ट्वा, स्मितं मन्दहासं, संवरीतुं निरोद्धुं, न अशकत् न शक्ताऽभूत्, हासः प्रसक्तः एवेति भावः ॥ १२० ॥

तामिति।—तां दमयन्तीं, विमुखं पराङ्मुखं यथा तथा, श्रितस्मितां कृतमन्दहासां, विलोक्य दृष्ट्वा, हसितहेतुं स्मित-कारणं, पृच्छतः जिज्ञासयतः, ईशितुः पत्युः नलस्य, पाणि-पङ्करुहि करपद्मे, ह्रीमती लज्जावती, वधूः नवोढा भैमी, दर्पणार्पणां मुकुरप्रदानरूपमेव, उत्तरं व्यतरत् अदात्, अधरं कज्जलरेखादर्शनार्थमिति भावः ॥ १२१ ॥

लाक्षयेति।—सा भैमी, आत्मचरणस्य निजपादतलस्य, चुम्बनात् रतिप्रार्थनाकाले ललाटे एव स्पर्शकरणात् हेतोः, लाक्षया अलक्तकेन, निजचरणालक्तकस्पर्शेनेत्यर्थः, चारुभालं रम्यललाटं, तस्य नलस्य, मुखम् आननम्, अवलोक्य दृष्ट्वा, ह्रिया भर्तृकर्तृकचरणपतनस्मरणजलज्जया, नतनतानना अतिनम्र-मुखी सती, उदितं प्राप्तोदयं, शेषरागं तदानीमपि किञ्चिदव-शिष्टलौहित्यं, निशः निशायाः, [ "पद्दन्नोमास्—" इत्यादिना निशायाः निश्-भावः ] पतिं नाथं चन्द्रम्, अस्मरत् स्मृतवती ; ललाटस्य अर्द्धचन्द्राकृतित्वात् तत्र निजपादालक्तक-

स्वेदभाजि हृदयेऽनुबिम्बितं वीक्ष्य मूर्त्तमिव हृद्गतं प्रियम्।
निर्ममे धुतरतश्रमं निजैर्ह्रीनताऽतिमृदुनासिकानिलैः॥१२३॥
सूनसायकनिदेशविभ्रमैरप्रतीततरवेदनोदयम्।
दन्तदंशमधरेऽधिगामुका साऽस्पृशन्मृदु चमच्चकार च॥१२४॥
वीक्ष्य वीक्ष्य करजस्य विभ्रमं प्रेयसाऽर्जितमुरोजयोरियम्।

---

रागसंस्पर्शाच्च मुखस्य तादृशचन्द्रतुल्यत्वमिति भावः। स्मरणालङ्कारः॥१२२॥

स्वेदेति।—स्वेदभाजि स्विन्ने, हृदये वक्षसि, अनुबिम्बितं प्रतिबिम्बितम्, अत एव हृद्गतं नियतचिन्तया हृदयावस्थितं, चिन्तनीयत्वादमूर्त्तमपीति भावः, प्रियं कान्तं नलं, मूर्त्तं मूर्त्तिमन्तमिव, वीक्ष्य दृष्ट्वा, ह्रीनता लज्जाऽवनता, दमयन्तीति शेषः, निजैः स्वीयैः, अतिमृदुभिः अतिकोमलैः, मन्दवेगैरित्यर्थः, नासिकानिलैः निःश्वासमारुतैः, धुतः निरस्तः, रतश्रमः सुरतजनितक्लमः यस्य तादृशं, निर्ममे चकार, इवेति शेषः, तस्य श्रममपनुदतीव स्थिता इत्युत्प्रेक्षा॥१२३॥

सूनेति।—सा भैमी, सूनसायकस्य पुष्पबाणस्य, कामस्येत्यर्थः, निदेशविभ्रमैः आज्ञाविलासैः, अप्रतीततरः अतिशयेनाज्ञातः, "अप्रतीतचरः" इति पाठः साधुः, अप्रतीतचरः पूर्वं किमपि अज्ञात इत्यर्थः, वेदनोदयः व्यथोत्पत्तिः यस्मिन् तं तादृशं, मदनपारवश्यात् प्राक् अज्ञायमानदुःखमित्यर्थः, अधरे निजोष्ठे, दन्तदंशं नलस्य दन्तेन दंशनम्, अधिगामुका जानती, वेदनया अनुभवन्ती सती, [ "लषपत—"इत्यादिना उकञ्, "नलोक—"इत्यादिना षष्ठीप्रतिषेधः ] मृदु मन्दं यथा तथा, अस्पृशत् करतलेन दन्तदंशं परामृशदित्यर्थः, चमच्चकार च किमेतत्? कदा जातमिति साश्चर्या बभूव च॥१२४॥

कान्तमैक्षत हसस्पृशं कियत्-कोपसङ्कुचितलोचनाञ्चला ॥१२५॥
रोषभूषितमुखीमिव प्रियां वीक्ष्य भीतिदरकम्पिताक्षरम्।
तां जगाद स न वेद्मि तन्वि! तं ब्रूहि शास्मि तव कोपरोपकम्
॥ १२६ ॥
रोषकुङ्कुमविलेपनाम्मनाक् नन्वशाचि कृशतन्ववाचि ते।
भूदयुक्तसमयेव रञ्जना माऽऽनने विधुविधेयमानने ॥ १२७ ॥

वीक्ष्येति।—इयं भैमी, प्रेयसा प्रियतमेन नलेन, अर्जितम् उत्पादितं, कृतमित्यर्थः, उरोजयोः निजकुचयोः, करजस्य विभ्रमं नखक्षतरूपं विलासं,वीक्ष्य वीक्ष्य दृष्ट्वा दृष्ट्वा,कियत् किञ्चित्,कोपेन रोषेण, सङ्कुचितौ कुटिलीकृतौ,लोचनाञ्चलौ नेत्रप्रान्तौ, कटाक्षावित्यर्थः, यया सा तादृशी सती, हसं हास्यं, स्पृशति परामृशतीति हसस्पृशं हसन्तं, कान्तं नलम्, ऐक्षत दृष्टवती ॥ १२५ ॥

रोषेति।—सः नलः, तां पूर्वोक्तरूपकोपसङ्कुचितलोचनाञ्चलां, प्रियां दमयन्तीं, रोषेण कोपेन, भूषितमुखीम् आरक्तवर्णतया अलङ्कृताननामिव, स्थितामिति शेषः, वीक्ष्य विलोक्य, भीत्या भयेन, दरकम्पिताक्षरम् ईषच्चलाक्षरं यथा तथा, जगाद उवाच ; किमिति ? तन्वि ! हे कृशाङ्गि !, तव ते, कोपरोपकं क्रोधजनकं, जनमिति शेषः न वेद्मि न जानामि,तम् अपराधिनं जनं, ब्रूहि कथय, शास्मि दण्डयामि, अहमिति शेषः ॥ १२६ ॥

रोषेति।—ननु अयि ! कृशतनु ! क्षीणाङ्गि ! [ सम्बुद्धौ नदीह्रस्वः ] अवाचि अवनते, [ अवपूर्वादञ्चतेः क्विन् ] अवाचि वाचंयमे, वाग्विरहिते इत्यर्थः, तथा विधुना चन्द्रेणापि, विधेया कर्त्तव्या, मानना पूजा यस्य तादृशे, विधोरपि उत्कृष्टे इत्यर्थः, ते तव, आनने मुखे, अयुक्तः अनुचितः, समयः कालो यस्याः तादृशी, रमणाकाङ्क्षाया अपरिहृतत्वेन इदानीं प्रसन्नताया

अनतिशिथिले पुम्भावेन प्रगल्भबला: खलु
प्रसभमलयः पाथोजास्ये निविश्य निरित्वराः।
किमपि मुखतः कृत्वाऽऽनीतं वितीर्य्य सरोजिनी-
मधुरसमुषायोगे जायां नवान्नमचीकरन् ॥ २७ ॥

( "पट्वचतुरतीक्ष्णयोः" इति शाश्वतः ) ऊहापोहयोः ऊहः तर्कः, विचारपूर्वकसद्ग्रहणमित्यर्थः, अपोहः परित्यागः, अपकृष्टवस्तुन इति भावः, तयोः चमाणि शक्तानि, तानि मह्यामि इति शेषः, युवयोः तस्य इन्द्रस्य तव च, [ "त्यदादीनि सर्वैर्नित्यम्" इति त्यदाद्येकशेषः ] लक्ष्मीविवेचनचातुरी शोभासम्पदां तारतम्य-विचारकौशलं, तावत् साकल्येन, वितन्वता विस्तारयन्तु, प्रदर्शयन्तु इति यावत्, उभयदर्शिनाम् उभयतारतम्यं विवेक्तुं युक्तमिवेति भावः, अहह इत्यद्भुते ॥ २६ ॥

अनतीति।—पुम्भावेन पुंस्त्वेन हेतुना, प्रगल्भबलाः स्त्रीभ्योऽधिकशक्तिसम्पन्नाः, अलयः भृङ्गाः, अनतिशिथिले ईषद्विकसिते, पाथोजस्य पद्मस्य, आस्ये मुखे, उपरिभागे इत्यर्थः, प्रसभं बलात्, निविश्य अधिष्ठाय, निरित्वराः निर्गच्छन्तः सन्तः, [ "इण्नशजिसर्त्तिभ्यः क्वरप्" इति क्वरप् ] मुखतः मुखे, कृत्वा धृत्वेत्यर्थः, आनीतम् आहृतं, सरोजिनीमधुरस नलिन्याः मकरन्दद्रवं, वितीर्य्य दत्त्वा, उषायोगे प्रातः, जाया स्वकान्ताम् अलिनीं, किमपि पूर्वमनास्वादात् अनिर्वचनीयसुस्वादु, नवान्नं नूतनं भोज्यम्, अचीकरन् कारयामासुः, भोजयामासुः इत्यर्थः। [ करोतेर्णौ चङ्युपधाया ह्रस्वः, "हृक्रोरन्यतरस्याम्" इति अणिकर्त्तुः कर्मत्वम् ] बली पुमान् स्त्र्यन्तराधिकृतमपि मिष्टमन्नं बलात् आच्छिद्य स्वस्त्रियै प्रयच्छतीति भावः ॥ २७ ॥

मिहिरकिरणाभोगं भोक्तुं प्रवृत्ततया पुरः
कलितचुलुकाऽऽपोशानस्य ग्रहार्थमियं किमु ?।
इति विकसितेनैकेन प्राक् दलेन सरोजिनी
जनयति मतिं साक्षात्कर्त्तुर्जनस्य दिनोदये॥ २८॥
तटतरुखगश्रेणीसांराविणैरिव साम्प्रतं
सरसि विगलन्निद्रामुद्राऽजनिष्ट सरोजिनी।

मिहिरेति।—इयं किञ्चित् विकसिता, सरोजिनी पद्मिनी, दिनोदये अस्मिन् प्रातःकाले, प्राक् दलान्तरविकाशात् पूर्वं, विकसितेन प्रस्फुटितेन, संहतीभावात् पृथग्भूतेनेत्यर्थः, एकेन एकमात्रेण, दलेन पत्रेण हेतुना, मिहिरकिरणः सूर्य्यरश्मिरेव, आ सम्यक् भुज्यते इति आभोगः भोज्य तं, भोक्तुं खादितुं, प्रवृत्ततया कृतारम्भतया हेतुना, पुरः पूर्वं, भोजनात् प्रागित्यर्थः, आपोशानस्य आपोशानं नाम भोजनादौ कर्त्तव्यम् "अमृतोपस्तरणमसि स्वाहा" इति समन्त्रकजलपानेन अन्नस्य अमृतास्तरणरूपं कार्य्यं, समन्त्रकाचमनमित्यर्थः तस्य, [ पृषोदरादित्वात् साधु ] ग्रहार्थम् आचरणार्थं, कलितः कृतः, चुलुकः गण्डूषकरणार्थं विश्लिष्टकनिष्ठाङ्गुलिकः प्रसृत्यपराख्यः निकुञ्जपाणितलविशेषः यस्याः सा तादृशी, किमु ? जाता किम् ? इति उत्प्रेक्षा, इति एवं, साक्षात्कर्त्तुः स्वस्या एव द्रष्टुः, जनस्य लोकस्य, मतिं बुद्धिं, जनयति उत्पादयति, आपोशानकार्य्यकारी हस्तस्य कनिष्ठाङ्गुलिं प्रसार्य्य अन्याङ्गुलीनां सङ्कोचं विधाय च जलं पिबति इति सम्प्रदायः। प्राक् विकसितैकदलस्य विश्लिष्टकनिष्ठाङ्गुलीतुल्यतया पद्मस्य च निकुञ्जपाणितलतुल्यतया कलितचुलुकत्वं बोद्धव्यम्॥ २८॥

तटेति।—साम्प्रतं सम्प्रति, सरसि सरोवरे, स्थितेति शेषः,

अधरसुधया मध्ये मध्ये वधूमुखलब्धया
धयति मधुपः स्वादुङ्कारं मधूनि सरोरुहाम् ॥ २९ ॥
गतचरदिनस्यायुर्भङ्गे दयोदयसङ्कुच-
त्कमलमुकुलक्रोड़े नीड़े प्रवेशमुपेयुषाम् ।
इह मधुलिहां भिन्नेष्वम्भोरुहेषु समायतां
सह सहचरैरालोक्यन्तेऽधुना मधुपारणाः ॥ ३० ॥

सरोजिनी पद्मिनी, तटतरुषु तीरस्थितवृक्षसमूहेषु, याः खगश्रेण्यः पक्षिसमूहाः, तासां साराविणैः सम्यक् रावैरिव, उच्चकलकलै-रिवेत्यर्थः, इत्युत्प्रेक्षा, [ "अभिविधौ भावे इनुण्" इति स्वार्थे इनुण्-प्रत्ययः ] विगलन्निद्रामुद्रा विगलन्ती अपगच्छन्ती, निद्रा स्वप्न इव, मुद्रा निमीलनं, सङ्कोच इत्यर्थः, यस्याः सा तादृशी, अजनिष्ट जाता, [ जनेः कर्त्तरि लुङ् ] तथा मधुपः भ्रमरः, सरोरुहां कमलानां, मधूनि मकरन्दान्, मध्ये मध्ये अन्तरा-ऽन्तरा, वधूमुखे स्वकान्तानने, लब्धया चुम्बनकाले प्राप्तया, अधरसुधया अधरामृतेन, स्वादुङ्कारं स्वादूकृत्य, सुरसानि कृत्वेत्यर्थः, [ "स्वादुमि णमुल्" इति णमुल्-प्रत्ययः । मान्त-निर्द्देशादेव पूर्वपदस्य मकारान्तनिपातः ] धयति पिबति । [ धेटो लट् ] ॥ २९ ॥

गतेति ।—गतचरस्य गतपूर्वस्य, [ "भूतपूर्वे चरट्" ] प्रागती-तस्य इत्यर्थः, दिनस्य दिवसस्य, आयुर्भङ्गे जीवितावसाने सति, सायं-समये इति भावः, दयोदयात् कृपाविर्भावात् इव, तद्दु-रवस्थादर्शनेनेति भावः, सङ्कुचतां म्लानानां, रात्रिनिमीलन-स्वभावात् मुद्रितीभवतामित्यर्थः, कमलमुकुलानां पद्मकोरकाणां, क्रोड़े मध्यन्तरे एव, नीड़े कुलाये, ( "कुलायो नीडमस्त्रियाम्" इत्यमरः ) प्रवेशम् अन्तर्गमनम्, उपेयुषां प्राप्नुवताम्, अन्तः

तिमिरविरहात् पाण्डूयन्ते दिशः कृशतारकाः
कमलहसितैः श्येनीवोन्नीयते सरसी न का ? ।
शरणमिलितध्वान्तध्वंसिप्रभाऽऽदरधारणात्
गगनशिखरं नीलत्येकं निजैरयशोभरैः ॥ ३१ ॥

प्रविशतामित्यर्थः, रात्रौ तत्रैव आबद्धानाम् अत एव कृतोपवासानामिति भावः, इह अधुना, प्रभाते इत्यर्थः, भिन्नेषु विकसितेषु, अम्भोरुहेषु पद्मेषु, समायता निपतताम्, इतस्ततो भ्रमतामित्यर्थः [ इणो लटः शत्रादेशः ] मधुलिहा मधुपानाम्, अधुना इदानीं, सहचरैः सुहृद्भिर्भ्रमरान्तरैः सह, सम्प्रत्यागतैरिति भावः, मधुना मकरन्देन, पारणाः उपवासानन्तरं भोजनानि, आलोक्यन्ते दृश्यन्ते, जनैरिति शेषः ॥ ३० ॥

तिमिरेति ।—दिशः प्राच्यादयः, तिमिरेण अन्धकारेण सह, विरहात् विच्छेदात्, कृशाः क्षीणाः, सूर्य्यप्रभया औज्ज्वल्यह्रासादिति भावः, तारकाः नक्षत्राणि यासां ताः तादृश्यः सत्यः, पाण्डूयन्ते पाण्डुवर्णाः इव आचरन्ति, विरहिधर्मत्वादिति भावः, का सरसी तडागः, कमलानि विकसितपद्मानि एव, हसितानि हास्यानि तैः, कमलानां हसितैः विकसनरूपैः हास्यैरिति वा, श्येनी इव श्वेतवर्णा इव, न उन्नीयते ? न दृश्यते ? अपि तु सर्वा एव उन्नीयन्ते इत्यर्थः, प्रियसमागमेन सर्वा एव हास्यविकसितानना भवन्ति इति भावः ; [ "वर्णादनुदात्तात्तोपधात्तो नः" इति ङीप्-प्रत्ययः, त-कारस्य च न-कारः ] किन्तु एकं केवलं, गगनशिखरम् आकाशोपरिभागः, तुङ्गनभोमण्डलमित्यर्थः, शरणमिलितानि रक्षितृत्वेन प्राप्तानि, शरणागतानीत्यर्थः, ध्वान्तानि अन्धकारान्, ध्वंसयन्ति विनाशयन्तीति तादृशीनां, [ "स्त्रियाः पुंवत्" इत्यादिना पुंवद्भावः ]

सरसिजवनान्युद्यत्पक्षार्य्यमाणि हसन्तु न ?
क्षतरुचिसुहृच्चन्द्रं तन्द्रामुपैतु न कैरवम् ? ।
हिमगिरिदृषद्दायादश्रीप्रतीतमुदः स्मितं
कुमुदविपिनस्याथो पाथोरुहैर्निर्जानद्दया ॥ ३२ ॥

प्रभाणां सूर्य्यकिरणानाम्, आदरेण आग्रहातिशयेन, धारणात् भरणात् हेतोः, खस्मिन् स्थानदानाद्धेतोरित्यर्थः, निजैः खकीयैः, अयशोभरैः अकीर्त्तिबाहुल्यैरिव, नीलति नीलवर्णं भवति, [ "नील वर्णे" इति धातोः भौवादिकाल्लट् ] शरणागतहन्तुरा-श्रयदानात् हेतोर्निजैर्निन्दाभरैः कृष्णाभवति इत्यर्थः, शरणा-गतापालनकीर्त्तिलोपादिव खमिकं नीलमदृश्यत इति निष्कर्षः, तारकाप्रभाच्चयात् गगनं स्वेन नीलरूपेण प्रकटं जातमिति भावः ॥ ३१ ॥

सरसिजेति ।—उद्यन् उदयं गच्छन्, पक्षः सहायभूतः, अर्य्यमा सूर्य्यः येषां तादृशानि, सरसिजवनानि कमल-काननानि, न हसन्तु ? न विकसन्तु ? न हास्यं कुर्वन्तु ? इति च इति काकुः, हसन्त्वेव इत्यर्थः, सुहृदाम् उदये सर्वे एव हसन्तीति लोके दर्शनादिति भावः ; क्षतरुच् क्षीणद्युतिः, सुहृत् मित्रं, चन्द्रः निशापतिः यस्य तत् तादृशं, कैरवं कुमुदं, [ कर्त्तृ ] तन्द्रां तन्द्रावत् निमीलनमित्यर्थः, प्रमीलां च, न उपैतु ? न प्राप्नोतु ? अत्रापि काकुः, उपैत्वेव इत्यर्थः, सुहृत्पीड़ाया सर्वे एवावसीदन्तीति लोके दर्शनादिति भावः ; अथो किञ्च, पाथोरुहैः पद्मैः, [ कर्त्तृभिः ] हिमगिरिदृषद्-दायादया हिमगिरेः हिमालयस्य, दृषदा शिलाना, दायादया अंशहरया, सदृशया इत्यर्थः, श्रिया वैशद्यसम्पदा, प्रतीतमुदः प्रतीता प्रकाशं गता, मुत् हर्षः यस्य तादृशस्य प्रकटहर्षस्य,

धयतु नलिने माध्वीकं वा न वाऽभिनवागतः
कुमुदमकरन्दौघैः कुक्षिम्भरिर्भ्रमरोत्करः।
इह तु लिहते रात्रीतर्षं रथाङ्गविहङ्गमाः
मधु निजवधूवक्त्राम्भोजेऽधुनाऽधरनामकम्॥ १३॥

रात्रौ तथा हृष्टस्य इत्यर्थः, कुमुदविपिनस्य कैरववनस्य सम्बन्धिया, निजनिद्रया स्वनिद्रया निमित्तेन, निशाकालिक-स्वकोषनिमीलनात्मकनिद्रायाः सम्प्रति कुमुदवनगामित्वेन हेतुनेत्यर्थः, स्मितं हसितं, विकसितञ्च, [भावे निष्ठा]। रात्रौ कुमुदवनस्य हृष्टत्वं कमलवनस्य च निद्रा आसीत्, इदानीं पद्मानि रात्रिजा स्वनिद्रां कुमुदवने सञ्चार्य्य तस्य हृष्टत्वं गृहीत्वा हसन्तीवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या। "हिमगिरिदृषद्दायादश्रि प्रतीष्टमदः स्मितम्" इति पाठान्तरे —पाथोरुहैः निजनिद्रया स्वार्थनिमीलनरूपनिद्रादानेन, हिमगिरिदृषदः दायादा सदृशी, श्रीः शोभा यस्य तादृशं, कुमुदवनस्य अदः इदं, स्मितं नैशविकसनं हास्यञ्च, प्रतीष्टं वाञ्छितं, प्रतिगृहीतमित्यर्थः॥ १२॥

धयत्विति।—कुमुदानां कैरवाणां, मकरन्दौघैः मधु-समूहैः, कुक्षिम्भरिः उदरपूरकः, ["फलेग्रहिरात्मम्भरिश्च" इति चकारात् कुक्षिम्भरिः सिद्धः] नलिने पद्मे, अभिनवागतः सद्यः समागतः, भ्रमरोत्करः भृङ्गसङ्घः, माध्वीकं मकरन्दं, कमलमधु इत्यर्थः, धयतु पिबतु वा, न वा, धयतु इति शेषः, रात्रौ कुमुदमधुभिः उदरपूरं पीतत्वात् तस्य अतिथेः पानाद्य-भावे न काऽपि क्षतिः इति भावः; तु किन्तु, रथाङ्गविहङ्गमाः चक्रवाकाः, रात्रीतर्षं रात्रिं व्याप्य तर्षित्वा, प्रियाविरहात् तर्षणैः रात्रिं नीत्वा इत्यर्थः, ["अस्यतितृषोः क्रियान्तरे

जगति मिथुने चक्रावेव स्मरागमपारगौ
नवमिव मिथ: सम्भुञ्जाते वियुज्य वियुज्य यौ ।
सततममृतादेवाहारात् यदापदरोचकं
तदमृतभुजां भर्त्ता शम्भुर्विषं बुभुजे विभु: ॥ २४ ॥

कालेषु" इति णमुल्-प्रत्यय: ] इह अस्मिन्, निजवधूवक्त्राम्भोजे स्वकान्तामुखकमले, अधुना सम्प्रति प्रभाते, अधरनामकम् ओष्ठ-संज्ञकं, मधु मकरन्दं, लिहते आस्वादयन्ति ; प्रभाते चक्रवाकदम्पतीनां परस्परमेलननियमादिति भाव:; ततश्च भुक्तस्य भोजनापेक्षया अभुक्तस्य भोजनादेव सहृदयानां तृप्तिरित्याशय: ॥ २३ ॥

जगतीति।—जगति त्रिलोकमध्ये, मिथुने मिथुनेषु, स्त्रीपुरुषयुगलमध्ये इत्यर्थ:, [ निर्द्धारणे सप्तमी। जातावेक-वचनम् ] चक्रौ चक्रवाकौ एव, चक्रवाकमिथुनमेवेत्यर्थ:, स्मरा-गमपारगौ कामशास्त्रतत्त्वज्ञौ, कामोपभोगे चतुरौ इत्यर्थ:, [ "अन्तात्यन्ताध्व—" इति ड-प्रत्यय: ] कुत: ? यौ चक्रौ, मिथ: परस्परं, वियुज्य वियुज्य पुन: पुन: विश्लिष्य विश्लिष्य, प्रतिरात्रं स्वेच्छयैवेति भाव:, नवमिव प्रत्यहं नूतनमिव, इदं प्रथम-मिवेत्यर्थ:, सम्भुञ्जाते सुरतसम्भोगानन्दमनुभवत:, अन्यथा अरोचकभयात् इति भाव:। अत्र दृष्टान्तमाह—यत् यस्मात्, अमृतभुजा सुधासेविनां देवानां, भर्त्ता अधीश्वर:, एतेन सर्वदा अमृतपानं सम्भवतीति बोद्धव्यम् ; विभु: प्रतीकारसमर्थ:, एतेन विषपानजानिष्टप्रतीकारसामर्थ्यं सूच्यते ; शम्भु: शिव:, सततम् अनारतम्, अमृतात् पीयूषात्, आहारात् अशनात्, प्रात्यहिकाहार्य्यभूतादमृतादित्यर्थ:, न रोचते इति अरोचकं तदाख्यं रोगम्, आपत् अलभत, तत् तस्मात् एव, विषं गरलं,

विशति युवतित्यागे रात्रीमुचं मिहिकारुचं
दिनमणिमणिं तापे चित्तान्निजाच्च यियासति।
विरहतरलज्जिह्वा बह्वाह्वयन्त्यतिविह्वलाम्
इह सहचरीं नामग्राहं रथाङ्गविहङ्गमाः॥ ३५॥

बुभुजे पपौ, नित्यं मधुरादिसेवनेन जाताया अरुचेः कटु-तिक्तादिविपरीतरससेवनेन निवृत्तिदर्शनादिति भावः॥ ३४॥

विशतीति।—इह प्रातःसमये, रथाङ्गविहङ्गमाः पुंचक्र-वाकाः, युवतित्यागे निजतरुणीकान्तावियोगे, चक्रवाककान्ता-विच्छेदतुल्यविच्छेदे इत्यर्थः, दिनोदयेन रात्रेरदर्शनादिति भावः, रात्रीमुचम् अधुनैव रात्रीरूपपत्नीवियोगिनं, [मुचेः क्विप्। रात्रीति कृदिकारादीकारः] मिहिकारुचं मिहिकायाः हिमस्य, रुक् इव रुक् प्रभा यस्य तं तादृशं, विरहात् हिमवत् शुभ्ररुचिं चन्द्रमित्यर्थः, विशति आश्रयति सति, चक्रवाक-विरहवत् शशिनोऽपि रात्रिविरहे समुपस्थिते सतीत्यर्थः, तापे सन्तापे च, विरहजनितमनस्तापे औष्ण्ये च इत्यर्थः, निजात् स्वात्, चक्रवाकीयादित्यर्थः, चित्तात् मनसः, [अपादानात्] दिनमणिमणिं सूर्य्यकान्तमणिं, यियासति यातुमिच्छति सति, सन्तापे चक्रवाकचित्तात् सूर्य्यकान्तं गन्तुमिच्छति सति इत्यर्थः, सूर्य्यकरसम्पर्केण सूर्य्यकान्तमणेः ज्वलनस्य स्वाभाविकत्वादिति भावः, [यातेः सन्नन्ताल्लटः शत्रादेशः] विरहेण रात्रौ विच्छेदेन, तरलन्त्यः तरलायमानाः, बहुक्षणादर्शनात् आह्वानार्थं चलाय-माना इत्यर्थः, [आचारार्थे क्विबन्ताल्लटः शत्रादेशः] जिह्वाः रसना येषां ते तादृशाः सन्तः, अतिविह्वलां दीर्घकालादर्शनात् अतिविवशां, सहचरीं प्रियां चक्रवाकीं, नामग्राहं नाम गृहीत्वा, ["नाम्न्यादिशिग्रहोः" इति णमुल् प्रत्ययः] बहु

स्वमुकुलमयैर्नेत्रैरन्धम्भविष्णुतया जनः
किमु कुमुदिनीं दुर्व्याचष्टे रवेरनवेक्षिकाम् ?।
लिखितपठिता राज्ञो दाराः कविप्रतिभासु ये
शृणुत शृणुतासूर्य्यम्पश्या न सा किल भाविनी ? ॥३६॥

---

वारंवारम्, आह्वयन्ति आकारयन्ति, दिनकरः समुदितः, अतः सत्वरमुत्तिष्ठ इति भावः ॥ ३५ ॥

स्वेति।—जनः लोकः, स्वमुकुलमयैः निजकोरकरूपैः, निमीलितैरित्यर्थः, नेत्रैः नयनैः, अन्धम्भविष्णुतया अन्धीभूततया, अनन्धाया अपि अन्धाया भूततया हेतुनेत्यर्थः, अविचारादिति भावः, ["कर्त्तरि भुवः खिष्णुच्" इति अभूततद्भावे कर्त्तरि खिष्णुच्-प्रत्ययः, "अरुर्द्विषत्—" इत्यादिना मुमागमः] रवेः सूर्य्यस्य, अनवेक्षिकाम् अनवेक्षणीं, सूर्य्यमपश्यन्तीमित्यर्थः, [ण्वुल्। "प्रत्ययस्थात्—"इति ण्वुलि कात् पूर्वस्येकारः] कुमुदिनीं कैरविणीं, राजपत्नीमिति भावः, किमु किमिति, दुर्व्याचष्टे ? दुर्वदति ? कुमुदिनी जगत्पावनम् अवश्यदर्शनीयं सूर्य्यमपि न पश्यति, अहो ! महदनुचितमिदमाचरणम् अस्याः इत्यादिरूपेण वृथा अपवदतीत्यर्थः; ननु "लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः। हिरण्यं सर्पिरादित्य आपो राजा तथाऽष्टमः॥ एतानि सततं पश्येन्नमस्येदर्चयेत्तु यः। प्रदक्षिणञ्च कुर्वीत तस्य चायुर्न हीयते॥" इति शास्त्रात् सूर्य्यावेक्षणस्य विहितत्वेन तदनाचरन्ती कथं न दुर्वाच्या ? इत्याशङ्कायामाह, कविप्रतिभासु कवीनां विदुषां, प्रतिभासु प्रज्ञासु, प्रतिभोद्भावितकाव्येषु इत्यर्थः, ये कुमुदिनीत्याख्यया प्रसिद्धाः, राज्ञः चन्द्रस्य नृपस्य च, ("राजा प्रभौ नृपे चन्द्रे" इति विश्वः) दाराः पत्नी राजदाराः,

चुलुकिततमःसिन्धोर्भृङ्गैः करादिव शुभ्यते
नभसि विसिनीबन्धो रन्ध्रच्युतैरुदविन्दुभिः।

लिखितपठिताः कविभिर्लिपीकृताः अध्येतृभिश्च अधीताः, [लिखिताश्च ते पठिताश्च इति विशेषणसमासः] कवयो यां राजपत्नीं वदन्ति, तद्विज्ञाश्च तथैव जानन्तीत्यर्थः, सा राजदारत्वेन वर्णिता कुमुदिनी, सूर्यं न पश्यतीति असूर्यम्पश्या सूर्यादर्शिनी, ["असूर्यललाटयोर्दृशितपोः" इति खश्-प्रत्ययः। "पाघ्रा—" इत्यादिना दृशेः पश्यादेशः। असूर्य इति चासमर्थसमासोऽयं, दृशिना नञः सम्बन्धत्वात्। "यदा तु सूर्य्याभावदर्शनमात्रं सूर्य्येतरचन्द्रादेर्दर्शनं वा विवक्षितं तदा खश् न भवति अनभिधानात्" इति न्यासकारादयः। अस्मादेव ज्ञापकात् क्रियाऽन्वयिनोऽपि नञ उत्तरपदेन समासः] न भाविनी किल? न भविष्यति किम्? भविष्यत्येवेत्यर्थः, ["भविष्यति गम्यादयः" इति साधुः] शृणुत शृणुत भोः दुर्वाचो जनाः! आकर्णयत आकर्णयत, [आक्रोशे द्विरुक्तिः] यदि असूर्य्यम्पश्या राजदारा इति राजनीत्यनुसारेण युक्तं स्यात्, तदा चन्द्रस्य राजापरनामकत्वात् चन्द्रदर्शनेनैव विकसनस्वभावायाः कुमुदिन्याः चन्द्रपत्नीत्वेन कविभिः रूपणात् कुमुदिन्याः अपि राजदारत्वं सिद्धमेव, एवञ्च राजदारत्वात् तस्याः सूर्य्यानवेक्षणस्य युक्तत्वेन सूर्य्यादर्शनेन यत् जनाः तां निन्दन्ति तदसङ्गतमेवेति निष्कर्षः। परमार्थतस्तु कैमुत्यन्यायेन पुरुषान्तरदर्शननिषेधपरमेतत् न सूर्य्यदर्शननिषेधपरम् इति द्रष्टव्यम्, अत एव काशिका "गुप्तिपरञ्चैतत्" इति ॥ ३६ ॥

चुलुकितेति।—नभसि आकाशे, भृङ्गैः उड्डीयमानभ्रमरैः, चुलुकितः चुलुकीकृतः, पानार्थं निकुब्जपाणौ गृहीत

शतदलमधुस्रोतःकच्छद्वयोपरिरम्भणात्
अनुपदमदःपङ्कशङ्काममी मम तन्वते ॥ १७ ॥
घुसृणसुमनःश्रेणिश्रीणामनादरिभिः सरः-
परिसरचरैर्भासां पत्युः कुमारतरैः करैः ।
अजनि जलजामोदानन्दोत्पतिष्णुमधुव्रता-
वलिशबलनाद्गङ्गापुञ्जश्रियं ग्टहयालुभिः ॥ १८

इत्यर्थः, तमःसिन्धुः अन्धकारसागरः येन तथोक्तस्य, बिसिनी-बन्धोः पद्मिनीमित्रस्य सूर्य्यस्य, करात् अंशोः हस्ताच्च, रन्ध्रच्युतैः अङ्गुल्यन्तरालगलितैः, उदविन्दुभिः इव तमःसिन्धोः जलकणै-रिव, शुभ्यते दीप्यते, प्रतीयते इत्यर्थः, इत्युत्प्रेक्षा ; [ शुभेर्भावे लट् ] भृङ्गतममीः तुल्यवर्णत्वात् तथा भृङ्गाणां कृष्णवर्णस्थूल-जलविन्दुवत् प्रतीयमानत्वाच्चेति भावः । किञ्च अमी भृङ्गाः, अनुपदम् अनुक्षणम्, उक्तरूपेण प्रतीयमानानन्तरमेवेत्यर्थः, शत-दलमधुस्रोतसः कमलमकरन्दप्रवाहस्य, कच्छद्वयोपरिरम्भणात् उभयपार्श्वस्थजलप्रायभागसंश्लेषात्, मधुप्रवाहस्य उभयतटो-परि उपवशनाद्धेतोरित्यर्थः, अमुष्य मधुस्रोतसः, पङ्कशङ्कां कर्दमभ्रान्तिं, मम वैतालिकस्य, तन्वते विस्तारयन्ति, उत्पादयन्तीत्यर्थः, पङ्कभृङ्गयोः समानवर्णत्वादिति भावः ॥१७॥

घुसृणेति ।—घुसृणसुमनःश्रेणिश्रीणां कुङ्कुमकुसुमावलि-शोभाना, [ "वाऽऽमि" इति नदीत्वपक्षे नुडागमः । "कुङ्कुमं घुसृणं वर्णम्" इति हलायुधः ] अनादरिभिः अवज्ञाकारिभिः, कुङ्कुमवर्णादप्यधिकारुणवर्णत्वादिति भावः, सरःपरिसरचरैः सरोवरप्रान्तवर्त्तिभिः, कुमारतरैः नवोदितत्वादतिबालैः, भासां पत्युः अर्कस्य, करैः किरणैः, [ कर्त्तृभिः ] जलजामोदेन कमलपरिमलेन, यः आनन्दः हर्षः, तस्मात् उत्पतिष्णूनाम्

रचयति रुचिः शोणीमेतां कुमारितरा रवे-
र्यदलिपटली नीलीकर्त्तुं व्यवस्यति पातुका।

उत्पतनशीलानाम्, उड्डीयमानानामित्यर्थः, [ "अलङ्कृञ्—" इत्यादिना इष्णुच् ] मधुव्रताना भृङ्गाणाम्, आवल्याः पङ्क्तेः, शवलनात् चित्रणात्, निजवर्णेन मिश्रीकरणात् हेतोरित्यर्थः, गुञ्जापुञ्जस्य, "कुँच्" "रति" इति ख्यातस्य कृष्णलासमूहस्य, ( "गुञ्जा तु कृष्णला" इत्यमरः ) श्रियम् इव श्रियं शोभाम्, इति निदर्शनाभेदः, गुञ्जाया उपरिभागस्य कृष्णवर्णत्वात् निम्नभागस्य च रक्तवर्णत्वादिति भावः, [ "नलोक—" इत्यादिना षष्ठीप्रतिषेधः ] गृहयालुभिः ग्राहकैः, ग्रहणशीलै-रित्यर्थः, [ "गृहि" इत्यदन्ताच्चौरादिकात् णिच्, "स्पृहिगृहि—" इत्यादिना आलुच् ] अजनि जातं, [ भावे लुङ् ] अलि-कुलयोगेन सूर्य्यांशुकिशोरकास्तद्वत् वभुः इत्यर्थः। गुञ्जावीजानां नीलमुखत्वात् अधो रक्तवर्णत्वाच्च उपरि सञ्चरतां कृष्णवर्णाना-मलिकुलानां सम्पर्केण अधोवर्त्तिनां वालसूर्य्यकिरणानामारक्त-वर्णानां गुञ्जासादृश्यमिति भावः ॥ ३८ ॥

रचयतीति।—यत् यस्मात्, अतिशयेन कुमारी कुमारि-तरा अतिशयेन वाला, नवप्रकाशिता इत्यर्थः, [ "घरूप—" इत्यादिना ङ्यां ह्रस्वः ] रवेः सूर्य्यस्य, रुचिः प्रभा, एतां सरसीं, शोणीं शोणवर्णाम्, अरुणवर्णामित्यर्थः, [ "शोणात् प्राचाम्" इति विकल्पात् ङीप् ] रचयति करोति, निजारुण्यस्पर्शनेनेति भावः ; तथा पातुका पतयालुः, सरस्या एवोपरि उत्पतनशीला इत्यर्थः, [ "लषपत—" इत्यादिना उकञ् ] अलीनां भ्रमराणां, पटली मण्डली च, नीलीकर्त्तुं स्वकान्तिसम्पर्केण कृष्णवर्णीकर्त्तुम्, [ अभूततद्भावे च्विः ] सरसीमिवेति भावः, व्यवस्यति उद्युङ्क्ते

अजनि सरसी कल्माषी तत् ध्रुवं धवलस्फुट-
त्कमलकलिकाषण्डैः पाण्डूकृतोदरमण्डला ॥ ३८ ॥
कमलकुशलाधाने भानोरहो ! पुरुषव्रतं
यदुपकुरुते नेत्राणि श्रीगृहत्वविवक्षुभिः।

---

इत्यर्थः, तत् तस्मात्, सरसी दीर्घिका, धवलैः शुभ्रैः, स्फुटद्भिः विकसद्भिश्च, कमलकलिकानां पद्ममुकुलानां, षण्डैः कदम्बैः, समूहैरित्यर्थः, ("कदम्बे षण्डमस्त्रियाम्" इत्यमरः) पाण्डूकृतं धवलीकृतम्, [ अभूततद्भावे च्विः ] उदरमण्डलं मध्यभागः यस्याः सा तादृशी सती, कल्माषी चित्रवर्णा, विविधवर्णेत्यर्थः, [ गौरादित्वात् ङीष् ] अजनि जाता, [ "दीपजन—" इत्यादिना कर्त्तरि लुङ् चिण् ] ध्रुवं निश्चितम्, इत्युत्प्रेक्षायाम्। अत्र सरस्याः स्वगुणत्यागेन रविकिरणादिगुण-स्वीकारात्तद्गुणालङ्कारः, "तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहः" इति लक्षणात्। तत्रैकैकगुणसङ्क्रान्तिपरिचयात् शोणाद्यनेक-गुणसङ्क्रमद्वारा कल्माषस्वीकारोत्प्रेक्षणात्तद्गुणोत्प्रेक्षयोरङ्गाङ्गि-भावेन सङ्करः ॥ ३८ ॥

कमलेति।—कमलानां पद्मानां, प्रकृतानामुपमितानां वा इति भावः, कुशलाधाने क्षेमविधाने, विकासजनने इति भावः, भानोः सूर्यस्य, पुरुषव्रतं पुरुषस्य पुरुषाभिमानिनः, व्रतं नियमः, दृढाध्यवसाय इत्यर्थः, पौरुषमिति यावत्, अहो ! चित्रम् ! अथवा—अहापुरुषः पुरुषाभिमानवान्, [ अहोपुरुष इति मयूरव्यंसकादिषु कैयटः ] तस्य व्रतं दृढनियम इत्यर्थः; कुतः ? यत् यस्मात्, असौ भानुः, श्रीगृहत्वं शोभाश्रयत्वं, नेत्राणां सौन्दर्य्यवर्णने उपमानत्वमित्यर्थः, विवक्षुभिः वक्तु-मिच्छुभिः, ["द्वितीया—"इति योगविभागात् द्वितीयासमासः]

कविभिरुपमादानादम्भोजतां गमितान्यसा-
वपि यदतथाभावान्मुञ्चत्युलूकविलोचने ॥ ४० ॥
यदतिमहतीभक्तिर्भानौ तदेनमुदित्वरं
त्वरितमुपतिष्ठस्वाध्वन्य! त्वमध्वरपद्धतेः।

कविभिः काव्यकर्त्तृभिः वाल्मीकादिभिः, उपमादानात् नेत्राणां सादृश्यत्वेन वर्णनाभावात्, अम्भोजतां गमितानि कमलत्वेन रूपितानि, नेत्राणि नयनानि अपि, सौन्दर्य्यातिशय्य-ख्यापनाय कमलतुल्यतया वर्णितानि जननयनान्यपीत्यर्थः, उपकुरुते उन्मीलनेन उपकृतानि करोति, विकासयतीत्यर्थः, आलोकसहकारादेव लोकलोचनाना विषयेषु प्रवृत्तेरिति भावः; सूर्य्योदये सर्व्व एव प्राणिनो निद्रां परिहृत्य नयनोन्मीलन-करणात् भानोः उपमितकमलानां कुशलाधायकत्वं, प्रकृतानाञ्च विकाससम्पादनेन कुशलाधायकत्वमिति बोद्धव्यम्; यत् अपि यस्माच्च, अतथाभावात् औपमानिकाम्भोजत्वस्यापि अभावा-दित्यर्थः, [ नञर्थस्य न-शब्दस्य सुप्सुपेति समासः ] उलूकस्य पेचकस्य, विलोचने नयने, गोलाकारे क्षुद्रे च इति भावः, मुञ्चति परिहरति, न उन्मीलनेन उपकरोतीत्यर्थः, सूर्य्यकरासहत्वेन निमीलिताक्षत्वादिति बोध्यम्। अन्वयव्यतिरेकाभ्याम् अम्भोज-सदृशस्य लोकलोचनस्य विकासेन कुशलाधायकत्वात् तद-सदृशस्य उलूकलोचनस्य च अविकाशेन कुशलानाधायकत्वात् सहस्रकरस्य देवस्य अम्भोजक्षेमङ्करत्वव्रतं किमु वाच्यम्? इति निष्कर्षः। प्रातः अम्भोजवल्लोकलोचनाम्भोजान्यपि विकासयामास इति भावः॥ ४०॥

यदिति।—अध्वरस्य यज्ञस्य, पद्धतेः पथः, अध्वन्य! नित्यपान्थ!, [ अध्वानमलं गच्छतीति अध्वन्यः "अध्वनो

इह हि समये मन्देहेषु व्रजन्त्युदवज्रताम्
अभिरविमुपस्थानोत्क्षिप्ता जलाञ्जलय: किल ॥ ४१ ॥
उदयशिखरिप्रस्थावस्थायिनी स्फुरिरत्नया
शिशुतरमहामाणिक्यानामहर्मणिमण्डली ।
रजनिदृषदं ध्वान्तश्यामां विधूय पिधायिकां
न खलु कतमेनेयं जाने जनेन विमुद्रिता ? ॥ ४२ ॥

---

यत्-खौ" इति यत्-प्रत्ययः। "ये चाभावकर्मणोः" इति प्रकृतिभावः] हे नित्ययज्ञानुष्ठाननिरत महाराज! यत् यस्मात्, त्वं भवान्, भानौ सूर्य्ये, अतिमहती अत्युत्तमा, भक्तिः अनुरागविशेषः यस्य सः तादृशः, असीति शेषः, [भक्तिशब्दस्य प्रियादिषु पाठात् न पुंवद्भावः] तत् तस्मात्, उदित्वरम् उद्यन्तम्, ["इण्नश—"इत्यादिना क्वरप्] एनं भानुं, त्वरितं शीघ्रम्, उपतिष्ठस्व उपास्स्व, ["उपाद्देवपूजा—"इत्यादिना देवपूजायामात्मनेपदम्] कुतः? हि यस्मात् कारणात्, इह अस्मिन्, समये उदयकाले, रविम् अर्कम्, अभि लक्षयित्वा, रविमुद्दिश्य इत्यर्थः, ["अभिरभागे" इति लक्षणार्थे कर्मप्रवचनीयत्वात्तद्योगे द्वितीया] उपस्थाने उपासनायाम्, उत्क्षिप्ताः ऊर्द्धं निक्षिप्ताः, "आपः ऊर्द्धं विक्षिपन्ति" इति श्रुतेः; जलाञ्जलयः उदकाञ्जलयः, मन्देहेषु मन्देहाख्येषु राक्षसेषु, उदवज्रतां जलमयवज्रायुधत्व. ["मन्थौदन—"इत्यादिनोदादेशः] व्रजन्ति गच्छन्ति, किल इत्यागमे। अत्र श्रुतिः "तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः, सन्ध्यायां गायत्र्याऽभिमन्त्रिता आप ऊर्द्ध्वं विक्षिपन्ति, ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्ति" इति ॥ ४१ ॥

उदयेति।—इयं परिदृश्यमाना, अहर्मणिमण्डली सूर्य्य-

सुरपरिवृढः कर्णात् प्रत्यग्रहीत् किल कुण्डल-
द्वयमथ खलु प्राच्यै प्रादान्मुदा स हि तत्पतिः।
विधुरुदयभागेकं तत्र व्यनोक्ति विलोक्यते
नवतरकरस्वर्णस्रावि द्वितीयमहर्मणिः॥ ४३॥

---

बिम्बस्वरूपा, उदयशिखरिणः उदयाद्रेः, प्रस्थावस्थायिनी सानुनिष्ठा, अक्षया अविनश्वरा, भूयसीत्यर्थः, शिशुतराणि अतिशयेन बालानि, सद्यःप्रकाशितानीति यावत्, महांसि तेजांसि एव, माणिक्यानि पद्मरागाः, अरुणवर्णत्वादिति भावः, तेषां खनिः आकरः, ध्वान्तेन अन्धकारेण, श्यामां कृष्णवर्णां, ध्वान्तवत् श्यामाञ्च, पिधायिकाम् आच्छादिकां, जगतः खनेः प्रवेशद्वारस्य चेति भावः, रजनिं रात्रिम् एव, दृषदं शिलाखण्डं, विधूय अपसार्य्य, कतमेन केन, जनेन लोकेन, विमुद्रिता? उद्घाटिता? इति न जाने न बुध्ये, खलु इति वितर्के। अत्र सूर्य्यमण्डल्यादिषु खनित्वाद्यारोपात् रूपकालङ्कारः॥ ४२॥

सुरेति।—सुराणां देवाना, परिवृढः प्रभुः इन्द्रः, [ "प्रभौ परिवृढः" इति निपातनात् साधुः ] कर्णात् राधेयात्, कुण्डल-द्वयं कर्णाभरणयुगलं, सूर्य्यप्रदत्तं सहजमक्षयञ्चेति भावः, प्रत्यग्रहीत् याचित्वा आदात्, किल इति वार्त्तायाम्; "ततो निकृत्य गात्राणि शस्त्रेण निशितेन सः। प्रायच्छद्देवराजाय दिव्यं वर्म सकुण्डलम्॥" इति भारतवचनात्; ततोत्प्रेक्ष्यते—अथ प्रतिग्रहानन्तरं, प्राच्यै पूर्वस्यै दिशे, मुदा प्रीत्या, प्रादात् दत्तवान्, तत् कुण्डलद्वयमिति शेषः, खलु निश्चये, हि यस्मात्, सः इन्द्रः, तस्याः प्राच्याः दिशः, पतिः भर्त्ता, भार्य्यायै आभरण-दानस्य पत्युरौचित्यादिति भावः; कथं त्वया तत् बुध्यते? इत्याह—तत्र तयोः कुण्डलयोः मध्ये, एकं कुण्डलम्, उदयं

दहनमविशद्दीप्तिर्याऽस्तंगते गतवासर-
प्रथमसमयप्राप्ते पत्यौ विवस्वति रागिणी ।
अधरभुवनात् सोद्धृत्यैषा हठात्तरणेः कृता-
मरपतिपुरप्राप्तिर्धत्ते सतीव्रतमूर्त्तिताम् ॥ ४४ ॥

भजतीति उदयभाक् उद्यन्, उदयकालिकः इत्यर्थः, [ "भजो ण्विः" इति ण्वि-प्रत्ययः ] विधुः चन्द्रः, इवेति शेषः, व्यलोकि विलोक्यते स्म, जनैर्गतसायंकाले इति शेषः, नवतरान् अति-शयेन प्रत्यग्रान्, करान् किरणान् एव, स्वर्णानि सुवर्णानि, तुल्यप्रभासम्पन्नत्वादिति भावः, सावर्णात् आत्मनो वर्षयतीति तत् तादृशं, द्वितीयं कुण्डलम्, अहर्मणिः दिनमणिः सूर्यः, इवेति शेषः, [ "रोऽसुपि" इति रेफादेशः ] विलोक्यते इदानीं प्रातः दृश्यते, जनैरिति शेषः, एतदेव पूर्वानुमानस्य कारण-मिति भावः ॥ ४३ ॥

दहनमिति ।—रागिणी सायङ्कालिकत्वात् रक्तवर्णा अनु-रागिणी च, या दीप्तिः सूर्यस्य प्रभा काचित् स्त्री च, गत-वासरे अतीतदिने, प्रथमसमयम् अवसानकालं, तेजसो जीवनस्य चेति शेषः, सायंकालं मृत्युकालञ्चेति भावः, प्राप्ते उपस्थिते सति, पत्यौ स्वामिनि भर्त्तरि च, विवस्वति सूर्ये कस्मिंश्चित् पुरुषे च, अस्तम् अस्ताद्रिम् अदर्शनञ्च, गते प्राप्ते सति, दहनम् अग्निम्, अविशत् प्रविष्टवती, "अग्निं वाऽऽदित्यः सायं प्रविशति" इति श्रुतेः "मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणं वा" इति स्मृतेश्च सहगमनार्थमिति भावः, सा पूर्वोक्ता, एषा दीप्तिः काचित् साध्वी नारी च, हठात् बलात्, आत्मीयपुण्यप्रभावादित्यर्थः, अधरभुवनात् अधोलोकात्, पातालात् नरकाच्च इत्यर्थः, उद्धृत्य उत्तोल्य, तरणेः पत्युः अर्कस्य,

बुधजनकथा तथ्यैवेयं तनौ तनुजन्मनः
पितृमितिहरिद्वर्णाद्याहारजः किल कालिमा।
अमलयमुनाक्रोडैः कालेरितस्तमसां पिबात्
अपि यदमलच्छायात् कायादभूयत भास्वतः॥ ४५॥

कस्यचित् पुरुषस्य च, कृता सम्पादिता, अमरपतिपुरप्राप्तिः पूर्वदिगवस्थितेन्द्रनगरलाभः स्वर्गलाभश्च यया सा तादृशी सती, तीव्रतया तीक्ष्णतया सह वर्त्तते इति तादृशी सतीव्रता अतीव तीक्ष्णा, सत्याः पतिपरायणतायाः, व्रतं नियमो यत्र सा तादृशी, पतिव्रताधर्मश्च इत्यर्थः, मूर्त्तिः आकारः रूपञ्च यस्याः तस्याः भावः तत्ता तां सतीव्रतमूर्त्तितां, धत्ते धारयति, सूर्य्यतेजसः उत्तरोत्तरं तीक्ष्णताभावादिति "व्यालग्राही यथा सर्पं बलादुद्धरते बिलात्। तद्वद्भर्त्तारमादाय तेनैव सह मोदते॥" इति स्मरणादिति च भावः। अत्र प्रस्तुतदीप्तिविशेषणसाम्यादप्रस्तुतसतीप्रतीतिः समासोक्तिरलङ्कारः॥ ४४॥

बुधेति।—तनोः शरीरात्, जन्म उत्पत्तिः यस्य तस्य तनुजन्मनः अपत्यस्य, [ "अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदे" इति वामनः ] तनौ शरीरे, कालिमा श्यामता, पित्रोः जननीजनकयोः, शितिहरिती कृष्णपालाशी, वर्णौ वर्णविशिष्टम् आहार्य्यद्रव्यमित्यर्थः, तदादिः तत्प्रभृतिः, यः आहारः भोज्यं, तस्मात् जायते उत्पद्यते इति तादृशः, इयम् ईदृशी, किल इति प्रसिद्धौ, बुधजनकथा विद्वज्जनानामुक्तिः, तथ्या एव सत्या एव; कुतः? यत् यस्मात्, अमलच्छायात् अतिस्वच्छकान्तेरपि, तमसाम् अन्धकाराणां, [ कृद्योगात् कर्मणि षष्ठी ] पिबतीति पिबः तस्मात् पातुः, [ "पाघ्रा—" इत्यादिना श-प्रत्ययः, पिबादेशश्च ] इवेति शेष, इतः अस्मात्,

अभजत चिराभ्यासं देव: प्रतिक्षणदाऽत्ययं
दिनमयमय कालं भूय: प्रसूय तथा रवि:।
न खलु शकिता शोलं कालप्रसूतिरसौ पुरा
यमयमुनयोर्जन्माधानेऽप्यनेन यथोज्झितुम् ॥ ४६ ॥

पूर्वाकाशे दृश्यमानादित्यर्थ:, भास्वत: सूर्य्यस्य, कायात् शरीरात्, कालै: कृष्णवर्णै:, शमनयमुनाक्रोड़ै: यमकालिन्दीशनैश्वरै:, अभूयत जातं, [भावे लङ्] कृष्णवर्णान्धकाराहारादेव शुभ्रकान्तेरपि सूर्य्यस्य अपत्यानि कृष्णवर्णानि जातानि इति निष्कर्ष:। अत्र शमनादिकालिमस्तात्पर्तिमिराहारपरिणति-पूर्वकत्वोत्प्रेक्षा ॥ ४५ ॥

अभजतेति।—अयम् उद्यन्, देव: द्युतिमान्, रवि: सूर्य्य:, प्रतिक्षणदाऽत्ययं प्रत्येकरात्र्यवसाने, [अव्ययोभावसमास:, "तृतीयासप्तम्योर्बहुलम्"इति विकल्पात् सप्तम्यामम्भाव:] दिन-मयं दिवसरूपं, कालं समयं कृष्णवर्णञ्च, ("कालो मृत्यौ महाकाले समये यमकृष्णयो:" इति विश्व:) भूय: पुन: पुन:, प्रसूय जनयित्वा, तथा तादृक्, चिराभ्यासं बहुकाला-भ्यसन, पौन:पुन्येन करणस्वभावमित्यर्थ:, अभजत प्राप्नोत्, यथा येन कृत्वेत्यर्थ:, अनेन रविणा, असौ चिराभ्यस्ता इत्यर्थ:, अत एव शोलं स्वभावभूता, कालस्य समयस्य कृष्णवर्णस्य च, प्रसूति: उत्पादना, पुरा पूर्वम्, वर्त्तमानात् प्राक् समयोत्पादनात् परस्त्वित्यर्थ:, यमयमुनयो: शमनकालिन्द्या: स्वापत्ययो:, जन्माधाने जननार्थं वीजनिधानविषयेऽपि, उज्झितुं त्यक्तुं, न शकिता खलु नैव शक्ता, इवेति शेष:, [कर्मणि क्त:। कर्मणि निष्ठाया-मिड़ागम:, तथा च काशिकावृत्तौ—"सौनागा: कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन, शकितो घट: कर्त्तुं,

रुचिरचरणः सूतोरुश्रीसनाथरथः शनिं
शमनमपि स त्रातं लोकानसूत सुताविति ।
रथपदकृपासिन्धुर्बन्धुर्दृशामपि दुर्जनैः
यदुपहसितो भास्वान् नास्मान् हसिष्यति कः खलः ? ॥४७॥

शक्तो घटः कर्त्तुमिति ] तत्र कालशब्दे वाच्यप्रतीयमानयोरभेदाध्यवसायेन भगवतो भानोः प्रत्यह कालप्रसूत्या अभ्यासादपत्येष्वपि शमनयमुनादिषु कालप्रसवित्वमुत्प्रेक्ष्यते, तत्र कालयोः कृष्णानेहसोरभेदाध्यवसायादतिशयोक्तिः इति तयोरेकाश्रयत्वेनात्र सङ्करः ॥ ४६ ॥

ननु ईदृशबाहुल्येन सूर्य्यवर्णन लोकाना हासजनकं भवितुमर्हति इत्याशङ्क्याह, रुचिरेति ।—रुचिरचरणः मनोज्ञाचरणशीलः, जगदाह्लादकत्वादिति भावः, अथच विपरीतलक्षणया अरुचिरचरणः किरणार्थकस्य पादशब्दस्य चरणपर्य्यायकत्वात् तीव्रपादः इत्यर्थः, सन्तापकत्वादिति भावः, तथा सूतया प्रसूतया, उदयानन्तरं प्रकाशितया इत्यर्थः, उर्व्या प्रचुरया, श्रिया शोभया, अथ च, सूतस्य सारथेः अरुणस्य, अनूरोरिति भावः, ("सूरसूतोऽरुणोऽनूरुः" इत्यमरः ) ऊर्वोः सक्थिद्वयस्य, ( "सक्थि क्लीवे पुमानूरुः" इत्यमरः ) श्रिया शोभया, इति सोपहासोक्तिः, सनाथः युक्तः, रथः स्यन्दनं यस्य सः तादृशः, तथा रथपदेषु रथाङ्गनामपक्षिषु चक्रवाकेषु, कृपासिन्धुः दयासागरः, स्वोदयेन दम्पत्योर्मिलनघटनात् चक्रवाकाणामुपकारीत्यर्थः, तथा दृशां लोकचक्षुषां, बन्धुः सुहृत्, स्वादयेन प्रकाशकत्वादिति भावः, सः सर्वलोकनमस्कृतः, भास्वान् सूर्य्योऽपि, शनिं शनैश्चरं, क्रूरग्रहत्वेन लोकानामनिष्टकारितया अत्यन्तारुचिरचरणत्वेन तथा पङ्गुत्वात् गमनकाले कुत्सितदर्शनत्वेन च पितृपेक्षया अत्यन्त-

शिशिरजरुजां घर्मं शर्मोदयाय तनूभृताम्
अथ खरकराश्यानास्यानां प्रयच्छति यः पयः।
जलभयजुषां तापं तापस्पृशां हिममित्ययं
परहितमिलत्कृत्यावृत्तिः स भानुरुदञ्चति॥ ४८॥

विसदृशमिति भावः, तथा शमनमपि यमञ्च,दम्पत्योरन्यतरप्राण-हरणेन विच्छेदजनकत्वादकरुणत्वेन तथा स्वजनप्राणविनाशनेन नियतरोदनादश्रुस्रोतोत्पादकतया जननेत्राणां शत्रुभूतत्वेन च पित्रपेक्षया अत्यन्तविसदृशमिति भावः, सुतौ पुत्रौ, लोकान् जगन्ति, त्रातुं रक्षितुं, विपरीतलक्षणया विनाशयितुञ्च, असूत अजनयत्, इति एवमुक्त्वा इत्यर्थः, दुर्जनैः खलैः, यत् यदा, उपहसितः उपहासः कृतः, तदा कः खलः दुर्जनः, अस्मान् वैतालिकानित्यर्थः, न हसिष्यति? न उपहासं करिष्यति? अपि तु सर्व एव सूर्य्यवर्णनात् अस्मान् उपहासं करिष्यतीत्यर्थः, परन्तु तत्र न काऽपि अस्माकं क्षतिरिति भावः। कैमुत्येनार्थान्तरापादनादर्थापत्तिरलङ्कारः॥ ४७॥

शिशिरेति।—यः देवः, शिशिरजा शीतर्त्तुजा, रुक पीड़ा येषां तादृशानां, तनूभृतां शरीरिणां, शर्मोदयाय सुखोत्पादनाय, एतत् पदद्वयमुत्तरवाक्यत्रयेऽप्यनुषञ्जनीयम्; घर्मं निदाघं, वसन्तग्रीष्मकालिकौ सन्तापौ इत्यर्थः, अथ तदनन्तरं, खरकरैः वसन्तनिदाघजनितैः तीक्ष्णैः किरणैः, आश्यानानि शुष्काणि, आस्यानि मुखानि येषां तादृशानां, "खरकरश्याना" इति पाठेऽपि स एवार्थः, तनूभृतां शर्मोदयाय पयः वर्षासु जलं, तथा जलभयजुषां वर्षाजलभीतानां, तनूभृतां शर्मोदयाय तापं शारदसन्तापं, तथा तापस्पृशां शारदसन्तापभाजां, तनूभृतां शर्मोदयाय हिमं हैमन्तकालज-

इह न कतरश्चित्रं धत्ते तमिस्रततीर्दिशाम् ?
अपि चतसृणामुत्सङ्गेषु श्रिता धयतां क्षणात् ।
तरुशरणतामेत्य च्छायामयं निवसत्तमः
शमयितुमभूदानैश्वर्य्यं यदर्य्यमरीचिषाम् ॥ ४९ ॥
जगति तिमिरं मूर्च्छामञ्चत्त्वजेऽपि चिकित्सतः

शैत्यं, प्रयच्छति ददाति, कालचक्रपरिभ्रामणेन आनयतीत्यर्थः, इति इत्थं, परहिताय अन्येषामुपकाराय, मिलन्ती युज्यमाना, कृत्यावृत्तिः व्यापाराभ्यासः यस्य सः तादृशः, सः प्रसिद्धः, अयं परिदृश्यमानः, भानुः भगवान् सूर्य्यः, उदयति उदेति । क्रियासमुच्चयोऽलङ्कारः ॥ ४८ ॥

इहेति ।—चतसृणां चतुःसङ्ख्याकानामपि, [“न तिसृचतसृ” इति निषेधान्नामि दीर्घो न] दिशां पूर्वादीनाम्, उत्सङ्गेषु क्रोड़ेषु, तत्तत्प्रदेशेष्वित्यर्थः, श्रिताः स्थिताः, तमिस्रस्य तिमिरस्य, ततीः समूहान्, क्षणात् अल्पेनैव समयेन, धयतां पिबतां, दूरीकुर्वतामित्यर्थः, [धेटो लटः शत्रादेशः] अर्य्यमरीचिषां सूर्य्यतेजसां, तरवः वृक्षा एव, शरणानि त्रातारः यस्य तद्भावं तत्ताम्, एत्य प्राप्य, निवसत् वर्त्तमानं, छायामयम् अनातपरूपं, तमः अन्धकारं, शमयितुं संहर्त्तुं, यत् अनीश्वरस्य भावम् आनैश्वर्य्यम् असामर्थ्यं, [“नञः शुचीश्वर—”इत्यादिनोभयपदवृद्धिः] अभूत् जातम्, इह अस्मिन् आनैश्वर्य्यविषये, कतरः को नाम जनः, चित्रम् आश्चर्य्यं, न धत्ते ? चेतसि न आवहति ? अपि तु सर्व एव धत्ते इत्यर्थः, संहतिविनाशसमर्थस्य अल्पविनाशकतायाः अकिञ्चित्करत्वादिति भावः । तमोराशिविघातिनो देवस्याल्पतमोविषये सामर्थ्यविघातकतायाः विरोधात् छायामयत्वेन तत्परिहाराच्च विरोधाभासोऽलङ्कारः ॥ ४९ ॥

पितुरिव निजादस्मादस्मावधीत्य भिषज्यतः?।
अपि च शमनस्यासौ तातस्ततः किमनौचिती
यदयमदयः कह्लाराणामुदेत्यपमृत्यवे?॥ ५०॥
उडुपरिवृढः पत्न्या मुक्तां सतीं यदपीडयत्

जगतीति।—दस्रौ अश्विनौ, जगति लोके, तिमिरं तमो नेत्ररोगश्च, ("तिमिरं ध्वान्ते नेत्रामयान्तरे" इति विश्वः) तथा अब्जव्रजेऽपि पद्मषण्डेऽपि, मूर्च्छां निमीलनं रोगविशेषञ्च, चिकित्सतः प्रतिकुर्वाणात्, [कितः सनन्ताल्लटः शत्रादेशः, "गुप्तिज्किद्भ्यः सन्" इति निन्दाक्षमाव्याधिप्रतीकारेषु सन्निष्यते] निजात् स्वात्, पितुः जनकात्, अस्मात् परिदृश्यमानात्, सूर्य्यादिति शेषः, अधीत्य पठित्वा इव, आयुर्वेदमिति शेषः, भिषज्यतः स्वर्गे चिकित्सतः, किम्? इति शेषः, इत्युत्प्रेक्षा, अन्यथा कुत्र तयोः तादृशी शिक्षा जाता? इति भावः, [कण्ड्वादौ भिषजेति पाठात् यगन्ताल्लटि तस् "चिकित्सति भिषज्यति" इति भट्टमल्लः] अपि च किञ्च, असौ सूर्य्यः, यत् यतः, शमनस्य यमस्य, तातः जनकः, ततः तस्मात्, इवेति शेषः, अयं भानुः, अदयः निष्करुणः सन्, कह्लाराणां कैरवाणाम्, अपमृत्यवे अकालमरणाय, निमीलनरूपायेति भावः, उदेति उत्तिष्ठति, सा अनौचिती किम्? अन्याय्यं किम्? "कारणगुणाः कार्य्यगुणमारभन्ते" इति न्यायात् नित्यमेव प्राणिसंहारकस्य तनयस्य पितुरपि तथैव गुणवत्त्वस्य युक्तत्वात् नैवानौचित्यं, वरमुचितमेवेति निष्कर्षः। उत्प्रेक्षा। दस्रयोः पितृवत् सर्वोपकारित्वमुचितं, यमपितुस्तु रवेः कह्लारमारकत्वं न अनुचितम् इति भावः॥ ५०॥

उडुरिति।—उडुपरिवृढः तारापतिः चन्द्रः, पत्न्या भर्त्रा

यदपि विसिनीं भानोर्जायां जहास कुमुद्वती ।
तदुभयमतः शङ्के सङ्कोचितं निजशङ्कया
प्रसरति नवार्के कर्कन्धूकणारुणरोचिषि ॥ ५१ ॥
श्रुतिमयतरोर्भानोर्जानेऽवनेरधराध्वना
विहरणकृतः शाखाः साक्षात्कृतानि दश त्विषाम् ।

---

भानुना, मुक्तां त्यक्तां, दिनान्ते अस्तमितत्वादिति भावः; सतीं साध्वीं, विसिनीं पद्मिनीं, यत् यतः, अपीडयत् पीडितवान्, रात्रौ सङ्कोचनेन इति भावः, तथा कुमुद्वती कुमुदिनी अपि, ["कुमुदनडवेतसेभ्यो ड्मतुप्" ] भानोः सूर्य्यस्य, जायां भार्य्यां, विसिनीं पद्मिनीं, यत् यस्मात्, जहास हसितवती, इवेति शेषः, निशायां स्वविकाशेन इति भावः, अतः अस्मादेव कारणात्, कर्कन्धूः पक्वबदरीफलमित्यर्थः, [ "अन्दूदृन्भू—"इत्यादिना कू-प्रत्ययान्तनिपातः ] तत्कणावत् तच्चूर्ण इव, अरुणरोचिषि लोहितकान्तौ, प्रभातकालिकत्वात् क्रोधाच्चेति भावः, नवार्के बालसूर्य्ये, प्रसरति आकाशं व्याप्नुवाने सति, तयोः चन्द्र-कुमुद्वत्योः, उभयं द्वन्द्व, निजशङ्कया स्वकृतपद्मिनीलाञ्छना-भयेन, सङ्कोचितं निस्तेजस्त्वं गतं, निष्प्रभीभूतमिति यावत्, निमीलितञ्च, शङ्के इति मन्ये, अहमिति शेषः, इत्युत्प्रेक्षा । सर्वो हि स्वदुष्टव्यवहारेणात्मानं कलुषयतीति भावः ॥ ५१ ॥

श्रुतीति ।—अवनेः भूमेः, अधराध्वना अधोमार्गेण, पाताल-वर्त्मना इत्यर्थः, एतच्च अनूर्द्ध्वस्थानमात्रोपलक्षणम्, ("अधरस्तु पुमान् श्रोष्ठे हीनेऽनूर्द्ध्वे तु वाच्यवत्" इति मेदिनी) विहरणकृतः विहारकृतः, सञ्चरतः इत्यर्थः, आविर्भवत इत्यर्थश्च, श्रुतिमय-तरोः वेदात्मकवृक्षस्य, "श्रुतिमयतनोः" इति पाठे—श्रुतिमयी पूर्वोक्तयुक्त्यनुसारेण वेदात्मिका, तनुः शरीरं यस्य तादृशस्य

निशि निशि सहस्राभ्यां दृग्भिः शृणोति सहस्वराः
पृथगहिपतिः पश्यत्यस्याक्रमेण च भास्वराः॥ ५२॥
बहु न-खरता येषामग्रे खलु प्रतिभासते
कमलसुहृदस्तेऽमी भानोः प्रवालरुचः कराः।

इत्यर्थः, अस्य उदयं गच्छतः, भानोः सूर्य्यस्य, त्विषां रश्मीनां, दश-शतानि सहस्रं, सहस्ररश्मिरूपेण परिणता इत्यर्थः, स्वरैः उदात्तादिभिः सह वर्त्तन्ते इति सहस्वराः सस्वराः, ["वोपसर्जनस्य" इति सहशब्दस्य विकल्पात् स-भावाभावः] पृथक् असाङ्कर्य्येण, भास्वराः दीप्तिशीलाः, ["स्थेशभास—" इत्यादिना वरच्] शाखाः वेदभागान् वृक्षावयवांश्च, ("शाखा पक्षान्तरे बाहौ वेदभागद्रुमाङ्गयोः" इति मेदिनी) अहिपतिः शेषः, निशि निशि प्रतिनिशं, [वीप्सायां द्विर्भावः] तत्र तदा सूर्य्यसञ्चारेण निशाभावात् मर्त्त्यलोकापेक्षया निशीति बोध्यम्; सहस्राभ्यां द्विसहस्रसङ्ख्याभिः, दृग्भिः नेत्रैः, शेषनागस्य सहस्रफणत्वात् प्रतिफणञ्च नेत्रद्वयसद्भावात् नेत्राणां द्विसहस्रत्वं बोध्यम्; अक्रमेण यौगपद्येन, साक्षात् प्रत्यक्षं, शृणोति आकर्णयति, पश्यति अवलोकयति च, शेषस्य चक्षुःश्रवस्त्वात् शाखानां शब्दात्मकत्वेन श्रावणत्वोपपत्तेः रश्मिपरिणामेन चाक्षुषत्वाच्च दर्शनोपपत्तेरिति भावः, जाने इति मन्ये इत्युत्प्रेक्षा रूपकसङ्कीर्णा। एकेन दृक्सहस्रेण शृणोति अपरेण दृक्सहस्रेण पश्यतीति विश्वेश्वरभट्टारकव्याख्यानं चिन्त्यं, दृशां प्रत्येकमुभयशक्तियुक्तानां शक्तिप्रविभागायोगात्, तस्मात् ग्राहकस्योभयशक्तिमत्त्वात् ग्राह्यस्य च तेजःशब्दोभयात्मकत्वात् सर्वाभिरेव दृग्भिः सर्वाश्च शाखा युगपत् पश्यति शृणोति चेति रमणीयम्॥ ५२॥

बह्विति।—येषां कराणाम्, अग्रे प्रत्यग्रावस्थायां, प्रभाते

उचितमुचितं जालेष्वन्तः प्रवेशिभिरायतैः
कियदवयवैरेषामालिङ्गिताऽङ्गुलिवल्गुता ॥ ५३ ॥
नय नयनयोर्द्राक् पेयत्वं प्रविष्टवतीरमूः
भवनवलभीजालान्नाला इवार्ककराङ्कुलीः।

इत्यर्थः, बह्वी प्रभूता, अत्यर्था इत्यर्थः, न-खरता अतीक्ष्णता, अन्यत्र—अग्रे अग्रभागे, बहुनखरता बहुनखत्वं, ("नखोऽस्त्री नखरोऽस्त्रियाम्" इत्यमरः) खलु निश्चितं, प्रतिभासते प्रतीयते, कमलानां पद्मानां, सुहृदः बन्धवः, विकाशकत्वा-दिति भावः, सुहृत्त्वेनैव न-खरता बोद्धव्या; अन्यत्र—सौन्दर्य-मार्दवाभ्यां तत्सदृशाः, प्रवालरुचः विद्रुमभासः, उभयत्रापि समानम्; भानोः सूर्यस्य, ते तादृशाः, अमी परिदृश्यमानाः, कराः अंशवः हस्ताश्च, प्रसर्पन्तीति शेषः, अत एव जालेषु गवाक्षविवरेषु, अन्तःप्रवेशिभिः अभ्यन्तरप्रविष्टैः, आयतैः दीर्घैः, एषां कराणां, कियदवयवैः किञ्चिदंशैः, [कर्त्तृभिः] उचित-मुचितम् अत्यन्तोचितं यथा स्यात् तथा, [अतिशय्ये द्विरुक्तिः] अङ्गुलीनां करशाखानाम्, ("अङ्गुल्यः करशाखाः स्युः" इत्यमरः) वल्गुता चारुता, आलिङ्गिता प्राप्ता इति श्लेषसङ्कीर्ण-निदर्शनाभेदः। कराणां कररूपत्वात् तदवयवानाम् अङ्गुलि-रूपत्वस्य सर्वथैव सम्भाव्यत्वादिति भावः ॥ ५३ ॥

नयेति।—भवनवलभीनां भवनप्रासादोपरि विद्यमानानां गृहविशेषाणां, ("शुद्धान्ते वलभी चन्द्र-शाले सौधोर्द्ध्ववेश्मनि" इति रभसः) जालात् गवाक्षविवरात्, गवाक्षविवरमाश्रित्ये-त्यर्थः, प्रविष्टवतीः अभ्यन्तरं गतवतीः, नालाः कमलदण्डान् इव स्थिताः, कमलकाण्डायिताः इत्यर्थः, अमूः पुरोवर्त्तिनीः, अर्कस्य भानोः, कराः किरणा एव करा हस्ताः, श्लिष्टरूपकम्; ("बलि-

भ्रमदणुगणक्रान्ता भान्ति भ्रमन्त्य इवाशु याः
पुनरपि धृताः कुन्दे किं वा न वर्द्धकिना दिवः ? ॥ ५४ ॥
दिनमिव दिवाकीर्त्तिस्तीक्ष्णैः क्षुरैः सवितुः करैः
तिमिरकवरीलूनीं कृत्वा निशां निरदीधरत्।

---

हस्तांशवः कराः" इत्यमरः) तेषाम् अङ्गुलीः करशाखाः, अङ्गुलीव प्रतीयमानानवयवानित्यर्थः, द्राक् झटिति, नयनयोः नेत्रयोः, पेयत्वम् आस्वाद्यत्वं, विषयत्वमित्यर्थः, नय प्रापय, सादरं पश्य इत्यर्थः। अथ आसां दर्शनीयतामुत्प्रेक्षया दर्शयति—याः कराङ्गुल्यः, भ्रमद्भिः घूर्णमानैः, अणुगणैः त्रसरेणुजालैः, क्रान्ताः वेष्टिताः सत्यः, आशु शीघ्रं, भ्रमन्त्यः घूर्णमाना इव, भान्ति प्रकाशन्ते इत्युत्प्रेक्षा; भ्रमणे कारणमुत्प्रेक्षते, पुनरपि पूर्ववत् अधुनाऽपि, दिवः स्वर्गस्य, वर्द्धकिना तक्ष्णा, देवशिल्पिना विश्वकर्मणा इत्यर्थः, ("तक्षा तु वर्द्धकिस्त्वष्टा" इत्यमरः) कुन्दे शाणयन्त्रे, ("शाणः कुन्दश्च यन्त्रकम्" इति यादवः) धृता वा तक्षणाय स्थापिताः इव, न किम् ? कराङ्गुल्य इति शेषः, अपि तु धृता एव इत्यर्थः, पुनः पुनः घर्षणेन तदुत्थैः सूक्ष्मसूक्ष्मांशैः घूर्णमानैरिव दृश्यन्ते, अतः भ्रमणं युज्यते इति भावः। पुरा किल स्वर्गे सञ्ज्ञादेव्या सूर्य्यभार्य्यया दुःसहस्पर्शं सवितारमालोक्य प्रार्थितः विश्वकर्मा तं शाणयन्त्रोल्लेखनेन सन्तक्ष्य सन्तक्ष्य सुखस्पर्शं चकारेति पौराणिकी कथाऽत्रानुसन्धेया ॥ ५४ ॥

दिनमिति।—दिनं दिवसः, [कर्त्तृ] रात्रौ क्षौरकर्मनिषेधात् दिवा कीर्त्तिर्यस्य स दिवाकीर्त्तिर्नापितः इव, ("क्षुरिमुण्ड-दिवाकीर्त्ति-नापितान्तावसायिनः" इत्यमरः) तीक्ष्णैः निशितैः प्रखरैश्च, सवितुः सूर्य्यस्य, करैः किरणरूपैः, क्षुरैः वापनशस्त्रैः, ("क्षुरोऽस्य वापनं शस्त्रम्" इति यादवः) निशां रात्रिं, व्यभि-

स्फुरति परित: केशस्तोमैस्तत: पतयालुभि:
ध्रुवमधवलं तत्तच्छायच्छलादवनीतलम् ॥ ५५ ॥
ब्रूम: शङ्खं तव नल! यश: श्रेयसे सृष्टशब्दं
यत्सोदर्य्य: स दिवि लिखित: स्पष्टमस्ति द्विजेन्द्र:।

चारिणीं रात्रीमितीति भाव:, तिमिरम् अन्धकार:, कबरी केशपाश: इव, सा लूना छिन्ना यस्या: तां मुण्डितकेशीं, [“जानपद—” इत्यादिना कबरात् ङीष्, “जातिकालसुखादिभ्य: परा निष्ठा वाच्या” इति लूनेति निष्ठाया: परनिपात:, “ल्वादिभ्यश्च” इति निष्ठा-नत्वं, “बहुव्रीहेश्चान्तोदात्तात्” इति ङीष्] कृत्वा विधाय, निरदीधरत् निष्कासयामास, इवेति शेष:, इत्युत्प्रेक्षा, [धरतेर्णौ चङ्युपधाया ह्रस्व:] तत: निर्द्धारणानन्तरं, तेषां तेषां गृहादीनां, छाया अनातप: तत्तच्छायं, [“विभाषा सेना—” इत्यादिना “छाया बाहुल्ये” इत्यनेन वा नपुंसकत्वम्] तस्य छलात् व्याजादित्यपह्नव:, परित: समन्तात्, पतयालुभि: पतनशीलै:, [“स्पृहिगृहि—”इत्यादिना आलुच्] केशस्तोमै: चिकुर-राशिभि:, अवनीतलं भूतलम्, अधवलम् असितं, स्फुरति भाति, ध्रुवं निश्चितमित्युत्प्रेक्षायाम् ॥ ५५ ॥

ब्रूम इति।— नल! हे तदाख्यमहाराज! तव ते, यश: कीर्त्ति:, श्रेयसे मङ्गलाय, सृष्टशब्दं सृष्ट: निर्मित:, कल्पित: इत्यर्थ:, शब्दो ध्वनि: यस्य तादृशं देवार्चनाशुभजातकर्मादौ विहितस्वनं, शङ्खं कम्बुं, शङ्खतुल्यमित्यर्थ:, ब्रूम: कथयाम:, वर्णयाम इति शेष:, शङ्खध्वने: मङ्गलजनकत्वात् पुण्यश्लोकत्वेन नलयशसश्च लोकानां शुभावहत्वात् उभयोरपि समानधावल्या-च्चेति भाव:; यद्वा—श्रेयसे स्वर्गाय, सृष्ट: शब्द: यस्य तं तादृशं, शङ्खं कम्बुं, यश: ब्रूम: त्वदीययशस्त्वेन वर्णयाम:

यद्वा अश्रद्धाकरमिह करच्छेदमप्यस्य पश्य
म्लानिस्थानं तदपि नितरां हारिणो य: कलङ्क: ॥ ५६ ॥

इत्यर्थ:, यस्य यशस:, सोदर्य्य: समानम् उदरं यस्य स: तादृश: सहोदर: भ्राता, शङ्खचन्द्रयोरुभयोरपि एकसमुद्र-जत्वादिति शौक्ल्यात् सदृश इति वा भाव:, [समानोदरे शयित: इत्यस्मिन्नर्थे "सोदरात् य:" इत्यनेन य-प्रत्यये विवक्षिते "विभाषोदरे" इत्यनेन प्रागेव य-प्रत्ययात् समानशब्दस्य स-भाव:] सदृशत्वाभिमानी इति फलितार्थ:, स प्रसिद्ध:, द्विजेन्द्र: चन्द्र:, दिवि गगने, लिखित: चित्रित:, किरणक्षयेण निष्प्रभत्वात् निष्क्रियत्वाच्च चित्रितवदिति भाव:; स्पष्टं सुव्यक्तम्, अस्ति वर्त्तते, इह अधुना प्रभातकाले, अश्रद्धाकरम् अनादरावहं, प्रभाक्षयादेव इति भाव:, यद्वा—श्रद्धाकरं प्रत्यक्षत्वेन विश्वासावहम्, अस्य चन्द्रस्य, अद्धा तत्त्वत:, सूर्य्यतेजसा अभिहतत्वात् यथार्थमित्यर्थ:, करच्छेदम् अंशुनाशम् अपि, पश्य अवलोकय, किञ्च, हारिणो हरिणात्मक:, य: कलङ्क: चिह्नविशेष:, अत्र विद्यते इति शेष:, तदपि तच्चिह्न-मपि, नितराम् अत्यर्थं, म्लाने: मलिनताया:, स्थानम् आस्पदं, विलुप्तप्रभत्वादिति भाव:, पश्येति पूर्व्वेणान्वय:, अत: शीघ्रं शयनं त्यजेति भाव: । अन्यच्च—श्रेयसे धर्म्मोपदेशरूपमङ्गलाय, स्पष्टशब्दं रचितस्मृतिग्रन्थं, शङ्खं शङ्खाख्यं मुनिं, तव यश: यशस्तुल्यं यशस्विनमित्यर्थ:, यद्वा—शङ्खं, तव यश:श्रेयसे कीर्त्त्युत्कर्षरूपमङ्गलायेत्यर्थ:, तद्रचितविधानानुसारेण कर्म्मानु-ष्ठानात् यशोवृद्धेरिति भाव:, स्पष्टशब्दं ब्रूम: कथयाम:, यस्य शङ्खस्य, सोदर्य्य: भ्राता, स प्रसिद्ध:, द्विजेन्द्र: ब्राह्मणोत्तम:, लिखित: लिखिताख्य: मुनि:, दिवि स्वर्गे, स्पष्टं सर्व्वैर्ज्ञातत्वात्

ताराशङ्खविलोपकस्य जलजं तीक्ष्णत्विषो भिन्दतः
सारम्भं चलता करेण निविड़ां निष्पीडनां लम्भितः ।
छेदार्थोपहृताम्बुकम्बुजरजोजम्बालपाण्डूभव-
च्छङ्खच्छिल्लकरपत्रतामिह वहत्यस्तंगतार्द्धो विधुः ॥ ५७ ॥

सुव्यक्तम्, अस्ति विद्यते, इति अद्धा सत्यम् ; किञ्च, इह अस्मिन् शङ्खलिखितयोश्चरितविषये, श्रद्धाकरं विश्वासजनकम्, अस्य लिखितस्य, करच्छेद हस्तच्छेदनम् अपि, चौर्य्यापराधेन राजाज्ञया इति भावः, पश्य अवलोकय, विवेचयेत्यर्थः, पुराणोक्तत्वादिति भावः, हारिणः ज्येष्ठस्य भ्रातुः शङ्खमुनेः आश्रमे फलापहारकस्य, लिखितस्य इति शेषः, यः कलङ्कः सहोदराश्रमे फलचौर्य्यरूपः अपवादः, तदपि नितराम् अत्यर्थं, म्लानेः विषादस्य, स्थानं कारणं, जानीहि इति शेषः । अत्र महाभारतीयशान्तिपर्वणि सुद्युम्नोपाख्याने—"ततः स पृथिवीपालो लिखितस्य महात्मनः । करौ प्रच्छेदयामास धृतदण्डो जगाम सः ॥" इति । अत्र विशेषणविशेष्ययोरपि श्लिष्टत्वादभिधायाः प्रकृतार्थत्वात् अप्रकृतार्थध्वनिरेवेति सङ्क्षेपः । मन्दाक्रान्ता वृत्तम् ॥ ५६ ॥

तारेति ।—ताराः तारकाः एव, शङ्खाः कम्बवः, दिनोदयेन ताराणां शुभ्रत्वेन प्रतीयमानत्वादिति भावः, तेषां विलोपकस्य विनाशकस्य, अन्तर्द्धायकस्येत्यर्थः, कटकस्य च, तथा जलजं पद्मं शङ्खञ्च, ("जलजं शङ्खपद्मयोः" इति विश्वः) भिन्दतः विदारयतः, प्रस्फोटयत इत्यर्थः, करभूषणनिर्माणार्थं सच्छिद्रं कुर्वतश्च, तीक्ष्णत्विषः तिग्मांशोः, तीक्ष्णास्त्रधरस्य कस्यचित् शङ्खकारस्य च, सारम्भं सप्रयत्नं, चलता प्रसरता, छेदनकर्मणि व्यापृतत्वात् पुरः पश्चाच्च पुनः पुनः गतागतं

यत्पाथोजविमुद्रणप्रकरणे निर्निद्रयत्यंशुमान्
दृष्टीः पूरयति स्म यज्जलरुहामक्ष्णा सहस्रं हरिः ।

कुर्वता इत्यर्थश्च, करेण किरणेन हस्तेन च, निविड़ां प्रगाढ़ां, निष्पीड़नां बाधनां धारणाञ्च, लम्भितः प्रापितः, अस्तम् अदर्शनं, गतं प्राप्तम्, अर्द्धम् एकांशः यस्य सः तादृशः, विधुः चन्द्रः, इह अस्मिन् अर्द्धास्तमितसमये, छेदार्थं कर्त्तनार्थं, तारकारूप-शङ्खच्छेदनसौकर्य्यसिद्ध्यै इत्यर्थः, उपहृतम् अर्पितं, यत् अम्बु जलं, शङ्खच्छेदनसौकर्य्याय जलं दीयते शाङ्खिकैरिति व्यवहारात्, तेन सह कम्बुजं छिद्यमानात् शङ्खात् जातं, यत् रजः करपत्रघर्षण-निपतितं चूर्णं, तस्य यः जम्बालः कर्दमः, रजोराशौ जल-निक्षेपेण कर्दमताया अवश्यम्भावादिति भावः, तेन पाण्डुभवत् शुभ्रीभवत्, यत् शङ्खं छिनत्तीति शङ्खच्छित् शङ्खच्छेदकं, करपत्रं क्रकचः, ("क्रकचोऽस्त्री करपत्रम्" इत्यमरः) तस्य भावः तत्तां, वहति धारयति, इवेति शेषः, इत्युत्प्रेक्षा ; शङ्खच्छेदक-करपत्रस्य अर्द्धचन्द्राकारत्वात् अर्द्धास्तमितः चन्द्रः शङ्ख-च्छेदककरपत्रमिव दृश्यते इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ५७ ॥

यदिति ।—यत् यस्मात्, अंशुमान् अर्कः, पाथोजविमुद्रण-प्रकरणे पद्मविकासकरणप्रस्तावे, दृष्टीः दृशः, जननेत्राणि इति यावत्, निर्निद्रयति निः नास्ति, निद्रा स्वापः, निद्राकालिक-निमीलनमित्यर्थः, यासु तास्तादृशीः करोति उन्मीलयतीत्यर्थः, तथा यत् यस्माच्च, हरिः विष्णुः, जलरुहां कमलानां, शिवपूजाऽर्थमानीतानामिति भावः, सहस्रं सहस्रसङ्ख्याम्, अक्ष्णा स्वनेत्रेण, पूरयति स्म पूर्णं चकार, एकोनत्वादिति भावः, यदुक्तं शिवमहिम्नः स्तोत्रे—"हरिस्ते साहस्रं कमलबलिमाधाय

साजात्यं सरसीरुहामपि दृशामप्यस्ति तद्वास्तवं
यन्मूलाऽऽद्रियतेतरां कविकुलैः पद्मोपमा चक्षुषः ॥५८॥
अवैमि कमलाकरे निखिलयामिनीयामिक-
श्रियं श्रयति यत् पुरा विततपत्रनेत्रोदरम् ।

---

पदयोः यदेकोने तस्मिन् निजमुदहरन्नेत्रकमलम्" इति ; तत् तस्मात्, सरसीरुहामपि कमलानाञ्च, दृशामपि नयनानाञ्च, वास्तवं पारमार्थिकं, साजात्यं समानजातीयत्वम्, अस्ति विद्यते, यतः हरिसूर्य्याभ्यां परमात्माभ्यां तत्तत् कार्य्यमकारि अतः पद्मचक्षुषोः साजात्ये सन्देह एव नास्ति, अन्यथा पद्मोल्लास-प्रकरणबाधाद्विजातीयेन त्रपुषा कनकसङ्ख्यापूरणवत् चक्षुषा कमलसङ्ख्यापूरणायोगाच्चेति भावः ; कविकुलैः कविभिः, यत् साजात्यं, मूलं हेतुः यस्याः सा तादृशी, चक्षुषः नयनस्य, पद्मैः कमलैः सह, उपमा औपम्यम्, आद्रियतेतरां सत्क्रियतेतराम्, अत्यर्थमाद्रियते इत्यर्थः, [ "किमेत्तिङव्ययात्—" इति आमु-प्रत्ययः ] वैजात्येन सदृशुनोरपि सुवर्णरजतयो-रुपमाऽयोगादिति भावः । सर्वे एव लोकाः अजागरुः, अतः त्वमपि जागृहि इति वक्तुराशयः ॥ ५८ ॥

अवैमीति।—यत् कुमुदं, [ कर्त्तृ ] पुरा इतः पूर्वं, कमलाकरे पद्माकरे सरसि, कमलायाः पद्मालयायाः लक्ष्म्याः, धनसम्पत्ति-रूपायाः इति यावत्, आकरे वसतिस्थाने कोषागारे च, विततानि विस्तृतानि, पत्राणि दलानि एव, नेत्रोदराणि नयनमध्यानि यस्य तत् तादृशं सत्, निखिलायां समग्रायां, यामिन्यां रजन्यां, यामिकः प्राहरिकः, प्रहरिरूपेण जागरूक इत्यर्थः, तस्य श्रियम् इव श्रियं शोभां, सादृश्यमित्यर्थः, इति सादृश्याक्षेपान्निदर्शनाभेदः, श्रयति भजते स्म, [ "पुरि लुङ्

तदेव कुमुदं पुनर्दिनमवाप्य गर्भभ्रम-
द्विरेफरवघोरणाघनमुपैति निद्रामुदम् ॥ ५९ ॥
इह किमुषसि पृच्छाशंसिकिंशब्दरूप-
प्रतिनियमितवाचा वायसेनैष पृष्ट: ।
भण फणिभवशास्त्रे तातङ: स्थानिनौ का-
विति विहिततुहीवागुत्तर: कोकिलोऽभूत् ? ॥ ६० ॥

---

चास्मे" इति चकाराद्भूते लट् ] तदेव उक्तरूपमेव, कुमुदं कैरवं, पुन: इदानीं, दिनं दिवसम्, अवाप्य प्राप्य, गर्भे अभ्यन्तरे, भ्रमतां घूर्णमानानां, द्विरेफाणां भ्रमराणां, प्रात:काले कुमुदानां मुद्रणात् तदन्तरावद्धानामिति भाव:, रव: शब्द एव, घोरणा निद्रितस्य घर्घरशब्दाधिक्यं, नासागर्जनमिति भाव:, [ घुर भीमार्थशब्दयो: इति तौदादिकाद्भावे ल्युट् ] तस्या: घनं गाढं यथा तथा, निद्रामुदं निद्रा निमीलनं स्वप्नश्च, तस्या: मुदं सुखम्, उपैति लभते, अवैमि इति मन्ये, इत्युत्प्रेक्षायाम् । रात्रौ जागरितो हि दिवा निद्रातीति दृश्यते । अत्र एकस्मिन् कुमुदे अनेकयोर्निद्राजागरयो: क्रमेण प्रत्यभिधानात् "एकस्मिन्नथवाऽनेकम्" इत्युक्तलक्षणपर्य्यायालङ्कारेण पूर्वोक्तनिदर्शना सङ्कीर्णा । पृथ्वीवृत्तं—"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरु:" इति लक्षणात् ॥ ५९ ॥

इहेति ।—इह अस्मिन्, उषसि प्रभाते, पृच्छां प्रश्नं, शंसति सूचयतीति पृच्छाशंसी प्रश्नवाचक:, ( "प्रश्नोऽनुयोग: पृच्छा च" इत्यमर: ) तादृशस्य किंशब्दस्य किमिति सर्वनामपदस्य, रूपे रूपविशेषे, कौ इति प्रथमाद्विवचनान्तपदनिष्पत्तौ, प्रतिनियमिता सदैव निर्दिष्टा, वाक् वाक्यं यस्य तादृशेन, काविति व्यक्तवाक्येनेत्यर्थ:, वायसेन काकेन, फणिन: शेषात्, भवे उत्पन्ने,

दाक्षीपुत्रस्य तन्त्रे ध्रुवमयमभवत् कोऽप्यधीती कपोतः
कण्ठे शब्दौघसिद्धिक्षतबहुकठिनोशेषभूषाऽनुयातः ।

शेषप्रणोते इत्यर्थः, शास्त्रे पाणिनीये महाभाष्ये, तातङ्स्तातङा-देशस्य, स्थानिनौ आदेशिनौ, कौ ? किंशब्दौ ?, भण ब्रूहि, इति एवं, पृष्टः जिज्ञासितः, इवेति शेषः, एषः पुरतो वृक्ष-शाखायामुपविष्टः इत्यर्थः, कोकिलः पिकः, विहितं प्रयुक्तं, तुह्यो तुश्च हिश्च तुही इति, वाक् निजध्वनिरेव, उत्तरं प्रतिवचनं येन सः तादृशः, अभूत् अजनि, किम् ? "तुह्योस्तातङ् आशिष्यन्यतरस्याम्" इति पाणिनिसूत्रे तुह्योः स्थाने तातङ् विधीयते ; प्रातः काकः कौ इति शब्देन तातङः स्थानिनौ कौ इति पृच्छति किम् ? कोकिलश्च तुही इति शब्देन तस्य उत्तरं ददाति किम् ? इत्यर्थः, पक्षिप्रभृतीनामव्यक्तध्वनौ यस्य चेतसि यदुदेति स तथैव मनःकल्पितं प्रकाशयति, एवञ्च कविरयं तदा काकध्वनिं "कौ" इति कोकिलध्वनिञ्च "तुही" इति कल्पयित्वा काविति तुहीति च काककोकिलकूजितेन पूर्वोक्तप्रश्नोत्तरत्व-मुत्प्रेक्षते । प्रभातं जातं काकादयः पक्षिणः कूजन्तीति भावः ॥ ६० ॥

दाक्षीति ।—अयं परिदृश्यमानः, कः अपि अपरिज्ञात-पूर्ववृत्तान्त इत्यर्थः, कपोतः पारावतः, दाक्षीपुत्रस्य दक्षगोत्र-सञ्जातमातृकस्य दाक्षीनामकमातृगर्भजातस्य वा पाणिनेः, [ दक्षस्यापत्यम् "अत इञ्" इति इञि "इतो मनुष्यजातेः" इति ङीष् ] तन्त्रे शास्त्रे व्याकरणे, ध्रुवं निश्चितमेव, अधीतम् अध्ययनम् अस्य अस्तीति अधीती दाक्षीपुत्रतन्त्राध्ययन-कारी इत्यर्थः, [ "इष्टादिभ्यश्च" इतीनि-प्रत्ययः "क्तस्येन्-विषयस्य कर्मण्युपसङ्ख्यानम्" इति सप्तमी ] अभवत् अजायत,

सर्वं विस्मृत्य दैवात् स्मृतिमुषसि गतां घोषयन् यो घुसंज्ञां
प्राक्संस्कारेण सम्प्रत्यपि धुवति शिर: पट्टिकापाठनेन ॥६१॥
पौरस्त्यायां घुसृणसुमन:श्रीजुषो वैजयन्त्या:
लोकैश्चित्तं हरति हरिति श्रीरकण्ठैर्मयूखै:।
भानुर्जाम्बूनदरुचिरसौ शक्रसौधस्य कुम्भ:
स्थाने पानं तिमिरजलधेर्भाभिरंतद्ववाभि: ॥ ६२ ॥

य: कपोत:, कण्ठे निजगलदेशे, शब्दौघेषु "राम: रामौ रामा:" इत्यादि प्रातिपदिकसमूहेषु, सिद्धैश शिचालाभार्थं, चता प्रस्तर-फलकादौ पुन: पुन: लिखनेन चयं प्राप्ता, बह्वी प्रभूता, या कठिनी खटी, ("कठिनी खटिकायामपि" इति मेदिनी) तस्या: शेष: अवशिष्टांश:, स: एव भूषा आभरणं, तयाऽनुयात: अन्वित:, रूपित: सन् इत्यर्थ:, इति शेष:, खटिकाचूर्णशेष-रेखया कण्ठे अनुरञ्जित: सन्निवेत्यर्थ:, कपोतविशेषस्य कण्ठे धवलरेखा भवति, तत्र खटिकाचूर्णानुरञ्जनत्वाध्यवसायो बोध्य: ; सर्वम् अधीतं समस्तशास्त्रं, विस्मृत्य तिर्य्यग्योनि: सम्बन्धात् विस्मृतो भूत्वा, पट्टिकापाठनेन पट्टिकायां प्रस्तर-फलकादौ, पाठनेन लिखितविषयस्य अध्यापनाजनितेन, प्राक्-संस्कारेण पूर्वतनवासनया, पूर्वाभ्यासवशेनेत्यर्थ:, दैवात् सहसा, स्मृतिं स्मरणविषयतां, गतां प्राप्तां, घुसंज्ञां "दाधा घ्वदाप्" इति सूत्रोक्तां घु इति संज्ञां, घोषयन् "घु" "घु" इति शब्देन उच्चै: उच्चारयन्, सम्प्रति अधुनाऽपि, उषसि प्रात:-काले, शिर: मस्तकं, धुवति कम्पयति, इत्युत्प्रेक्षा। लोकेऽपि दृश्यते यत् कश्चित् विस्मृतस्य कस्यचित् विषयस्य स्मरणकाले मस्तकं कम्पयतीति ॥ ६१ ॥

पौरस्त्यायामिति।—जाम्बूनदरुचि: उदयरागात् कनक-

द्वित्रैरेव तमस्तमालगहनग्रासे दवीभावुकै-
रुस्रैरस्य सहस्रपत्रसदसि व्यग्राणि पञ्चोत्सवः ।

कान्तिः, अत एव शक्रसौधस्य पूर्वदिगवस्थितस्य इन्द्रप्रासादस्य वैजयन्तस्य, कुम्भः सौधाग्रवर्त्तिकनककलशरूपः इति रूपकम् ; असौ परिदृश्यमानः, भानुः सूर्य्यः, पुरो भवायां पौरस्त्यायां प्राच्यां, [ "दक्षिणापश्चात्पुरसस्त्यक्" तति त्यक्, "किति च" इति वृद्धिः ] हरिति दिशि, घुसृणस्य कुङ्कुमस्य, सुमनसां पुष्पाणां, या श्रीः शोभा, तज्जुषः तत्सेविन्याः, रक्तवर्णायाः इत्यर्थः, वैजयन्त्याः पताकायाः, तोकैः अपत्यैः, पताकाया अपत्यसदृशैरित्यर्थः, ( "अपत्यं तोकं तयोः समे" इत्यमरः ) क्षीरकण्ठैः दुग्धपायिभिः बालैः, मयूखैः किरणैः, चित्तं मनः, हरति मुष्णाति, मनोहरः भवतीत्यर्थः । किञ्च एतस्मात् कुम्भरूपात् भानोः, भवति जायते इति ताभिः एतद्भवाभिः कुम्भोत्पन्नाभिः, भाभिः प्रभाभिः, तिमिरजलधेः अन्धकार-समुद्रस्य, पानं चुलुकीकरणं, विनाशनमिति यावत्, [ "उभय-प्राप्तौ कर्मणि" इति कर्मणि षष्ठी ] स्थाने युक्तं, ( "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः ) कुम्भसम्भवः अगस्त्यः यथा चुलुकेन जलधिं पपौ, तथा अपरस्यापि कुम्भसम्भवस्य जलधिपानमुचित-मेवेति भावः । रूपकालङ्कारः ॥ ६२ ॥

द्वित्रैरिति ।—तमः अन्धकारः एव, तमालगहनं तुल्यवर्ण-त्वात् तमालाख्यवृक्षाणां गभीरं वनं, तस्य ग्रासे गिलने, दूरीकरणे इत्यर्थः, दवीभावुकैः आरण्यवह्नीभवद्भिः, ["दवदावौ वनारण्यवह्नी" इत्यमरः । अभूततद्भावे च्विः, "अस्य च्वौ" इतीकारः । "लषपत—" इत्यादिना उकञ्-प्रत्ययः ] अस्य निदाघद्युतेः, द्वौ वा त्रयः वा द्वित्राः, [ "सङ्ख्ययाऽव्यय—"

घर्माणां रयचुम्बितं वितनुते तत् पिष्टपिष्टीकृत-
क्ष्मादिग्व्योमतमोऽघमोघमधुना मोघं निदाघद्युतिः ॥ ६१॥
दूरारूढ़स्तिमिरजलधेर्वाड़वाग्निश्चभानु-
र्भानुस्ताम्यद्दनकद्दवनीकेलिवेश्माथिकोऽयम् ।

---

इत्यादिना बहुव्रीहिः, "बहुव्रीहौ सङ्ख्येये—"इति डच्समा-सान्तः ] तैरेव द्वित्रिसङ्ख्यकमात्रैरेव, उस्रैः करैः, [ कर्त्तृभिः ] सहस्रपत्रसदसि कमलसभायां, पद्मसमूहे इत्यर्थः, यस्मात् घस्रोत्सवः दिनानन्दः, विकाशप्राप्तिजन्यमानन्दानुष्ठानमित्यर्थः, व्यश्राणि विश्राणितः, प्रदत्तः इत्यर्थः, [ श्रण दाने इत्यस्य कर्मणि चिण् ] तत् तस्मात्, द्वित्रिसङ्ख्यककिरणैरेव सर्वकार्य्यसाधनात् हेतोरित्यर्थः, निदाघद्युतिः सूर्य्यः, पिष्टपिष्टीकृतं पिष्टस्य चूर्णीकृततण्डुलादेः, पिष्टीकृतं पुनःपेषणवत्कृतं, द्वित्रैरेव मयूखैः अन्धकारं दूरीकृतमपि पुनः मयूखान्तरैः अत्यर्थं दूरीकृतमित्यर्थः, क्ष्मादिग्व्योमतमः पृथिवीककुभ्गगनानाम् अन्धकारमेव, अघं पाप, मालिन्यावहत्वादिति भावः, येन तादृशं, ("पापं किल्बिष-कल्मषम्। कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम्" इत्यमरः) रयचुम्बितं वेगव्याप्तं, वेगेन प्रसरणशीलमित्यर्थः, घर्माणाम् आतपानाम्, ओघं समूहम्, अधुना प्रातः, मोघं व्यर्थम् एव, वितनुते विस्तारयति, करोतीत्यर्थः, घनान्धकारनाशस्य कमल-विकाशस्य च प्राभातिकैः द्वित्रैरेव किरणैः कृतत्वात् किरणसमूह-विकीरणं सूर्य्यस्य पिष्टपेषणवत् निष्प्रयोजनमिति भावः ॥६३॥

दूरेति।—तिमिरजलधेः तमःसमुद्रस्य, असीमत्वकृष्ण-वर्णत्वसादृश्यादिति भावः, बाड़वः समुद्रगर्भस्थाग्निमुखोत्थितः, चित्रभानुः अनलः, बड़वाग्निरूप इत्यर्थः, तिमिरसंहर्त्ता इति यावत्, तथा ताम्यन्त्याः क्लिश्यन्त्याः, पतिविच्छेदेन

अनन्यसाक्षिका: साक्षात् तत् व्याख्याय रह:क्रिया:।
शङ्काऽऽतङ्कं नुदैतस्या यदि त्वं तत्त्वनैषध: ॥ ७२ ॥
इति तत्सुप्रयुक्तार्थां निह्नुतीकृतकैतवाम्।
वाचमाकर्ण्य तद्भावे संशयालु: शशंस स: ॥ ७३ ॥

---

वैदर्भी दमयन्ती, दम्भोलि: वज्रायुधं वज्ररेखाञ्च, परिरभते धारयतीति तस्मात् वज्रायुधधरात् वज्रचिह्नविशिष्टाच्च, कराम्भोजात् पाणिकमलात् हेतो:, कराम्भोजं दृष्ट्वा इत्यर्थ:, तव ते, जम्भारित्वम् इन्द्रत्वं, सम्भावयति तर्कयति, "वज्रहस्त: पुरन्दर:" इति श्रुते: तथा नलस्य पाणितले वज्रादिविविध-सार्वभौमलक्षणस्यावस्थानादिति भाव: ॥ ७१ ॥

अनन्येति।—हे राजन्! त्वं भवान्, यदि चेत्, तत्त्वनैषध: परमार्थनल:, असीति शेष:, तत् तर्हि, अनन्यसाक्षिका: नास्ति अन्ये स्वेतरा:, साक्षिण: प्रत्यक्षदर्शिन: यासां तादृशी: स्वमात्र-संवेद्या:, रह:क्रिया: चुम्बनालिङ्गनादिरूपरहस्यव्यापारान्, साक्षात् अस्या: समक्षं स्वयमेव, व्याख्याय उक्त्वा, एतस्या: वैदर्भ्या:, शङ्काया: इन्द्रत्वसन्देहस्य, आतङ्कं भयं, नुद निवर्त्तय, यान् यान् गुप्तव्यापारान् केवलं युवामेव जानीथ:, न पुनरन्येषां केषाञ्चिदपि तज्ज्ञानसम्भावना, ईदृशान् व्यापारान् यदि त्वं वक्तुं शक्नोषि, तदैव एषा त्वां नलत्वेन अवधारयिष्यति नान्यथा इति भाव: ॥ ७२ ॥

इतीति।—इति इत्थं, तया कलया, सुप्रयुक्तार्थां सुप्रयुक्त: स्वर्गगमन स्वर्णपद्मदान-वज्रधारणादिजन्यसन्देहस्य निरसनाय यथाकालं सम्यगुपन्यस्त:, अर्थ: अभिधेय: यस्या: तादृशीं, "सुप्रयुक्तात्व" इति पाठे—सुप्रयुक्तात्वेन युक्तियुक्तरूपेण प्रयोगेण, निह्नुतीकृतकैतवां निह्नुतीकृतं कैतवद्योतकहास्यादिविकार-

स्मरसि छद्मनिद्रालुर्मया नाभौ शयार्पणात्।
यदानन्दोच्चलल्लोमा पद्मनाभीभविष्यसि? ॥ ७४ ॥
जानासि ह्रीभयव्यग्रा यन्नवे मन्मथोत्सवे।
सामिभुक्तैव मुक्ताऽसि सुदति! खेदभयान्मया? ॥ ७५ ॥

राहित्येन गोपायितं, कैतवं छलं यत्र तादृशीम्, अप्रकाशीकृत-निगूढाभिप्रायां, वाचं वाक्यम्, आकर्ण्य श्रुत्वा, सः नलः, तस्याः भैम्याः, भावे अभिप्राये, संशयालुः किमियं सत्यमेव मामिन्द्रमाशङ्क्य चुम्बनादिकं न करोति इति सन्दिहानः सन्, प्रश्नं कथयामास, संशयोच्छेदकरहस्यवाक्यममूदम् उवाच इत्यर्थः; एतेन नलायाः वचनचातुर्य्येण राज्ञः पराजयः सूचित इति बोद्धव्यम् ॥ ७३ ॥

अथैतदेव विंशत्याः श्लोकैः प्रपञ्चेनाह, स्मरसीत्यादि।—हे प्रिये। छद्मना कपटेन, निद्रालुः सुप्ता, ["स्पृहिगृहि—" इत्यादिना निपूर्वात् द्रातेरालुच्] त्वमिति शेषः, मया नलेन, नाभौ तव नाभिदेशे, शयस्य पाणेः, अर्पणात् स्थापनात्, नीवीग्रन्थिमोचनार्थमिति भावः, आनन्देन स्पर्शसुखेन, उच्चल-ल्लोमा प्रहृष्यद्रोमा सती, रोमाञ्चितगात्री सतीत्यर्थः, यत् पद्मं नाभौ यस्याः सा पद्मनाभिः अपद्मनाभिः पद्मनाभिर्भविष्यसीति पद्मनाभीभविष्यसि पद्मनाभितुल्या सञ्जाताऽसि इत्यर्थः, मम पाणेः पद्मतुल्यत्वात् तव रोमाञ्चानाञ्च पद्मस्य कण्टकतुल्य-त्वादिति भावः। पद्मनाभः विष्णुश्च सः अपि छद्मनिद्रालुः इति बोध्यम्। ["अच् प्रत्यन्ववपूर्वात्—" इत्यादिसूत्रे "अच्" इति योगविभागात् उभयत्रापि समासान्तोऽच्प्रत्ययः। अभूत-तद्भावे च्विः। "अभिज्ञावचने लृट्" इति भूतार्थे लृट्] तत्तु स्मरसि? तत् प्रत्यभिजानासि किम्? इति काकुः ॥ ७४ ॥

स्मर जित्वाऽऽजिमितस्त्वां करे मत्पदधाविनि।
अङ्गुलीयुगयोगेन यदाश्लिक्षं घने जने ॥ ७६ ॥

---

जानासीति।—सुदति! हे कोमलाङ्गि! अत एव अतिपीड़ाऽसहत्वात् खेदभयमिति भावः, नवे नूतने, मन्मथोत्सवे स्मरोल्लासे, प्रथमरतक्रीड़ायामित्यर्थः, ह्रीभयाभ्यां लज्जाऽऽतङ्काभ्यां, व्यग्रा विभ्रान्तचित्ता, त्वमिति शेषः, खेदः सुरतश्रमजनितक्लेशः, तद्भयात् तच्छङ्कातः, मया सामिभुक्तैव अर्द्धभुक्तैव, अर्द्धमात्रकृतसुरतैवेत्यर्थः, ("सामि त्वर्द्धे जुगुप्सिते" इत्यमरः) मुक्ताऽसि परित्यक्ता भवसि, तदन्यथा वैरस्यात् इति भावः; तदुक्तं रतिरहस्ये—"सहसा वाऽप्युपक्रान्ता कन्या खेदमविन्दत। भयाच्चित्तसमुद्वेगं सद्यो द्वेषञ्च गच्छति॥ सा प्रीतियोगमप्राप्य बलोद्वेगेन दूषिता। पुरुषद्वेषिणी वा स्यात् सुप्रीता वा ततोऽन्यथा॥" इति; तत् जानासि? स्मरसि किम्? इत्यर्थः॥ ७५॥

स्मरेति।—हे प्रिये! आजिं युद्धं, जित्वा विजित्य, त्वां भवतीं, त्वत्समीपमित्यर्थः, इतः समागतः, अहमिति शेषः, करे पाणौ, तवेति शेषः, मत्पदधाविनि मम चरणप्रक्षालनार्थं प्रवर्त्तमाने सति, मम चरणं स्पृष्टवति सतीत्यर्थः, घने बहुले, जने मद्दर्शनार्थं समागते लोके, बहुजनमध्ये इत्यर्थः, अङ्गुलियुगयोगेन मम पादाङ्गुलीद्वयस्य, योगेन तव कराङ्गुली-द्वयस्य निविड़योजनया, मम पादाङ्गुलीद्वयेन तव कराङ्गुलेः अगाढ़निपीड़नेनेत्यर्थः, यत् आश्लिक्षम् आश्लिष्टवान् अस्मि, ["श्लिष आलिङ्गने" इति लुङि उत्तमैकवचने च्लेः क्सः "विभाषा साकाङ्क्षे" इति वैकल्पिकत्वात् लृड़भावः] तत् स्मर चिन्तय॥ ७६॥

वेत्थ मानेऽपि मत्त्याग-दूना स्वं माञ्च तन्मिथः ।
मद्दृष्टाऽऽलिख्य पश्यन्ती व्यवधा रेखयाऽन्तरा ? ॥ ७७ ॥
प्रस्मृत तत् त्वया तावत् यन्मोहनविमोहितः ।
अतृप्तोऽधरपानेषु रसनामपिबं तव ? ॥ ७८ ॥
त्वत्कुचार्द्रनखाङ्कस्य मुद्रामालिङ्गनोत्थिताम् ।
स्मरः स्वहृदि यत् स्मेरः सखीं शिल्पं तवाब्रुवम् ? ॥७९॥

वेत्थेति ।—हे प्रिये ! माने प्रणयकोपेऽपि, मत्त्यागदूना मद्विरहतप्ता, त्वमिति शेषः, मिथः रहसि, ( "मिथोऽन्योन्यं रहस्यपि" इत्यमरः ) स्वम् आत्मानं, मां नलञ्च, आलिख्य चित्रे लिखित्वा, पश्यन्ती अवलोकयन्ती, तदालेख्यमिति शेषः, मद्दृष्टा मया त्वया आलेख्याङ्कितेन मया नलेन वीक्षिता सती, अन्तरा लिखितयोरावयोर्मध्ये, रेखया तुलिकया नूतनरेखाङ्कनेन, मद्दर्शनप्रतिरोधार्थमिति भावः, यत् व्यवधाः व्यवधानं कृतवती असि, व्यवधानं विधाय तत्रापि कोपः प्रकटितः इति भावः, [ व्यवपूर्वाद्धधातेर्लुङ् सिपि "गास्था—" इत्यादिना सिचो लुक् ] तत् वेत्थ ? स्मरसि किम् ? इति काकुः ॥ ७७ ॥

प्रस्मृतमिति ।—हे प्रिये ! मोहने सुरते, विमोहितः विमुग्धचित्तः, अहमिति शेषः, तव ते, [ सम्बन्धसामान्ये षष्ठी, "पूरण—" इत्यादिना षष्ठीसमासनिषेधज्ञापनात् षष्ठीति केचित् ] अधरपानेषु अधरास्वादनेषु, चुम्बनेषु कृतेष्वपि इत्यर्थः, अतृप्तः तावन्मात्रेण अपूर्णाकाङ्क्षः सन्, यत् रसनां जिह्वाम्, अपिबम् आस्वादितवानास्मि, तत्, तावत् साकल्येन, त्वया भवत्या, प्रस्मृतम् ? चिन्तितं किम् ? इति काकुः ॥ ७८ ॥

त्वदिति ।—हे प्रिये ! स्वस्य आत्मनः, मम नलस्य इत्यर्थः, हृदि वक्षसि, आलिङ्गनेन आश्लेषेण, उत्थिताम् उत्पन्नां, सञ्जा-

त्वयाऽन्याः क्रीडयन्मध्ये-मधुगोष्ठि रुषेक्षितः ।
वेत्सि तासां पुरो मूर्ध्ना त्वत्पादे यत् किलास्खलम् ? ॥८०॥
वेत्थ मय्यागते प्रोष्य यस्त्वां पश्यति हार्दिनि ।
अचुम्बीरालिमालिङ्ग्य तस्यां केलिमुदा किल ? ॥ ८१ ॥

---

त्वाम् इत्यर्थः, त्वत्कुचयोः तव स्तनयोः, आर्द्रनखाङ्कस्य सद्यः-क्षतनखरचतस्य, मत्कर्त्तृकस्येति भावः, मुद्रा रक्तवर्णचिह्नं, स्मेरः सस्मितः सन्, सखीं तव वयस्यां प्रति, तव ते, शिल्पं कारुकार्य्यं, शिल्पनिर्माणनैपुण्यमित्यर्थः, यत् अब्रुवम् अकथयं, तत् स्मरः ? चिन्तयेः ? ॥ ७९ ॥

त्वयेति।—हे प्रिये ! मधुगोष्ठ्या मद्यपानसभायाः मध्ये मध्येमधुगोष्ठि पानगोष्ठिमध्य इत्यर्थः, [ "पारे मध्ये षष्ठ्या वा" इत्यव्ययीभावः, "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वत्वम् ] अन्याः अपराः स्त्रियः, क्रीड़यन् नर्मव्यवहारेण विनोदयन्, अहमिति शेषः, त्वया भवत्या, रुषा रोषेण, ईक्षितः दृष्टः सन्, तासां स्त्रीणां, पुरः अग्रे एव, मूर्ध्ना शिरसा, त्वत्पादे तव चरणे, यत् किल अस्खलम् अपतं खलु, मद्यमत्तत्वात् स्खलनच्छलेन तव प्रसादनाय इति भावः, तत् वेत्सि ? स्मरसि किम् ? इति काकुः ॥ ८० ॥

वेत्थेति।—हे प्रिये ! हृदयस्य कर्म हार्दं प्रेम, ( "प्रेमा ना प्रियता हार्दम्" इत्यमरः ) हार्दिनि प्रियपात्रे. हार्दिनि ! इति दमयन्त्याः सम्बोधनं वा, हार्दिनि ! हे अनुरागिणि ! प्रोष्य प्रवासं गत्वा, आगते प्रत्यावृत्ते, मयि नले, त्वां भवतीं, पश्यति वीक्षमाणे सति, आलिं सखीम्, आलिङ्ग्य आश्लिष्य, केलिमुदा क्रीडाहर्षेण, तस्यां सख्यां, सख्याः गण्डदेशे इति यावत्, यत् किल इति अलीके, सख्यालिङ्गनचुम्बन-

जागर्त्ति तत्र संस्कारः स्वमुखाद्भवदानने।
निक्षिप्यायाचिषं यस्त्वां न्यायात्ताम्बूलफालिकाः ? ॥८२॥
चित्ते तदस्ति कच्चित्ते नखजं मयि यत् क्रुधा।
प्राग्भावाधिगमागःस्थे त्वया गम्भाक्कतं चतम् ? ॥ ८३ ॥

---

व्याजेनेत्यर्थः, अचुम्बीः चुम्बितवती, मामेव त्वमिति शेषः, सख्यालिङ्गनचुम्बनव्याजेन मां प्रति स्वप्रेमभरं यत् सूचितवती असि, तत् वेत्थ ? स्मरसि ? ॥ ८१ ॥

जागर्त्तीति।—हे प्रिये ! स्वमुखात् निजाननात्, भवदानने तव वदने, ताम्बूलफालिकाः नागवल्लीदलवल्लिकाः, वीटिकाखण्डानीत्यर्थः, चूर्णपूगफलादिसयुक्तस्य मचर्वितस्य पर्णस्य खण्डानीति यावत्, निक्षिप्य न्यस्य, त्वां भवतीं, "ताः" इति पाठे—ताः ताम्बूलफालिकाः, न्यायात् निक्षिप्तद्रव्यप्रत्यर्पणधर्मात्, निक्षिप्तं द्रव्यं निक्षेपकस्यैव प्रत्यर्पयितव्यमिति नीत्यनुसारादित्यर्थः, यत् अयाचिषं प्रार्थितवानास्म, अहमिति शेषः, तत्र याचने, संस्कारः नियतभावनाजनितस्मृतिविशेष इत्यर्थः, जागर्त्ति ? उत्पद्यते ? स्मरसि किम् ? इत्यर्थः इति काकुः ॥ ८२ ॥

चित्ते इति।—हे प्रिये ! मयि नले, प्राग्भावेन प्राक् पूर्वमेव, त्वत्त इति शेषः, भावस्य रेतःपतनकालिकहर्षस्य, अधिगमः लाभ एव, आगः अपराधः, तस्मिन् तिष्ठतीति आगःस्थः तादृशे, तादृशापराधेन अपराधिनि सति, तव सुखावाप्तिप्रतिबन्धकत्वादिति भावः, त्वया भवत्या, क्रुधा क्रोधेन, यत् नखजं नखरेण कृतं, चतं व्रणं, गम्भाक्कतं द्विगुणाकृतम्, आनुलोम्यप्रातिलोम्याभ्यां द्विवारकृष्टं चेत्रं गम्भाक्कतमुच्यते, [ "द्विगुणाकृते तु सर्वं द्विपूर्वं शम्बाकृतमपीह"

स्वदिग्विनिमयेनैव निशि पार्श्वविवर्त्तिनोः।
स्वप्नेष्वप्यस्तवैमुख्ये सख्ये सौख्यं स्मरावयोः॥ ८४॥
क्षणं प्राप्य सदस्येव नृणां विमनितेक्षणम्।
दर्शिताधरमद्दंशा स्मर यन्मामतर्जयः॥ ८५॥

---

इत्यमरः। "क्षञो द्वितीयतृतीयशम्बबीजात् कृषौ" इति डाच्-प्रत्ययः] तत् शम्बाकरणं, ते तव, चित्ते मनसि, अस्ति विद्यते कच्चित्? स्मरसि किम्?॥ ८३॥

स्वेति।—हे प्रिये! निशि रात्रौ, स्वदिशोः निजनिज-शयनस्थानयोः, विनिमयेनैव परिवर्त्तनेनैव, मम शयनस्थाने तवागमनेन तव शयनस्थाने मम गमनेन चेत्यर्थः, स्वस्थान-परिवर्त्तनं विना सम्मुखीनयोः शयने पार्श्वपरिवर्त्तने वैमुख्य-प्रसङ्गादिति भावः, पार्श्वयोः वामदक्षिणकुक्ष्योः विवर्त्तते शय्यालग्नपार्श्वपरिवर्त्तनेन शयाते यौ तादृशयोः पार्श्वपरि-वर्त्तनकारिणोः, आवयोः तव मम च, स्वप्नेषु स्वापकालेषु अपि, अस्तम् उक्तरीत्या निरस्तं, वैमुख्यं पाराङ्मुख्यं यत्र तादृशे, सख्ये मेलने, सौख्य सुखं, स्मर चिन्तय॥ ८४॥

क्षणमिति।—हे पिये! सदसि एव सभायामेव, सखी-भिरनुष्ठितनृत्यगीतादिसभायामेवेत्यर्थः, नृणां सखीजनानां, विमनितानि नृत्यगीतादिषु व्यासक्तचित्ततया द्रष्टव्यान्तरदर्शने विमुखीभूतानि इत्यर्थः, [विमनांसि कृतानि इति विमनस्-शब्दात्तत्करोति इति ण्यन्तादिष्ठवद्भावे टिलोपः, कर्मणि क्तः] ईक्षणानि लोचनानि यस्मिन् तादृशम्, अन्यत्रासक्तजन-दृष्टिप्रसरमित्यर्थः, क्षणम् अवसरं, प्राप्य लब्ध्वा, अन्यथा सखीनां तत्र दृष्टिपातसम्भवात्, दर्शितः दृष्टिविषयीकारितः, अधरे निजनिम्नोष्ठे, मद्दंशो मत्कृतदशनक्षतं यया सा तादृशी सती,

तथाऽवलोक्य लीलाब्ज-नालभ्रमणविभ्रमात् ।
करौ योजयताऽध्येहि यन्मयाऽसि प्रसादिता ॥ ८६ ॥
ताम्बूलदानं मन्न्यस्त-करजं करपङ्कजे ।
न मम स्मरसि ? प्रायस्तव नैव स्मरामि तत् ? ॥ ८७ ॥
तदध्येहि मृषोद्यं मां हित्वा यत्र गता सखीः ।
तत्रापि मे गतस्याग्रे लीलयैवाञ्छिनस्तृणम् ॥ ८८ ॥

---

यत् माम् अतर्ज्जयः अङ्गुलीनर्त्तनेन भर्त्सितवती, त्वमिति शेषः, तत् स्मर चिन्तय ॥ ८५ ॥

तथेति ।—हे प्रिये ! मया नलेन, तथा पूर्वोक्तरूपं त्वत्-कृततर्जनम्, अवलोक्य दृष्ट्वा, लीलाब्जस्य क्रीडापद्मस्य, यत् नालं दण्डं, तस्य भ्रमणं घूर्णनमेव, विभ्रमः विलासः तस्मात्, तद्व्याजादित्यर्थः, करौ पाणी, योजयता मेलयता, अञ्जलिं बध्नता सता इत्यर्थः, यत् प्रसादिता प्रसन्नीकृता, असि भवसि, तत् अध्येहि स्मर ॥ ८६ ॥

ताम्बलेति ।—हे प्रिये ! तव करपङ्कजे त्वत्पाणिपद्मे, प्रायः बाहुल्येन, मन्न्यस्तकरजं विरचितनखाङ्कं, नखद्वययोगेन कृतमुद्राघातमित्यर्थः, मम नलस्य, मत्कर्त्तृकमित्यर्थः, ताम्बूल-दानं वीटिकार्पणं, न स्मरसि ? न मनसि करोषि ? तव तेऽपि च, तत् तादृशं करजक्षतपूर्वकं ताम्बूलदानं, नैव स्मरामि ? न ध्यायामि ? अपि तु स्मराम्येव, उभयत्र काकुः ; उभयमुभावपि स्मराव एवेत्यर्थः ॥ ८७ ॥

तदिति ।—हे प्रिये ! मृषोद्य मिथ्याभाषिणं, किमपि तव अप्रियकार्य्यं कृत्वा नाहमेतत् कृतवानिति कथयन्तमित्यर्थः, मां नलं, हित्वा विहाय, सखीः वयस्याः, सखीसमीपमित्यर्थः, गता प्रयाता, त्वमिति शेषः, तत्रापि सखीसमीपेऽपि, गतस्य

स्मरसि प्रेयसि ! प्रायो यद्द्वितीयरतासहा ।
शुचिरात्रीत्युपालब्धा त्वं मया पिकनादिनी ? ॥ ८९ ॥
भुञ्जानस्य नवं निम्बं परिवेविषती मधौ ।
सपत्नीष्वपि मे रागं सम्भाव्य स्मरथः स्मरेः ? ॥ ९० ॥

उपस्थितस्य, मे मम, अग्रे सम्मुखे, लीलया विनोदेन एव, यत् तृणं शुष्कयवसम्, अच्छिनः खण्डितवती, बाला हि अन्योऽन्यविच्छेदसूचकं तृणच्छेदनं कुर्वन्ति, तृणद्वयं यथा विच्छिन्नं जातं तथा आवामपि चिरं विच्छिन्नौ इति ज्ञापनार्थमिति भावः, तत् तादृशं चेष्टितम्, अध्येहि स्मर, [ अधिपूर्वस्य इकि स्मरणे इति धातोरदादित्वाल्लोटि ह्यादेशः ] ॥८८॥

स्मरसीति ।—प्रेयसि ! प्रियतमे ! द्वितीयस्य वारद्वयकृतस्य, रतस्य सुरतस्य, असहा दुर्बलत्वात् अक्षमा, अन्यत्र—अल्पपरिमिततया एकवारसम्भोगेनैव अवसितत्वात् अपर्य्याप्ता, पिकवत् कोकिलवत् मधुरं, नदति भाषते इति पिकनादिनी, अन्यत्र—पिकनादः कोकिलध्वनिः अस्ति अस्यामिति पिकनादिनी, त्वं भवती, प्रायः बाहुल्येन, मया नलेन, शुचिरात्री ग्रीष्मरात्री, ग्रीष्मकालिकरात्रिस्वरूपा इत्यर्थः, [ "कृदिकारादक्तिनः" इति ङीष् ] इति एवम् उक्ता, यत् उपालब्धा तिरस्कृता, तत्कल्पाऽसि इत्याक्षिप्ता इत्यर्थः, असीति शेषः, तत् स्मरसि ? अध्येषि किम् ? ॥ ८९ ॥

भुञ्जानस्येति ।—हे प्रिये ! परिवेविषती परिवेषणं कुर्वती, [ परिपूर्वात् विषधातोः जुहोत्यादिगणीयात् शतरि रूपम् ] त्वमिति शेषः, मधौ वसन्तकाले, नवं प्रत्यग्रम्, अभिनवोत्पन्नत्वात् कोमलमित्यर्थः, निम्बम् अरिष्टपत्रं, व्यञ्जनीभूतमिति भावः, "वसन्ते भ्रमणं पथ्यमथवा निम्बभोजनम्" इत्यादि

स्मर शार्करमास्वाद्य त्वया राद्धमिति स्तुवन्।
स्वनिन्दारोषरक्तात्तु यदभैषं तवाधरात्॥ ९१॥

स्मरणात्, भुञ्जानस्य खादतः, मे मम, सपत्नीषु समानपतिकासु अपरासु राज्ञीषु अपि, यद्वा—भुञ्जानस्य अभ्यवहरतः, मे मधौ चौद्रे सत्यपि, [ "मस्तु-मधु-सीधु-शीधु सानु-कमण्डलूनि नपुंसके च" इति चकारात् पुंसि चेति पुंलिङ्गता ] नवं निम्बं पिचुमर्दं, ( "पिचुमर्दश्च निम्ब" इत्यमरः ) परिवेविषतो ददतो, त्वमिति शेष, सपत्नीषु अपि मे रागम् अनुरागं, सम्भाव्य कल्पयित्वा, कृता इति शेषः, "वसन्ते भ्रमणं पथ्यमथवा निम्बभोजनम्। अथवा युवती भार्य्या अथवा वह्निसेवनम्॥" इति शास्त्रात् मां वसन्ते निम्बभोजनं कृतवन्तं दृष्ट्वा अन्यास्वपि युवतीभार्य्यासु अहमुपगता इति सम्भाव्य, अथवा शर्करा-मोदकादिक स्वादु द्रव्यं विहाय नितरां तिक्ते यदा अस्य रुचिः, तदा सुरूपामपि मां विहाय अपकृष्टासु मम सपत्नीषु अस्यासक्तिः नासम्भाव्या, लोकानां विभिन्नरुचिमत्त्वादिति भावः, स्वस्य आत्मनः, रुषः रोषात्, स्मरेः? मनसि कुर्य्याः किम्?॥ ९०॥

स्मरेति।—हे प्रिये! त्वया भवत्या, राद्धं पक्कं, निष्पादित-मित्यर्थः, शर्करायाः विकारं शार्करं शर्कराकृतं पानकादिकं शर्करामिश्रितं व्यञ्जनविशेषं वा, आस्वाद्य पीत्वा लीढ्वा वा, स्तुवन् एतत् सर्वस्मात् अधिकं स्वादु इति प्रशंसन्, अहमिति शेषः, स्वनिन्दारोषेणैव स्वस्य अधरस्यैव, निन्दया गर्हणेन, अधरस्यापि सर्वान्तर्भूतत्वात् शार्करस्य प्रशंसया अधरस्य निन्दासूचनेनेत्यर्थः, यो रोषः कोपः, अधरस्येति भावः, तेनैव रक्तात् अरुणात्, अरुणीभूतादित्यर्थः, तव अधरात् निम्नोष्ठात्,

मुखादारभ्य नाभ्यन्तं चुम्बं चुम्बं न तृप्तवान् ।
न प्राप्तं चुम्बितुं यत्ते धन्या तच्चुम्बतु स्मृतिः ॥ ८२ ॥
कमपि स्मरकेलिं तं स्मर यत्र भवन्निति ।
मया विहितसम्बुद्धिर्व्रीडिता स्मितवत्यसि ॥ ८३ ॥

यत् अभेषं भीतोऽभूवम्, अहम् इति शेषः, [ बिभीतेर्लुङ्, मिपि मिचि वृद्धिः मादेशश्च ] इति तु तच्च, स्मर चिन्तय ॥ ८१ ॥

मुखादिति ।—हे प्रिये ! मुखात् तव वदनात्, आरभ्य उपक्रम्य, नाभ्यन्तं नाभिपर्य्यन्तं कुचादिकम् अङ्गं, चुम्बं चुम्बं पुनः पुनः चुम्बित्वा चुम्बित्वा, [ आभीक्ष्ण्ये णमुल् ] न तृप्तवान् अपूर्णाकाङ्क्षः सन्, ते तव, यत् रतिगृहरूपमङ्गमित्यर्थः, चुम्बितुं चुम्बन कर्त्तुं, न प्राप्तं न अलभिषि, अहमिति शेषः, पाण्यादिना प्रतिबन्धात् लज्जातिशयात् गोपितत्वात् अपापिष्ठ-निषेधादिति वा भावः, तत् रतिगृहरूपं तवाङ्गमित्यर्थः, धन्या मया अप्राप्तस्यापि लाभात् भाग्यवती, स्मृतिः तव स्मरणशक्तिः, चुम्बतु स्पृशतु, तव स्मृतिविषयोभवतु इत्यर्थः, अकृतचुम्बनं तदङ्गं स्मरति भावः, सार्वभौमस्यापि मे यदङ्गचुम्बने योग्यता-भावः, धन्या ते स्मृतिस्तदङ्गं विनैव किञ्चिदपि प्रतिबन्धकं चुम्बितुं समर्था इति स्मृतेर्धन्यत्वं बोद्धव्यमित्याशयः ॥ ८२ ॥

कमिति ।—हे प्रिये ! कमपि अवाच्यं, तम् अतिशये-नानन्दप्रद, स्मरकेलिं कामक्रीडां, विपरीतसुरतमिति भावः, स्मर स्मृतिविषयोभूतं कुरु, यत्र यस्मिन् स्मरकेलौ, यस्मिन् पुरुषायित त्वाय इति वा, मया हे भवन् ! इति एवं, विहिता पुरुषवत् आचरणात् पुंलिङ्गनिर्देशेन कृता, सम्बुद्धिः आमन्त्रणं यस्याः सा तादृशी, त्वमिति शेषः, व्रीडिता लज्जिता, स्मित-वती स्वनैपुण्यप्रदर्शनजनितहर्षात् ईषत् हसितवती च,

नीलदा-चिबुकं यत्र मदाक्तेन श्रमाम्बुना।
स्मर हारमणौ दृष्टं स्वमास्यं तत्क्षणोचितम् ॥ ८४ ॥
वनकेलौ स्मराश्वत्थ दलं भूपतितं प्रति।
देहि मह्यमुदस्येति मह्निरा व्रीड़िताऽसि यत् ॥ ८५ ॥

असि भवसि, पुरुषायितत्वात् व्रीड़ा हर्षात् स्मितम् इति बोध्यम ॥ ८३ ॥

नीलदिति।—हे प्रिये! यत्र यस्मिन् विपरीतस्मरकेलौ, मदाक्तेन स्वकपोलाङ्कितपत्रभङ्गकस्तूरीचूर्णकलुषितेन, ("मदो रेतसि कस्तूर्य्याम्" इति विश्वः) श्रमाम्बुना स्वेदोदकेन, आचिबुकम् अधरोष्ठाधःप्रदेशपर्य्यन्तम्, ("अधस्तात् चिबुकम्" इत्यमरः) नीलत् नीलीभवत्, अत एव सञ्जातश्मश्रुकवत् प्रतीयमानमिति भावः, [ नील वर्णे इति धातोर्लट् शत्रादेशः ] तत्क्षणोचितं तत्कालयोग्यं, विपरीतकेलौ पुरुषवत् तव उपरि अवस्थानेन कपोलनिर्गलन्मदाक्तघर्मोदकानां द्रवत्वेन निम्नगामित्वाच्च पुरुषयोग्यं श्मश्रुलमिवेति भावः, स्व निजम्, आस्यं मुखं, हारमणौ हारस्थितरत्नमध्ये, अधःस्थितस्य ममेति भावः, दृष्टम् अवलोकितं, स्मर चिन्तय ॥ ८४ ॥

वनेति।—किञ्च, हे चारुशीले! वनकेलौ प्रमदवनविहारकाले, भूपतितं वृक्षात् भूतले च्युतम्, अश्वत्थदलम् अश्वत्थपत्रं, प्रति उद्दिश्य, उदस्य उद्धृत्य, एतदश्वत्थपत्रमिति शेषः, मह्यं नलाय, देहि अर्पय, इति उक्तरूपया, मद्गिरा ममोक्त्या, यत् व्रीड़िता लज्जिता, असि भवसि, रहस्याङ्गस्य अश्वत्थपत्राकृतितुल्यतया तद्याचने रहस्याङ्गयाचनाभिप्रायज्ञानादिति भाव, तत् स्मर चिन्तय। अत्र सामुद्रिकाः—"अश्वत्थदलसङ्काशं गुह्यं गूढ़मनिश्चितम्। यस्याः सा सुभगा कन्या पूर्वपुण्यैरवाप्यते ॥" इति ॥८५॥

इति तस्या रहस्यानि प्रिये शंसति साऽन्तरा।
पाणिभ्यां पिदधे तस्याः श्रवसी व्रीडयोक्तता॥ ८६॥
कर्णौ पीडयतो सख्या वीक्ष्य नेत्रासितोत्पले।
अप्यसादयतां भैमी-करकोकनदे नु तौ?॥ ८७॥
तत्प्रविष्टं सखीकर्णौ पत्युरालपितं ह्रिया।
पिदधाविव वैदर्भी स्वरहस्याभिसन्धिना॥ ८८॥

इतीति।—प्रिये नले, तस्याः भैम्याः, रहस्यानि गुप्तचेष्टितानि, इति इत्थं, शंसति कथयति सति, सा भैमी, व्रीडयोक्तता लज्जापरवशा सती, अन्तरा कथामध्ये, तस्याः कलायाः, श्रवसी कर्णौ, पाणिभ्या स्वकराभ्यां, पिदधे छादयामास, इतोऽधिकं रहस्यं कथयिष्यति चेत् तदनया न श्रोतव्यमिति बुद्धेति भावः॥ ८६॥

कर्णाविति।—सख्याः कलायाः, नेत्रे लोचने एव, असितोत्पले नीलसरोजे, कर्णौ कलाया एव श्रवणयुगलं, पीडयतो अभिभवती, आक्रम्य पीडनं कुर्वतीत्यर्थः, आकर्णविश्रान्ते इति भावः, वीक्ष्य दृष्ट्वा, भैम्याः दमयन्त्याः, करावेव पाणियुगलमेव, कोकनदे रक्तोत्पले अपि, [ कर्त्तृणी ] ("अथ रक्तसरोरुहे रक्तोत्पलं कोकनदम्" इत्यमरः ) तौ कर्णौ, असादयतां स्वयमपि समत्सरे एव अपीड़यतां, नु किम्? इत्युत्प्रेक्षा॥ ८७॥

कर्णपीडने उत्प्रेक्षान्तरमाह, तदिति।—वैदर्भी भैमी, सखीकर्णौ कलायाः श्रवणयुगलं, प्रविष्ट ढौकितं, पत्युः नलस्य, तत् पूर्वोक्तम्, आलपितं निजरहस्यभाषित, ह्रिया लज्जया, स्वरहस्यस्य निजगुप्तव्यापारस्य, अभिसन्धिना निगूहनाभिप्रायेणेव, वहिर्निर्गमननिरोधाभिप्रायेणेवेत्यर्थः, पिदधौ आच्छादयामास, स्वरहस्यगोपनाय इव कर्णपिधानमकरोदि-

तमालोक्य प्रियाकेलिं नले सोल्लुण्ठहासिनि।
आरात्तत्त्वमबुद्ध्वाऽपि सख्यः सिस्मियिरेऽपराः॥ ९९॥
दम्पत्योरुपरि प्रीत्या ता धराप्सरसस्तयोः।
ववृषुः स्मितपुष्पाणि सुरभीणि मुखानिलैः॥ १००॥
तदास्यहसिताज्जातं स्मितमासामभासत।
आलोकादिव शीतांशोः कुमुदश्रेणिजृम्भणम्॥ १०१॥

त्युत्प्रेक्षा। यथा कश्चित् निजगोपनीयं द्रव्यं लिप्यादिकं वा पेटिकादौ संस्थाप्य तस्य वहिः प्रकाशनिरोधार्थं पिधानेन सुदृढ़ं पिदधाति तद्वदिति भावः॥ ९८॥

तमिति।—तं पूर्वोक्तं, प्रियायाः भैम्याः, केलिं सखीकर्ण-पिधानरूपं विनोदम्, आलोक्य वीक्ष्य, नले नैषधे, सोल्लुण्ठं सपरिहासं, हसति हास्यं कुर्वतीति तादृशे सति, आरात् दूरात्, अपराः कलेतराः, सख्यः वयस्याः, तत्त्वं यथार्थव्यापारम्, अबुद्ध्वाऽपि अज्ञात्वाऽपि, सिस्मियिरे जहसुः, नलस्य हास्यमात्र-दर्शनात् ता अपि हसितवत्य इत्यर्थः; दृश्यते च लोके ईदृश-व्यापारो नियतमेव॥ ९९॥

दम्पत्योरिति।—ताः पूर्वोक्ताः, धराप्सरसः भूलोकसुराङ्गना-सदृश्यः सख्यः, दम्पत्योः जायापत्योः, तयोः दमयन्तीनलयोः, उपरि प्रीत्या हर्षेण, तयोर्व्यापारदर्शनजनितानन्देनेत्यर्थः, मुखानिलैः निःश्वासमारुतैः, सुरभीणि सुगन्धीनि, स्मितानि एव ईषद्धसितान्येव, पुष्पाणि सितकुसुमानि, कविभिर्हास्यस्य धवलतया कीर्त्तनादिति भावः, ववृषुः सिषिचुः, सख्यस्तौ सस्मितमवलोकयामासुरिति निष्कर्षः॥ १००॥

तदिति।—तस्य नलस्य, आस्ये वदने, यत् हसितं हास्यं तस्मात् तद्धास्यदर्शनादित्यर्थः, जातम् उत्पन्नम्, आसां सखीनां,

प्रत्यभिज्ञाय विज्ञाऽथ स्वरं हासविकस्वरम्।
सख्यास्तासु स्वपक्षायाः कला जातबलाऽजनि ॥ १०२ ॥
साऽऽहूयोच्चैरथोचे तामेहि स्वर्गेण वञ्चिते !।
पिब वाणीः सुधावेणीर्नृपचन्द्रस्य सुन्दरि ! ॥ १०३ ॥

स्मितं मृदुहास्यं, शीतांशोः चन्द्रस्य, आलोकात् प्रकाशात्, जातमिति शेषः, कुमुदश्रेणीनां कैरवपङ्क्तीनां, जृम्भणं विकाश इव, अभासत अशोभत ॥ १०१ ॥

प्रत्यभिज्ञायेति।—अथ सखीनां हासानन्तरं, विज्ञा अभिज्ञा, सुचतुरेत्यर्थः, कला कलाख्या सखी, तासु स्मितकारिणीषु सखीषु मध्ये, स्वपक्षायाः स्वसहायायाः, निजसुहृद्भूतायाः इत्यर्थः, ( "पक्षो मासार्द्धके पार्श्वग्रहे साध्यविरोधयोः। केशादेः परतो वृन्दे बले सखिसहाययोः॥" इति मेदिनी ) सख्याः कस्याश्चित् वयस्यायाः सम्बन्धिनं, हासेन हास्यशब्देन, विकस्वरं प्रकाशमानं, स्वरं ध्वनिं, प्रत्यभिज्ञाय ममैव प्रियसख्याः स्वरोऽयमिति निश्चित्य, जातबला प्राप्तसामर्थ्या, दमयन्तीकरनिरुद्धनिजकर्णमोचने इति भावः, अजनि जाता, [ जनेः कर्त्तरि लुङ्। "दीपजन—" इत्यादिना चेृ चिणि तलुकि रूपम् ] ॥ १०२ ॥

सेति।—अथ स्वरप्रत्यभिज्ञानानन्तरं, सा कला, तां सखीम्, उच्चैः तारम्, आहूय आकार्य्य, हे स्वर्गेण स्वःसुखेन, स्वर्गसुखजनकनलवाक्याश्रवणेनेत्यर्थः, वञ्चिते ! प्रतारिते ! सुन्दरि ! हे सौन्दर्य्यशालिनि ! एहि आगच्छ, नृपचन्द्रस्य राजेन्दोः सम्बन्धिनीः, वाणीः वाक्यस्वरूपाः, सुधावेणीः अमृतरसप्रवाहान्, पिब स्वद, यथेच्छम् आकर्णय इति यावत्, इति ऊचे कथयामास, स्वर्गे चन्द्रात् निःसृतस्य अमृतस्य तुल्यं राज-

साऽशृणोत्तस्य वाग्भागमनल्पासत्तिमत्यपि ।
कल्पग्रामाल्पनिर्घोषं बदरीव कृशोदरी ॥ १०४ ॥
अथ स्वपृष्ठनिष्ठायाः शृण्वत्या नैषधाभिधाः ।
नलमौलिमणौ तस्या भावमाकलयत् कला ॥ १०५ ॥
प्रतिबिम्बेक्षितैः सख्या मुखाकूतैः कृतानुमा ।
तद्व्रीडाद्यनुकुर्वाणा शृण्वती चान्वमायि सा ॥ १०६ ॥

चन्द्रमुखात् उद्गतं वाक्यसुधाप्रवाहम् अनुभूय स्वर्गसुखमनुभवत्यर्थः ॥ १०३ ॥

सेति—कृशोदरी क्षीणमध्या, सा आहूता सखी, अनल्पासत्तिमती अपि ईषद्दूरस्था अपि, तस्य नलस्य, वाग्भागं ततः परं कथितं वाक्यांशं, कल्पग्रामस्य बदरिसमीपवर्त्तिनः कल्पाख्यस्य ग्रामस्य, अल्पनिर्घोषं मन्दध्वनिं, किञ्चिद्दूरत्वादनुच्चकलरवमित्यर्थः, बदरी इव बदरिकाश्रमस्थलोकसमूह इव, अशृणोत् आकर्णयत् ; सन्निकृष्टेषु ग्रामेषु यथा परस्परमालापाः श्रूयन्ते तद्वदश्रौषीदित्यर्थः ॥ १०४ ॥

अथेति ।—अथ सख्याह्वानानन्तरं, कला तन्नामसखी, स्वपृष्ठनिष्ठायाः निजपश्चाद्भागस्थितायाः, कर्णपिधानार्थं कलाया एव पश्चाद्देशे अवस्थितायाः सत्याः इत्यर्थः, नैषधस्य नलस्य, अभिधीयन्ते इत्यभिधाः वचनानि, [ "आतश्चोपसर्गे" इति अङ्-प्रत्ययः ] शृण्वत्याः आकर्णयन्त्याः, तस्याः भैम्याः, भावं कोपादिचेष्टां, नलस्य नैषधस्य, मौलिमणौ मुकुटस्थरत्ने, आकलयत् अपश्यत्, पुरोवर्त्तितया तत्र तस्याः प्रतिफलनादिति भावः ॥ १०५ ॥

प्रतीति ।—सा कला, प्रतिबिम्बे नलमौलिमणिगतसखीप्रतिच्छायायाम्, ईक्षितैः दृष्टैः, सख्याः भैम्याः, मुखाकूतैः

कारङ्कारं तथाऽऽकारमूचे माऽशृणवन्तमाम्।
मिथ्या वेत्थ गिरश्चेत्तत् व्यर्थाः स्युर्मम देवताः ॥ १०७ ॥
मत्कर्णभूषणानान्तु राजन्! निविडपीड़नात्।
व्यथिष्यमाणपाणिस्ते निषेद्धुमुचिता प्रिया ॥ १०८ ॥

…ज्यारोषादिव्यञ्जकवदनभङ्गिभिः लिङ्गैः, कृतानुमा इदमिदमयं …क्तीति विहितानुमाना, दमयन्तीकर्त्तृककर्णपिधानेन श्रवणा-सामर्थ्यादिति भावः, अत एव तस्याः दमयन्त्याः, व्रीड़ादि …लज्जास्मितादिभावम्, अनुकुर्वाणा अनुकरणशीला सती, …मयन्त्यनुकरणेन स्वयमपि तादृशभावं प्रकटयन्ती सतीत्यर्थः, "ताच्छील्यवयोवचनशक्तिषु" इति ताच्छील्ये चानश्, अन्यथा …नुपराभ्यां कृञः" इति परस्मैपदप्रसङ्गात्] शृण्वती इव …नादाकर्णयन्ती इव, कर्णयोः पिहितयोरपि नलवचनं … शृण्वती इवेत्यर्थः, अन्वमायि अनुमिता, नलदमयन्ती-…र्मिति शेषः ॥ १०६ ॥

कारङ्कारमिति।—सा कान्ता, तथाऽऽकारं पूर्वोक्तरूपमनु-…दर्शनमित्यर्थः, कारं कारं कृत्वा कृत्वा, [आभीक्ष्ण्ये णमुल्] …अशृणवन्तमां भवदुक्तं सर्वमतिशयेनाकर्णयम्, अहमिति शेषः, शृणोतेर्लङि मिपो मादेशः, "किमेत्तिङव्ययात्—" इत्यामु-…त्ययः] इति ऊचे कथयामास, चेत् यदि, गिरः अशृणवन्तमाम् …इति वाचः, मिथ्या अनृतं, वेत्थ जानासि, मन्यसे इत्यर्थः, तत् …तदा, मम मे, देवताः उपास्यदेवताः, व्यर्थाः विफलाः, …विफलोपासनाः इत्यर्थः, विशिष्टार्था इत्यपि निगूढ़ार्थो …ऽस्यते, विशिष्टार्थसाधिका इत्यर्थः, स्युः भवेयुः ॥ १०७ ॥

मदिति।—तु किन्तु, राजन्! हे महाराज!, मत्कर्णभूषणानां …मम श्रवणालङ्काराणां, निविड़पीड़नात् दृढ़भावेन धारणात्,

इति स्म मोचयाञ्चक्रे कर्णौ सख्याः करग्रहात्।
पत्युराश्रवतां यान्त्या मुधाऽऽयासनिषेधिनः॥ १०९॥
श्रुतिसंरोधजध्वान-सन्ततिच्छेदतालताम्।
जगाम झटिति त्याग-स्वनस्तत्कर्णयोस्ततः॥ ११०॥
साऽपसृत्य कियत् दूरं मुसुटे मिस्मिये ततः।
इदञ्च ता सखोमित्य ययाचे काकुभिः कला॥ १११॥

कर्णपिधानार्थमिति भावः, व्यथिष्यमाणपाणिः तोत्स्यमानकरा, ते तव, प्रिया कान्ता भैमी, निषेद्धुं कर्णपिधानात् निवारयितुम्, उचिता कर्त्तव्या, मया युवयोः रहस्यस्य सर्वस्यापि श्रुतत्वात् कर्ण-पिधानस्य स्वपाणिपीड़नादतिरिक्तफलं नास्तीति भावः॥१०८॥

इतीति।—सा कला, इति इत्थम्, एवंविधवचनकौशलेनेत्यर्थः, मुधाऽऽयासं वृथाक्लेशं, निषेधति निवारयति, कलया सर्वस्यैव वृत्तान्तस्य यथावत् श्रवणात् मिथ्या कर्णावरण-परिश्रमं मा कुर्विति वारयतीति तादृशस्येत्यर्थः, पत्युः नलस्य, आश्रवतां वाक्यकारित्वं, ("वचने स्थित आश्रवः" इत्यमरः) यान्त्याः प्राप्नुवत्याः, भर्त्तुरादेशात् कर्णौ त्यजन्त्या इत्यर्थः, सख्याः भैम्याः, करग्रहात् हस्ताभ्यां धारणात्, कर्णौ निजश्रवणद्वय, मोचयाञ्चक्रे मोचितवती॥ १०९॥

श्रुतीति।—ततः कर्णमोचनानन्तरं,तस्याः कलायाः, कर्णयोः श्रवणयोः, झटिति सहसा, त्यागेन मोचनेन, यः स्वनः शब्दः, श्रुतिविवरं प्रविष्टः बाह्यशब्द इत्यर्थः, श्रुतिसंरोधेन कर्णावरणेन, जातायाः उत्पन्नायाः,ध्वानसन्ततेः "धुम् धुम्" इत्यादिरूपध्वान-परम्परायाः, छेदे विरामे,तालतां गीतादिक्रियासमापनकालिक-मानरूपतां, जगाम प्राप, बाह्यशब्देन आभ्यन्तरध्वनिर्निवृत्तः इत्यर्थः; एतच्च सर्वेषामेवानुभवसिद्धमिति बोद्धव्यम्॥ ११०॥

अभिधास्ये रहस्यं तत् यदश्रावि मयाऽनयोः ।
वर्णयाऽऽकर्णितं मह्यमेह्याालि ! विनिमीयताम् ॥ ११२ ॥
वयस्याऽभ्यर्थनेनाथ्या: प्राक्कूटश्रुतिनाटने ।
विस्मितौ कुरुतः स्मैतौ दम्पती कम्पितं शिरः ॥ ११३ ॥

सेति ।—ततः सुक्तिप्राप्तेरनन्तरं सा कला तन्नामसखी, यत् किञ्चित्, दूरं विप्रकृष्टदेशम्, अपसृत्य गत्वा, सुमुदे जहर्ष, निजकौशलस्य साफल्यदर्शनादिति भावः, अत एव स्मिस्मये च मन्दं जहास च, किञ्च, ताम आहूतां स्वपक्षीयां, सखीं वयस्याम, एत्य आगत्य, काकुभिः अनुनयसूचकविकृतस्वरैः, इदं वक्ष्यमाणं, ययाचे च प्रार्थयामास च ॥ १११ ॥

किं ययाच इत्याह, अभीति ।—आलि ! हे सखि !, एहि आगच्छ, अनयोः भैमीनलयोः सम्बन्धि, यत् रहस्यं गोपनीयव्यापारः, मया अश्रावि कर्णाराधात् प्राक् श्रुतं, तत् अभिधास्ये कथयिष्यामि, तुभ्यमिति शेषः, आकर्णितं त्वया श्रुतञ्च, रहस्यमिति शेषः, मह्यं कलायै, वर्णय कथय, त्वमिति शेषः, विनिमीयतां परस्परं श्रुतवृत्तान्तस्य विनिमयः क्रियताम, आवाभ्यामिति शेषः ॥ ११२ ॥

वयस्येति ।—वयस्यायाः स्वपक्षभूतायाः सख्याः, अभ्यर्थनेन प्रार्थनेन, "वर्णयाऽऽकर्णितं मह्यम्" इत्युक्तरूपेण श्रुतवृत्तान्तस्य विनिमयप्रार्थनया इत्यर्थः, अस्याः कलायाः, प्राक् पूर्वं, कर्णपिधानावस्थायामित्यर्थः, कूटे मिथ्यैव कृते, श्रुतिनाटने मया सर्वं श्रुतमिति भावव्यञ्जने, विस्मितौ आश्चर्यान्वितौ, दम्पती जायापती, एतौ भैमीनलौ, शिरः स्वस्वमस्तकं, कम्पितं चालितं, कुरुतः स्म मृदु मृदु शिरश्चालनं चक्रतुः इति विस्मयभावोक्तिः ॥ ११३ ॥

तथाऽऽलिमालपन्तीं तामभ्यधान्निषधाधिपः ।
आस्स्व तद्वञ्चितौ स्वश्चेन्मिथ्याशपथसाहसात् ॥ ११४ ॥
प्रत्यलापीत् कलाऽपीमं कलङ्कः शङ्कितः कुतः ? ।
प्रियापरिजनोक्तस्य त्वयैवाद्य मृषोद्यता ॥ ११५ ॥
सत्यं खलु तदाऽश्रौषं परं धुमुधुमारवम् ।

तथेति ।—निषधाधिपः नलः, आलिम् आहूतस्वपक्षसखीं, तथा तेन प्रकारेण "वर्णयाकर्णितं मह्यम्" इत्युक्तप्रकारेणेत्यर्थः, आलपन्तीं सम्भाषमाणां, तां कलाम्, अभ्यधात् अवोचत्, किम् इति ? हे धूर्त्ते ! मिथ्याशपथसाहसात् "व्यर्थाः स्युः मम देवताः" इति कृत्वा अनृतशपनमेव साहसम् अविचारितकारित्वं तस्मात् हेतोः, चेत् यदि, वञ्चितौ प्रतारितौ, स्वः भवावः, आवामिति शेषः, तत् तर्हि, आस्स्व तिष्ठ, एतदर्थं त्वा यथोचितं दण्डयामि क्व गमिष्यसीति भावः ॥ ११४ ॥

प्रत्यलापीदिति।—कला अपि तन्नामसखी अपि, इमं नलं, प्रत्यलापीत् प्रत्यवोचत्, [ लपेर्लुङि "अतो हलादेर्लघोः" इति निषेधविकल्पात् सिचि वृद्धिः ] हे राजन् ! त्वया भवता, अद्य एव अस्मिन्नेव दिवसे, न तु इतः पूर्वं कदाऽपीति भावः, प्रियायाः भैम्याः, परिजनेन सखीजनेन, उक्तस्य कथितस्य वचनस्य, मृषोद्यता मिथ्यावादित्व, [ "राजसूयसूर्यमृषोद्य—" इत्यादिना मृषापूर्वाद्वदेः क्यबन्तो निपातः ] अनृतवादिता-रूपः इत्यर्थः, कलङ्कः अपवादः, कुतः कथं, शङ्कितः सम्भावितः ? भवत्प्रियायाः सदा सत्यवादित्वात् तत्परिजनानामस्माकमपि मिथ्यावादित्व न सम्भवति इति भावः ; वृत्तस्यापि रात्रि-व्यापारस्य न वृत्तमिति अपलापवत् अस्माकमपि तत्परिजनानां तथाव्यवहारः न दूष्यतीति तु निगूढतात्पर्य्यम् ॥ ११५ ॥

शृणोमीत्येव चावोचं न तु त्वद्वाचमित्यपि ॥ ११६ ॥
आमन्त्र्य देव ! तेन त्वां तद्वैयर्थ्यं समर्थये ।
शपथ: कर्कशोदर्क: सत्यं सत्योऽपि दैवत: ॥ ११७ ॥

सत्यमिति ।—अथवा तदा पूर्वोक्तशपथात् पूर्वं कर्ण-रोधसमये, परं केवलं, धुमुधुमारवं "धुम् धुम्" इत्येव-माभ्यन्तरिकशब्दं, सत्यं खलु सत्यमेव, अश्रौषम् आकर्णितवती, अहमिति शेष: च किन्तु, शृणोमीत्येव "अशृणवन्तमाम्" इत्यनेन श्रवणमात्रमेव, अवोचम् अकथयम्, अपि तु परन्तु, त्वद्वाच भवदीयवाक्यम्, अशृणवन्तमामिति शेष:, इति न, अवोचमित्यनेनान्वय: ; यस्मात् शृणोमीत्युक्तं, तस्मान्नात्र सृषोद्यनादोष:, शब्दश्रवणस्य सत्यत्वात् इति भाव: ॥ ११६ ॥

आमन्त्र्येति ।—देव ! हे राजन् ! तेन "व्यर्था: स्युर्मम देव ! ता:" इत्यादि पूर्वोक्तवाक्येन हेतुना, हे देव ! इति त्वां भवन्तम्, आमन्त्र्य सानुनयं सम्बोध्य, ता: अशृणवन्तमाम् इत्यादि गिर:, व्यर्था: मिथ्याभूता: इत्युक्ता, तस्य अशृणव-न्तमामिति शपथवाक्यस्य, वैयर्थ्यं मिथ्यात्वम्, अथवा श्रुतानां धुमुधुमित्यादीनां ध्वनीनां वैयर्थ्यम् अर्थशून्यत्व, "धुम् धुम्" इति शब्दस्य डित्थडवित्थादिवत् अर्थशून्यतया तच्छ्रवणस्यापि निरर्थकत्वादिति भाव:, समर्थये सिद्धान्तत्वेन स्थापयामीत्यर्थ:, अहमिति शेष:, शपथकरणे मन्वाद्युक्तं दोषं जानत्या मया तु शपथ: न कृत:, किन्तु अहं शपथं कृतवतीति देवस्यैव भ्रान्तिर्जाता, तथा हि दैवत: देवताम् उद्दिश्य कृत:, सत्योऽपि यथार्थोऽपि, शपथ: शपनं, सत्यं निश्चितमेव, कर्कशोदर्क: कर्कश: धर्महानिकरत्वेन निदारुण:, उदर्क: उत्तरं फलं यस्य तादृश:, शोचनीयपरिणाम: इत्यर्थ:, ("उदर्क: फलमुत्तरम्"

असम्भोगकथारम्भैर्वञ्चयेथे कथं नु माम् ? ।
हन्त ! सेयमनर्हन्तौ यत्तु विप्रलभे युवाम् ॥ ११८ ॥
कर्णं कर्णं ततः सख्यौ श्रुतमाचख्यतुर्मिथः ।
मुहुर्विस्मयमाने च स्मयमाने च ते बहु ॥ ११९ ॥

---

इत्यमरः ) भवतीति शेषः । "सत्येनापि शपेत् यस्तु देवाग्नि-गुरुसन्निधौ । तस्य वैवस्वतो राजा धर्मस्यार्द्धं निकृन्तति ॥" इति मनुस्मरणादिति भावः ॥ ११७ ॥

मिथ्याशपथेन युवयोः वञ्चनाया न कोऽपि दोषः इत्याह, असम्भोगेति ।—युवां भवन्तौ, असम्भोगकथानां सम्भोगचिह्ने विद्यमानेऽपि त्वया उच्यते भैमी मां न स्पृशत्यपि, अनयाऽपि नलेन नाहं स्पृष्टा इत्युच्यते एवम्भूतानां सम्भोगाभावोक्तीनाम्, आरम्भैः उपन्यासैः, प्रवर्त्तनैरित्यर्थः, मां कलां, कथं नु किमर्थं, वञ्चयेथे ? प्रतारयथः ? तु पुनः, युवां भवन्तौ, यद्विप्रलभे वञ्चयामि, अहमिति शेषः, सा इयं वञ्चना, अनर्हन्तौ हन्त !! अयुक्ता किम् ? मद्वञ्चनं युवयोः युक्तमत्र, मम तु भवद्वञ्चनम-युक्तम् अहो आश्चर्यं धूर्त्तयोरिति भावः । [ अनर्हन्तौ "अर्हः प्रशंसायाम्" इति शतरि उगित्त्वात् ङीपि, ब्राह्मणादि-त्वात् ष्यञ् प्रत्यये "अर्हतो नुम् च" इति नुमागमः, "ष्यञः षित्करणादाकारो बहुलम्" इति वामनः । "यस्य हलः" इति यकारलोपे चार्हन्तौ, ततः नञ्समासः ] यत्तु इत्यत्र "यत्र" इति पाठे—अनर्हन्तौ दासीत्वात् अयोग्याऽपि, सा इयं कलानाम्नी अहं, युवां प्रतारकौ भवन्तौ, यत् न विप्रलभे, तत् किं मन्यावहे ? इति शेषः ; "शठे शाठ्यं समाचरेत्" इति न्यायात् वञ्चकेन सह प्रतारणापूर्णव्यवहार एव युज्यते इति भावः ॥ ११८ ॥

अथाख्यायि कलासख्या कुप्य मे दमयन्ति ! मा।
कर्णाद्द्वितीयतोऽप्यस्याः सङ्गाप्यैव यदब्रुवम् ॥ १२० ॥
प्रियः प्रियामथाचष्ट दृष्टं कपटपाटवम् ? ।
वयस्ययोरिदं तस्मान्मा सखीष्वेव विश्वसीः ॥ १२१ ॥

कर्णे कर्णे इति।—ततः अनन्तरं, ते सख्यौ कला तत्सपत्नी च, मुहुः पुनः पुनः, विस्मयमाने आश्चर्यभावं प्रकाशयन्त्यौ, तथा स्मयमाने मन्दं हसन्त्यौ च सत्यौ, श्रुतम् आकर्णितं पूर्वोक्त-रहस्यजातं, मिथः अन्योऽन्यं, कर्णे कर्णे कर्णसमीपे मुखं संस्थाप्य निःशब्दं यथा तथेत्यर्थः, बहु दीर्घकालं व्याप्येत्यर्थः, आचख्यतुः कथयामासतुः ॥ ११९ ॥

अथेति।—अथ अन्योऽन्यकथनानन्तरं, कलासख्या कलायाः वयस्यया, आख्यायि उक्तम्; किमिति ? हे दमयन्ति ! मे मह्यं, मा कुप्य न क्रुद्धा भव, त्वमिति शेषः, ["क्रुधद्रुह—" इत्यादिना सम्प्रदानत्वाच्चतुर्थी] यत् यस्मात्, द्वितीयतः द्वितीयात्, कर्णात् श्रवणात् अपि, सङ्गोप्य गोपायित्वा, अस्याः एव कलायाः एव, अब्रुव रहस्यम् अकथयम् ॥ १२० ॥

प्रिय इति।—अथ कलासखीवाक्यानन्तरं, प्रियः कान्तो नलः, प्रियां कान्तां भैमीम्, आचष्ट अवोचत्, किमिति ? हे प्रिये ! वयस्ययोः सख्योः, इदं त्वत्समक्षमेव आचरितं, कपट-पाटवं वञ्चनाचातुर्यं, दृष्टम् ? अवलोकितम् ? इति काकुः; तस्मात् एतद्व्यवहारदर्शनात्, सखीषु वयस्यासु, मैव नैव, विश्वसीः विश्वासं कुरु, मय्येव विश्वासः कर्त्तव्य इति भावः। [श्वसेर्माङि लुङि "न माङ्योगे" इति अडागमनिषेधः। "अतो हलादेर्लघोः" इति वृद्धौ प्राप्तायां "ह्म्यन्तक्षणश्वस—" इत्यादिना निषेधः] ॥ १२१ ॥

आलापि कलयाऽपीयं पतिर्नालपति क्वचित् ।
वयस्येऽसौ रहस्यं तत् सभ्ये विस्रम्भमीदृशि ॥ १२२ ॥
इति व्युत्तिष्ठमानायां तस्यामूचे नलः प्रियाम् ।
अथ भैमि ! वहिः कुर्वे दुर्विनीते गृहादमूम् ? ॥ १२३ ॥
शिरःकम्पानुमत्याऽथ सुदत्या प्रेषितः प्रियः ।
चुलुकं तुच्छमुत्सर्प्य तस्याः सलिलमक्षिपत् ॥ १२४ ॥

आलापीति ।—कलयाऽपि इयं भैमी, आलापि अवादि, किमालापि ? इत्याह, हे दमयन्ति ! असौ अय, पतिः तव भर्त्ता नलः, क्वचित् कुत्रापि, न आलपति न कथयति, गोप्यवार्त्तामिति शेषः, अत एव ईदृशि एवम्भूते, सभ्ये सज्जने, वयस्ये सख्यौ, तत् पूर्वोक्तं, रहस्यं गोप्यवृत्तान्तः, विस्रम्भ्यं विश्वसनीयं, विश्वस्य वक्तव्यमेवेत्यर्थः । अत्र विपरीतलक्षणया— असौ ते पतिः सर्वत्रैव तव रहस्यमालपति, अत एव ईदृशि असभ्ये वयस्ये न विस्रम्भ्यमेव इति [ "कृत्यलुटो बहुलम्" इति भावे कृत्य-प्रत्ययः, तस्याकित्त्वान्नकारलोपः ] ॥ १२२ ॥

इतीति ।—तस्यां कलायाम्, इति इत्थं, व्युत्तिष्ठमानायां विरोधम् आचरन्त्यां, तुल्यभाविनेव विपक्षवत् व्यवहर्त्तुं प्रवर्त्तमानायामित्यर्थः, [ "उदोऽनूर्द्ध्वकर्मणि" इत्यात्मनेपदम् ] नलः नैषधः, प्रियां भैमीम्, ऊचे कथयामास ; किमिति ? भैमि ! हे दमयन्ति ! दुर्विनीते उद्धते, अमूं एतां सखीं, गृहात् प्रकोष्ठमध्यादित्यर्थः, वहिः कुर्वे ? निर्वासयामि ? इति काकुः, अथ ब्रूहि, आदिश इत्यर्थः ॥ १२३ ॥

शिर इति ।—अथ नलवाक्यानन्तरं, सुदत्या शोभनदन्तया, भैम्या इति शेषः, शिरःकम्पेनैव मस्तकस्य ईषच्चालनरूपेणैव, अनुमत्या अनुमोदनेन, सख्याः वाहिष्कारणविषये सम्मति-

तस्मिन्नदत्तचित्ताभ्यामुच्चैः सिचयसेचनम्।
ताभ्यामलम्भि दूरेऽपि नलेच्छापूरिभिर्जलैः॥ १२५॥
वरेण वरुणस्यायं सुलभैरम्भसां भरैः।
एतया स्तिमितीचक्रे हृदयं विस्मयैरपि॥ १२६॥

स्नापनेनेत्यर्थः, प्रीणितः तोषितः, प्रियः नलः, तुच्छं रिक्तमेव, जलशून्यमेवेत्यर्थः, चुलुकं प्रसृतं, निकुब्जपाणिद्वयमित्यर्थः, अञ्जालिमात यावत्, उत्क्षिप्य उत्तोल्य, तस्याः कलायाः उपरीत्यर्थः, सलिलं जलम्, अक्षिपत् अकिरत्॥ १२४॥

तस्मिन्निति।—तस्मिन् पूर्वोक्तरूपे रिक्तहस्तादपि जलनिःसरणरूपे, विवे आश्चर्ये, दत्तचित्ताभ्यां निवेशितमनोभ्याम्, अत एव अपसर्तुं विस्मृताभ्यामिति भावः, ताभ्यां सखीभ्यां, दूरेऽपि विप्रकृष्टदेशे स्थिताभ्यामपि, नलस्य इच्छां पूरयन्तीति तादृशैः नलेच्छापूरिभिः वरुणवरात् नैषधस्य अभिलषितं साधयद्भिः, जलैः सलिलैः, उच्चैः अतिमात्रं, सिचयसेचनं वस्त्रार्द्रीभवनं, ("पटोऽस्त्री सिचयो वस्त्रम्" इति यादवः) अलम्भि प्रापि [ "विभाषा चिण्णमुलोः" इति नुमागमः ]॥ १२५॥

ननु नलस्य रिक्तहस्तात् कुतो जलसम्भवः इत्यत्राह, वरेणेति।—अयं नलः, वरुणस्य जलेशस्य, वरेण वरदानेन, अभीष्टपूरकवाक्यप्रयोगेणेत्यर्थः, सुलभैः अनायासप्राप्यैः, अम्भसां जलानां, भरैः ओघैः, तथा विस्मयैरपि रिक्तहस्तात् जलानि निःसृतानीति आश्चर्यरसैश्च, एतया सख्याः, हृदयं वक्षःस्थलम् अन्तरञ्च, ("हृदयं वक्षसि स्वान्ते" इति विश्वः) स्तिमितीचक्रे आर्द्रीचकार निश्चलीचक्रे च [ अभूततद्भावे च्विः ] अत्र स्तिमितहृदयमिति विशेषणविशेष्ययोः द्वयोरपि प्रकृतत्वात् श्लेषः॥ १२६॥

तेनापि नापसर्पन्त्यौ दमयन्तीमयं ततः।
हर्षेणादर्शयत् पश्य नाम्नेमे तन्वि! मे पुरः॥ १२७॥
क्लिन्नीकृत्याम्भसा वस्त्रं जैनप्रव्रजितीकृते।
सख्यौ सत्क्षौमभावेऽपि निर्विघ्नस्तनदर्शने॥ १२८॥
अस्मिन्नः शम्बरत्वेन मायैवाविरभूदियम्।
यत् पटावृतमप्यङ्गमनयोः कथयत्यदः॥ १२९॥

तेनेति।—ततः जलसेचनानन्तरम्, अयं नलः, ननु भोः! तन्वि! कृशाङ्गि! प्रिये! अम्भसा जलेन, वस्त्रं वसनं, क्लिन्नीकृत्य आर्द्रीकृत्य, [अभूततद्भावे च्विः] सत्क्षौमभावेऽपि क्षौमवस्त्राच्छादने सत्यपि, निर्विघ्नम् अप्रतिबाधनं, स्तनदर्शनं कुचावलोकनं ययोः ते तादृश्यौ, शुभ्रसूक्ष्मार्द्रवस्त्रेण आच्छादितेऽपि अङ्गे सर्वाङ्गस्य दर्शनविषयीभूतत्वादिति भावः, अत एव जैनप्रव्रजितीकृते बौद्धपरिव्राजिकाप्राये कृते, तासामपि दिगम्बरप्रायत्वादिति भावः, तेन तथाविधकरणेनापि, न अपसर्पन्त्यौ न अपगच्छन्त्यौ, इमे एते, सख्यौ वयस्ये, मे मम, पुरः अग्रतः, स्थिते इति शेषः, पश्य अवलोकय, इति हर्षेण स्तनादिदर्शनजनितानन्देन, दमयन्तीं भैमीं, दमयन्त्यै इत्यर्थः, अदर्शयत् अङ्गुलिनिर्देशेन दर्शयामास। [अत्र "अभिवादिदृशोरात्मने पदे उपसङ्ख्यानम्" इति पाक्षिककर्मत्वस्य परस्मै पदे अप्राप्ते "दृशेश्च" इत्यनेन दमयन्तीमित्याणिकर्तुः नित्यकर्मत्वम्] ईदृगघटनया नाश्नतयोः तयोः गृहात् बहिर्गमनसम्भावनया दमयन्त्युपभोगलिप्सा व्यज्यते॥ १२७।१२८॥

अस्मिन्निति।—अदः नलनिमित्तम् इदं जलं कर्त्तृ, पटावृतमपि वस्त्राच्छादितमपि, अनयोः सख्योः, अङ्गं स्तनादिनिगूढावयवं, यत् कथयति वदति, सुस्पष्टम् आविष्करोतीत्यर्थः,

वाससो वाऽम्बरत्वेन दृश्यतेयमुपागमत्।
चारुहारमणिश्रेणि-तारवीक्षणलक्षणा ॥ १३० ॥
ते निरीक्ष्य निजावस्थां ह्रीणे निर्ययतुस्ततः।
तयोर्वीक्षारसात् सख्यः सर्वा निश्चक्रमुः क्रमात् ॥ १३१ ॥
ता बहिर्भूय वैदर्भीमूचुर्नीतावधीरिताम्।।

इयं पटावृतस्यापि अङ्गस्य आविष्करणरूपा एषा अवस्था, अम्भुनः जलस्य, अम्बरत्वेन अम्बरापरनामत्वेन शम्बरासुरत्वेन च, ("दैत्ये ना शम्बरोऽम्बुनि" इति वैजयन्ती) माया एव शाम्बरी एव, छलना एवेत्यर्थः ("स्यान्माया शाम्बरी" इत्यमरः) आविरभूत् प्रकटिता आसीत्, अन्यथा कथं अनवृतयोरपि स्तनादिः दृश्यते इति भावः ॥ १२९ ॥

वासस इति।—वा अथवा, चार्व्यः मनोज्ञाः, हारमणिश्रेण्यः एव मौक्तिकसरस्थरत्नराजय एव, ताराः नक्षत्राणि, तासां वीक्षणं दर्शनमेव, लक्षणं लक्ष्म यस्याः सा तादृशी, इयम् एषा, दृश्यता स्तनादिदर्शनयोग्यता, आकाशरूपेण दर्शनविषयता च, वाससः वस्त्रस्य, अम्बरत्वेन वस्त्रत्वेन आकाशत्वेन च, ("अम्बरं व्योम्नि वाससि" इत्यमरः) उपागमत् प्राप्नोत्, जाता इत्यर्थः ॥ १३० ॥

ते इति।—ते सख्यौ, निजावस्थां जलसेकात् गोप्याङ्गप्रकाशरूपाम् आत्मनो दशां, निरीक्ष्य अवलोक्य, ह्रीणे लज्जिते सत्यौ, ततः तस्मात् गृहात्, निर्ययतुः निर्जग्मतुः, ततः तयोः नल-तत्सख्योः, वीक्षारसात् दर्शनेच्छातः, सर्वाः अपराः समस्ताः, सख्यः वयस्याः, क्रमात् एकैकं कृत्वा, निश्चक्रमुः निष्क्रान्ताः ॥ १३१ ॥

ता इति।—ताः सख्यः, बहिर्भूय बहिर्निर्गत्य, वैदर्भीं

उपेक्ष्ये ते पुनः सख्यौ मर्मज्ञे नाधुनाऽप्यमू ॥ १३२ ॥
उच्चैरूचेऽथ ता राजा सखीयमिदमाह वः।
श्रुतं मर्म ममैताभ्यां दृष्टं मर्म मयैतयोः ॥ १३३ ॥
मद्विरोधितयोर्वाचि न श्रद्धातव्यमेतयोः।
अभ्यषिञ्चदिमे माया-मिथ्यासिंहासने विधिः ॥ १३४ ॥

---

दमयन्तीम्, ऊचुः कथयामासुः, किमिति? नीतावधीतिनि! हे अधीतनीतिशास्त्रे भैमि! [ इष्टादित्वादिनि-प्रत्ययः "क्तस्येन्-विषयस्य—" इति कर्मणि सप्तमी ] अमू एते, मर्मज्ञे भवत्याः रहस्याभिज्ञे, सख्यौ कला-तत्त्वपक्षे, अधुना पूर्वं यथा भवतु, इदानीमपि, ते तव, त्वयेत्यर्थः, [ "कृत्यानां कर्त्तरि वा" इति कर्त्तरि षष्ठी ] न पुनः नैव, उपेक्ष्ये अवहेलनीये, "मर्मज्ञं न प्रकोपयेत्" इति न्यायात् सत्वरमेव गत्वा ते प्रसादनीये, अन्यथा सर्वमेव रहस्यं ते प्रकाशयिष्यत इति भावः ॥१३२॥

उच्चैरिति।—अथ सखीनामुक्तवचनश्रवणानन्तरं, राजा नलः, ताः सखीः, उच्चैः तारस्वरेण, तासां तदा दूरप्रयाणादिति भावः, ऊचे बभाषे; "उच्चैरुवाचिरे राज्ञा" इति पाठान्तरम्। किमिति? वः युष्माकम्, इयम् एषा, सखी वयस्या दमयन्ती, इदं वक्ष्यमाणम्, आह वक्ति; किमिति? एताभ्यां कला-तत्त्वसखीभ्यां, मम मे, मर्म रहस्यवृत्तान्तः, श्रुतम् आकर्णितं, न तु दृष्टम्; मया भैम्या तु, एतयोः कला-तत्त्वपक्षयोः, मर्म रहस्यं, गोपनीयाङ्गमित्यर्थः, दृष्टं प्रत्यक्षी-कृतम्, आर्द्रीभूतवस्त्राभ्यन्तरादिति भावः; श्रवणाद्दर्शनस्य आधिक्यविश्वास्यतया अहमपि सर्वमेव प्रकाशयितुं शक्नोमीति मर्मश्रवणात्तद्दर्शनं दुःसहमिति तात्पर्यम् ॥ १३३ ॥

मद्विति।—किञ्च, हे सख्यः! मया दमयन्त्या सह, विरोधि-

धौतेऽपि कीर्त्तिधाराभिश्चरिते चारुणि द्विषः ।
मृषामषीलवैर्लक्ष्म लेखितुं के न शिल्पिनः ? ॥ १३५ ॥
ते सख्यावाचचक्षाते न किञ्चित ब्रूवहे बहु ।
वक्ष्यावस्तत्परं यस्मै सर्वां निर्वासिता वयम् ॥ १३६ ॥

तयोः सञ्जातवैरयोः, बहिष्करणानुमोदनात् शत्रुभावापन्नयो-रित्यर्थः, एतयोः सख्योः, वाचि वचने, न श्रद्धातव्यं न विश्वसितव्यं, युष्माभिरिति शेषः, तथा हि, विधिः ब्रह्मा, इमे सख्यौ, माया कपटता, मिथ्या अनृतं, तयोः सिंहासने भद्रासने, अभ्यषिञ्चत जलवर्षणेन अभिषिक्तवान्, मिथ्याकपटतयोः आकरत्वेन कल्पितवानित्यर्थः, तस्मात् मयि मिथ्यावरणस्य सर्वथा सम्भावनासत्त्वात् एतयोः मिथ्याप्रलापो न श्रद्धेयः इति निष्कर्षः ॥ १३४ ॥

धौतेऽपीति ।—कीर्त्तिधाराभिः यशःप्रवाहैः, धौते विशुद्धे, अत एव चारुणि मनोहरेऽपि, द्विषः शत्रोः, चरिते स्वभावे, मृषामषीलवैः मृषा मिथ्यादोषारोप एव, मषी "कालि" इति प्रसिद्धलेखनसाधनद्रव्यविशेषः, तल्लवैः तद्बिन्दुभिः, अल्पत्वात् किञ्चिन्मात्रैरिति भावः, लक्ष्म कलङ्क, लेखितुं चित्रितुम, उत्पाद-यितुमिति यावत्, के, जना इति शेषः, न शिल्पिनः ? शिल्पकुशलाः न ? अपि तु सर्वेऽपि कुशलाः एवेत्यर्थः, भवन्तीति शेषः, मम शुभ्रे चरितेऽपि इमे मिथ्याकलङ्कम् अवश्यमेव आविष्कुर्य्यातामिति भावः ॥ १३५ ॥

ते इति ।—ते सख्यौ कला तद्वयस्या च, आचचक्षाते ऊचतुः ; किमिति ? बहु भूरि, किञ्चित् किमपि, न ब्रूवहे न कथयाव, आवामिति शेषः, परं केवलं, तत् तत्प्रयोजन-मात्रमेव, वक्ष्यावः कथयिष्यावः, यस्मै यत्प्रयोजनाय, वयं सर्वाः

स्थापत्यैर्न स्म विद्तस्ते वर्षीयस्त्वचलत्करैः।
क्षतामपि तथावाचि करकम्पेन वारणाम्॥ १३७॥
अपयातमितो धृष्टे! धिग् वामश्लीलशीलताम्।
इत्युक्ते चोक्तवन्त्यश्च व्यतिद्राते स्म तं भिया॥ १३८॥

समस्ताः सख्यः, निर्वासिताः निष्कासिताः, गृहादिति शेषः, सुरतार्थम् एव युवाभ्यां वयं सर्वा एव निष्कासिता इत्येवं सर्वत्र वदिष्यावः नान्यत् किञ्चनेति तात्पर्य्यम॥ १३६॥

स्थापत्यैरिति।—ते कला तत्सख्यौ, वर्षीयस्त्वेन वृद्धत्वेन हेतुना, ["प्रियस्थिर—"इत्यादिना वृद्धशब्दस्य ईयसुनि वर्षादेशः] चलत्करैः स्वभावत एव कम्प्रहस्तैः, स्थानां दाराणां पतयः पालकाः स्थपतयः, त एव स्थापत्याः कञ्चुकिनः तैः ("सौविदल्लाः कञ्चुकिनः स्थापत्याः" इत्यमरः) करकम्पेन हस्तचालनेन, क्षतामपि विहितामपि, तथावाचि तादृशवाक्यप्रयोगे, वारणा निवारणं, न विदित स्म न बुध्येते स्म, वारणाय कृते करकम्पे जराजन्यकम्पभ्रमादिति भावः॥ १३७॥

अपयातमिति।—धृष्टे! हे प्रगल्भ! इतः अस्मात् देशात्, अपयातं बहिर्गच्छतं, युवामिति शेषः, वां युवयोः, अश्लीलशीलतां ग्राम्यभाषणस्वभावं, धिक् निन्दामः, इति एवम्, उक्ते कथिते, भर्त्सिते इति यावत्, कञ्चुकिभिरिति शेषः, ते कलातत्सख्यौ उभे, भिया भयेन, कञ्चुकिनां प्रहारादिति भावः, तथा इति इत्थम्, उक्तवन्त्यः कथितवत्यः, भर्त्सितवन्त्यः इति यावत्, तं कञ्चुकिनं, भिया च जरत्ययोः क्रोधभयेन, व्यतिद्राते स्म परस्परव्यतिहारेण पलायेते स्म पलायन्ते स्म च, गृहस्य निभृततानिधानार्थमिति भावः। [द्रा कुत्सायां गताविति धातोर्लटि "कर्त्तरि कर्मव्यतिहारे" इत्यात्मनेपदम्, अदादित्वात्

आह स्म तद्गिरा ह्रीणां प्रियां नतमुखीं नलः ।
ईदृग्भण्डसखीकाऽपि निस्त्रपा न मनागपि ॥ १३९ ॥
अहो ! नापत्रपाकं ते जातरूपमिदं मुखम् ।
नातितापाङ्गनेऽपि स्यादितो दुर्वर्णनिर्गमः ॥ १४० ॥

---

शपो लुक् । अत्र प्रथमपुरुषस्य द्विवचन-बहुवचनयोः समानं रूपम्, एवं ते इत्यत्रापि स्त्रियां द्वित्वे पुंसि बहुत्वे च समानरूपम् । ॥ १३८ ॥

आहेति ।—अथ नलः नैषधः, तयोः कला-तत्सख्योः, गिरा "वक्ष्याव तत्परम" इत्यादिकया वाचा, ह्रीणां लज्जिताम्, अत एव नतमुखीम अवनतवदनां, प्रियां दमयन्तीम्, आह स्म उवाच; किमित्याकाङ्क्षायां साईश्लोकेनाह, ईदृशी एवम्भूते, भण्डे निर्लज्जे सख्यौ वयस्ये यस्याः सा तादृशी अपि ईदृग्भण्ड-सखीकाऽपि [ "नद्यृतश्च" इति कप् समासान्तः ] त्वमिति शेषः, मनाक् अपि ईषदपि, निस्त्रपा निर्लज्जा, न, भवसीति शेषः, यस्याः खलु सख्यः एवं निर्लज्जाः, तस्यास्तवापि नैर्लज्ज्यमेव युज्यते, भवती तु न तादृशीति महांस्ते चारित्रोत्कर्षः इति भावः ॥ १३९ ॥

अहो इति ।—जातरूपं जातं सम्भूतं, रूपं सौन्दर्य्यं यस्य तादृशं, सम्पन्नसौन्दर्य्यं, स्वर्णसदृशमित्यर्थः, सुवर्णं च ( "सुवर्ण-चामीकरं जातरूपम्" इत्यमरः ) इदं दृश्यमानं, ते तव, मुखं वदनम, अपगता दूरीभूता, त्रपा लज्जा यस्मात् तत् अपत्रपं, [ शैषिकः कप्-प्रत्ययः ] तत् न भवतीति नापत्रपाकं सलज्जमिति यावत्, [ नञर्थेन न-शब्देन समासः ] दृश्यत इति शेषः, "लज्जा रूपं कुलस्त्रीणाम्" इति नीतिशास्त्रात् सलज्जं ते वदनम् अतीव रमणीयदर्शनं जातमिति निष्कर्षः; अन्यत्र—पक्षे

तामथैष हृदि न्यस्य टटौ तल्पतले तनुम्।
निमील्य च तदीयाङ्ग-सौकुमार्य्यमसिस्वदत्॥१४१॥
न्यस्य तस्याः कुचद्वन्द्वे मध्येनीवि निवेश्य च।
स पाणिः सफलं चक्रे तत्करग्रहणश्रमम्॥ १४२॥

...त्रीकृतस्य, कण्टकवेधयोग्यतनकारितस्येत्यर्थः, यद्वा—पक्वे पात्रविशेषे इत्यर्थः, द्रवीकरणार्थं मृद्भाजनविशेषे इति यावत्, पाकः दग्धीकरणं द्रवीकरणं वा, विशुद्धितासम्पादनाय इति भावः, पक्वपाक तद्रहितम् अपक्वपाकं न भवतीति नापक्वपाकं पक्वपाकविशुद्धमिवेत्यर्थः, अतितापार्जनेऽपि सखीकृतपरिहास-जनितलज्जानिबन्धनपीडाप्राप्तावपि, अत्यन्तदाहकरणेऽपि च, इतः अस्मात्, शोभनवर्णयुक्तात् मुखात्, सुवर्णाच्च, दुर्वर्णनिर्गमः कर्कशवचननिर्गमः, श्यामिकानिर्गमश्च, न स्यादिति विरोधः, अत एव अहो!! आश्चर्य्यं, सखीकृतप्रबलदुःखोत्पातेऽपि मुखात् दुरक्षरनिर्गमनं न स्यादिति चित्रमिति विरोधपरिहारात् विरोधाभासोऽलङ्कारः॥ १४०॥

तामिति।—अथ उक्तरूपभाषणानन्तरम्, एषः नलः, तां प्रियां, हृदि वक्षसि, न्यस्य निधाय, तल्पतले शय्योपरि, तनुं स्वदेहं, ददौ स्थापितवान्, शयितवान् इत्यर्थः, तथा निमील्य चक्षुषी मुद्रयित्वा, इत्यानन्दानुभवोक्तिः, प्रगाढ़-सुखानुभवकाले चक्षुर्निमीलनस्य लोकदृष्टत्वादिति बोध्यम्; तदीयाङ्गस्य प्रियाशरीरस्य, सौकुमार्य्यं मार्दवम्, असिस्वदत् अनुबभूव इत्यर्थः। [ स्वदेर्णौ चङ्युपधाह्रस्वः ]॥ १४१॥

न्यस्येति।—स नलः, तस्याः भैम्याः, कुचद्वन्द्वे स्तनयुगे, न्यस्य निधाय, पाणिमिति शेषः, मध्येनीवि नीवीमध्ये, कटी-वस्त्रबन्धनमध्ये इत्यर्थः, [ "पारे मध्ये षष्ठ्या वा" इत्यव्ययी-

स्थापितामुपरि स्वस्य तां मुदा मुमुदे वहन्।
तदुद्वहनकर्त्तृत्वमाचष्ट स्पष्टमात्मनः ॥ १४३ ॥
स्विद्यत्कराङ्गुलीलुप्त-कस्तूरीलेपमुद्रया।
फूत्कार्य्यपीडितौ चक्रे स सखीषु प्रियास्तनौ ॥ १४४ ॥

भावः ] निवेश्य प्रवेश्य च, स्वपाणिमिति शेषः, पाणेः स्वकरस्य, तत्करग्रहणश्रमं दमयन्तीपाणिग्रहणायासं, सफलं सार्थकं, चक्रे विदधे, तादृग्विधः प्रियास्पर्शस्तस्य महदानन्दफल-मित्यर्थः ॥ १४२ ॥

स्थापितामिति।—मुदा हर्षेण, स्वस्य आत्मनः, उरसि वक्षसि, स्थापितां निहितां, तां प्रियां, वहन् धारयन्, मुमुदे आननन्द, नलः इति शेषः, तथा आत्मनः स्वस्य, तस्याः भैम्याः, उद्वहने विवाहे, कर्त्तृत्वम् अधिकारित्वं, स्पष्टं सुव्यक्तम्, आचष्ट कथयामास, अनुद्वहतः एवमुरसि वहनायोगादिति भावः ॥ १४३ ॥

स्विद्यदिति।—सः नलः, प्रियायाः भैम्याः, स्तनौ कुचौ, स्विद्यन्तीभिः सत्त्वोदयात् घर्मोदकार्द्रीभवन्तीभिः, कराङ्गुलीभिः निजकरशाखाभिः, लुप्तः प्रमृष्टः, यः कस्तूरीलेपः मृगमदप्रदेहः, मृगमदकृतपत्रावलीत्यर्थः, सः एव मुद्रा चिह्नं स्तनपीडनविषये इति भावः, तया, सखीषु वयस्यासु विषये, फूत्कार्य्यं फूत्कारेण उच्चैस्तरमुखानिलेन प्रशमनीयं, पीडितं पीड़नं, पीड़नजनित-वेदना इत्यर्थः, ययोः तौ तादृशौ फूत्कार्य्यपीडितौ, चक्रे विदधे, नलः भैमीकुचौ तथा पीड़यामास, यथा नलस्य सात्त्विकभावोत्थ-घर्मोदकक्लिन्नाङ्गुलीभिः कुचयोः पत्रलेखाः प्रोञ्छिता जायन्ते, सख्यश्च तद्दृष्ट्वा प्रगाढ़पीडनेन कुचयोर्वेदनां तीव्रामनुमाय फूत्कारेण तां प्रशमयितुम् अयतिषत इति निष्कर्षः ॥ १४४ ॥

तत्कुचे नखमारोप्य चमत्कुर्वंस्तयेक्षितः।
सोऽवादीत्तां हृदिस्थं ते किं मामभिनदेष न?॥ १४५॥
अहो! अनौचितीयं ते हृदि शुद्धेऽप्यशुद्धवत्।
अङ्कः खलैरिवाकल्पि नखैस्तीक्ष्णमुखैर्मम॥ १४६॥

---

तदिति।—स नलः, तत्कुचे दमयन्तीस्तने, नखं कररुहम्, आरोप्य निखाय, चमत्कुर्वन् स्वयमेव आश्चर्येण सञ्जातरोमाञ्चो भवन्, तथा तया दमयन्त्या, ईक्षितः सस्मितमवलोकितश्च सन्, एष नखः, ते तव, हृदिस्थं हृदयान्तर्गतं, ["सुपि स्थः" इति क-प्रत्ययः "हृद्द्युभ्याञ्च" इत्युपसङ्ख्यानात् सप्तम्याः अलुक्] मां नलं, न अभिनत् न व्यदारयत्, किम्? अपि तु अभिनदेव, नो चेत् ममाङ्गेष्वपि कथं चमत्कारनिबन्धना रोमाञ्चाः समुत्पन्ना इति भावः, इति तां दमयन्तीम्, अवादीत् अकथयत्। अत्र भैमीकुचनिष्ठस्य नखक्षतस्य नलहृदये चमत्कारजननात् असङ्गत्यलङ्कारः, "कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिः" इति लक्षणात्॥ १४५॥

अहो इति।—हे प्रिये! तीक्ष्णमुखैः निष्ठुरवाग्भिः, खलैरिव असज्जनैरिव, तीक्ष्णमुखैः निशिताग्रैः, मम मे, नखैः कररुहैः, शुद्धे अदुष्टेऽपि, ते तव, हृदि हृदये, कुचे इति यावत्, अशुद्धवत् अशुद्धे इव, सदोषे इवेत्यर्थः, ["तत्र तस्येव" इति वति-प्रत्ययः] अङ्कः कलङ्कः, चिह्नञ्च, अकल्पि कल्पितः, कृत इत्यर्थः, अहो! इति खेदे, इयं निर्दोषेऽपि दोषकल्पना, अनौचिती अयुक्तम्, अभूदिति शेषः। [अहो इति "ओत्" इति प्रगृह्यसंज्ञायां "प्लुतप्रगृह्या अचि नित्यम्" इति प्रकृतिसन्धिः]॥ १४६॥

यच्चुम्बति नितम्बोरू यदालिङ्गति च स्तनौ।
भुङ्क्ते गुणमयं तत्ते वासः शुभदशोचितम् ॥ १४७ ॥
लीनचीनांशुकं स्वेदि दरालीक्यं विलोकयन्।
तन्नितम्बं स निःश्वस्य निनिन्द दिनदीर्घताम् ॥ १४८ ॥

यदिति।—हे प्रिये! गुणमयं सूक्ष्मतन्तुरचितं सौशील्यादिविशिष्टञ्च, ते तव, वासः वसनं, कश्चित् सुभगपुरुषश्च, [ कर्तृ ] नितम्बौ ऊरू च नितम्बोरू नितम्बद्वयं सक्थिद्वयञ्च, [ प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावः ] यत् चुम्बति स्पृशति, ओष्ठाधरस्पृष्टं करोति च, यच्च स्तनौ कुचौ, आलिङ्गति आश्लिष्यति, तत् शुभदशानां शुभाना शोभनानां, दशाना प्रान्तवर्त्तितन्तूनां, ज्योतिःशास्त्रप्रसिद्धशुक्रादिशुभग्रहावस्थानाच्च, उचितम् अर्हं, भुङ्क्ते एकत्र—स्पर्शरूपं भोगं करोति, सुदृश्यदशासमन्वितवसनस्यैव तव प्रियत्वेन तद्धारणादिति भावः; अन्यत्र—भोगात्मकं सुखमनुभवति, शुभग्रहाणां दृष्टिं विना तव नितम्बादिस्पर्शरूपभोगासम्भवादिति भावः। ("दशाऽवस्थादीपवर्त्त्योः वस्त्रान्ते भूम्नि योषिति" इति मेदिनी) "शुभग्रहदशायां हि भुङ्क्ते जनः शुभं फलम्" इति ॥ १४७ ॥

लीनेति।—सः नलः, स्वेदि सात्त्विकोदयात् घर्माक्तम्, अत एव लीनं नितम्बेन सह एकीभूतभावेन संलग्नं, चीनांशुकं सूक्ष्मवस्त्रविशेषो यत्र तादृशम्, अत एव दरालोक्यम् ईषल्लक्ष्यं, तस्याः भैम्याः, नितम्बं श्रोणीदेशं, विलोकयन् पश्यन्, निःश्वस्य दीर्घं श्वासवायुं त्यजन्, इति विषादानुभवोक्तिः, दिनस्य दिवसस्य, दीर्घताम् अधिककालं व्याप्य स्थायितां, निनिन्द गर्हयामास, दिवा सुरतनिषेधात् तत्करणाक्षमत्वात् विषादं प्राप दिवावसानमभिललाष च इति भावः ॥ १४८ ॥

देशमेव ददंशासौ प्रियादन्तच्छदान्तिकम् ।
चकाराधरपानस्य तत्रैवालीकचापलम् ॥ १४९ ॥
न क्षमे चपलापाङ्गि ! सोढुं स्मरशरव्यथाम् ।
तत् प्रसीद प्रसीदेति स तां प्रीतामकोपयत् ॥ १५० ॥
नेत्रे निषधनाथस्य प्रियाया वदनाम्बुजम् ।
ततस्तनतटौ ताभ्यां जघनं घनमीयतुः ॥ १५१ ॥

---

देशमिति ।—असौ नलः, प्रियादन्तच्छदस्य भैम्याः अधरस्य, अन्तिकं समीपवर्त्तिनं, देशं स्थानमेव, चिबुकमेवेत्यर्थः, ददंश दष्टवान्, तथा तत्रैव दष्टदेशे एव, अधरपानस्य निम्नौष्ठचुम्बनस्य, अलीकचापलं मिथ्याचपलता, निरर्थकप्रयासमित्यर्थः, चुम्बनशब्दतुल्यं शब्दमिति भावः, चकार विदधे, चुम्बनस्य रत्युद्दीपकत्वात् रमणाङ्गत्वाच्च दिवा च रमणनिषेधात् तथा "रतिकाले मुखं स्त्रीणां शुद्धमाखेटके शुनाम्" इति स्मृत्या तस्य कालान्तरे अशुद्धत्वाच्च न तु अधरं चुचुम्ब इति भावः ॥ १४९ ॥

अथास्य कालक्षेपत्वलक्षणमौत्सुक्यमेव श्लोकद्वयेनाह, नेत्यादि ।—चपलापाङ्गि ! हे चञ्चलाक्षि ! स्मरशरैः कामबाणैः, या व्यथा वेदना तां तत्कृतां पीडां, सोढुं क्षन्तुं, न क्षमे न शक्नोमि, तत् तस्मात्, प्रसीद प्रसीद प्रसन्ना भव प्रसन्ना भव, सुरताय सदया भव इति भावः, इत्येवमुक्त्वा, सः नलः, प्रीतां परिहासादिभिः प्रियवाक्यशतैन च मुदिताम् अपि, तां प्रियाम्, अकोपयत् अक्रोधयत्, दिवा मैथुनस्य निषिद्धत्वात् तत्प्रार्थनया कोपः इति बोध्यं, तादृशभावश्च कालक्षेपायैव इत्यपि मन्तव्यम् ॥ १५० ॥

नेत्रे इति ।—निषधनाथस्य नलस्य, नेत्रे दृशौ, प्रियायाः कान्तायाः, वदनाम्बुजं मुखकमलम्, ईयतुः प्रापतुः, ततः

इत्यधीरतया तस्य हठवृत्तिविशङ्किनी ।
झटित्युत्थाय सोत्कण्ठमसावन्वसरत् सखीः ॥ १५२ ॥
न्यवारीव यथाशक्ति स्यन्दं मन्दं वितन्वता ।
भैमी कुचनितम्बेन नलसम्भोगलोभिना ॥ १५३ ॥
अपि श्रोणिभरस्थैर्यां धर्त्तुं तामशकन्न सः ।
तदङ्गसङ्गजस्तम्भो गजस्तम्भोरुदोरपि ॥ १५४ ॥

वदनाम्बुजात्, स्तनतटौ कुचौ सङ्गभङ्गौ, ईयतु, ताभ्यां स्तनतटाभ्यां समीपात्, घनं निविडं, जघनं नितम्बम्, ईयतुः, अतीव कामपीडितत्वादिति सर्वत्र भावः, अत्र नेत्रयोः क्रमात् अनेकस्थानसंवादात "क्रमेणैकमनेकस्मिन्" इत्याद्युक्तलक्षणपर्य्यायालङ्कारः ॥ १५१ ॥

इतीति।—इति उक्तप्रकारया, तस्य स्वप्रियस्य नलस्य, अधीरतया कामजचाञ्चल्येन हेतुना, हठवृत्तिं बलात्कारप्रवृत्तिं, विशङ्कते सम्भावयतीति सा तादृशी, असौ भैमी, झटिति सहसा, उत्थाय उद्गम्य, नलवक्षोदेशादिति भावः, सोत्कण्ठं सोत्कलिकं, त्वरितप्रस्थानार्थमुत्सुका सतीत्यर्थः, सखीः वयस्याः, अन्वसरत् अन्वगच्छत् ॥ १५२ ॥

न्यवारीवेति।—भैमी दमयन्ती, नलस्य नैषधस्य, सम्भोगलोभिना मर्दनस्पर्शनादिरूपसम्भोगलालसेन, कुचनितम्बेन स्तनद्वयेन जघनयुग्मेन च, [प्राण्यङ्गत्वादेकवद्भावः] अत एव स्यन्दं भैम्या एव गमनं, मन्दं मन्थरं, स्वल्पीभूतमित्यर्थः, वितन्वता कुर्वता सता, गतिं प्रतिबध्नता इत्यर्थः, आत्मनोऽतिपीनत्वेन गुरुभारत्वादिति भावः, यथाशक्ति सामर्थ्यानुसारेण, न्यवारीव निवारिता, सम्भोगप्रतिबन्धात् खिन्नेन सता अलब्धभोगा मा गच्छ इति न्यषेधीव इत्युत्प्रेक्षा ॥ १५३ ॥

आलिङ्गालिङ्ग तन्वङ्गि! मामित्यर्द्धगिरं प्रियम्।
स्मित्वा निवृत्य पश्यन्ती द्वारपारमगादसौ ॥ १५५ ॥
प्रियस्याप्रियमारभ्य तदन्तर्दूनयाऽनया।
भैके श्यालीनयाऽऽलिभ्यो न गन्तुं न निवर्त्तितुम् ॥१५६॥

अपीति।—सः नलः, गजस्तम्भी आलाने इव, हस्तिबन्धन-स्थूणे इवेत्यर्थः, उरू महान्तौ, दोषौ भुजौ यस्य सः तादृशोऽपि महाभुजोऽपि, ("भुजबाहू प्रवेष्टो दोः" इत्यमरः) तस्याः दमयन्त्याः, अङ्गसङ्गात् देहस्पर्शात्, जायते उत्पद्यते इति तादृशः, स्तम्भः निष्क्रियाङ्गतालक्षणसात्त्विकविकारः यस्य सः तादृशः सन्, श्रोणिभरेण नितम्बभारेण, स्वैरां मन्दां, मन्दगमनामपि इत्यर्थः, ("मन्दस्वच्छन्दयोः स्वैरम्" इत्यमरः) तां प्रियां, धर्त्तुं गृहीतुं, निरोद्धुमिति यावत्, न अशकत् न समर्थोऽभूत्, स्वय निर्व्यापारस्य किं सहकारिसम्पदा? इति भावः ॥ १५४ ॥

आलिङ्गेति।—असौ भैमी, तन्वङ्गि! हे कृशाङ्गि! मां नलम्, आलिङ्ग आलिङ्ग आश्लिष आश्लिष, इति एवम्, अर्द्धा अन्यकर्त्तृकश्रवणभयात् अर्द्धस्फुटा, गीः वाक् यस्य तं तादृशं, प्रियं पतिं, स्मित्वा मन्दं हसित्वा, निवृत्य परावृत्य, पश्यन्ती अवलोकयन्ती सती, द्वारस्य कवाटस्य, पारं चरम-भागम्, अगात् गतवती, द्वारम् अतिचक्राम इत्यर्थः ॥ १५५ ॥

प्रियस्येति।—प्रियस्य पत्युः नलस्य, अप्रियम् अतिक्रम-रूपम् अप्रीतिजनकव्यापारं, तं विहाय गमनरूपव्यापार-मित्यर्थः, आरभ्य आचरित्वा, तेन अप्रियाचरणेन, तदित्यत्र "तम्" इति पाठे—तं पूर्वोक्तरूपमप्रियमित्यर्थः, अन्तः अन्तःकरणे, दूनया परितप्तया, ["ओदितश्च" इति निष्ठा-नत्वम्] श्यालीनया

अकथयदथ वन्दिसुन्दरो द्वाः-
सविधमुपेत्य नलाय मध्यमह्नः ।
जय नृप ! दिनयौवनोष्मतप्ता
प्लवनजलानि पिपासति क्षितिस्ते ॥ १५७ ॥
उपहृतमधिगङ्गमम्बु कम्बु-
च्छवि तव वाञ्छति केशभङ्गिमङ्गात् ।

अधृष्टया, स्वभावत एव सलज्जया इत्यर्थः, अनया भैम्या, आलिभ्यः सखीभ्यः, गन्तुम् अपि यातुमपि, ["गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" इति चतुर्थी] न शेके न शक्तं, [भावे लिट्] अन्तर्दूनत्वादिति भावः; तथा निवर्त्तितुं प्रियं प्रत्यागन्तुञ्च, प्रियमाभिमुख्येन प्रत्यावर्त्तनं कर्त्तुमित्यर्थः, न शेके इत्यनेनान्वयः, म्लानतयैवेति भावः, लज्जाविषादाभ्याम् उभयत आकृष्यमाणत्वादिति तात्पर्य्यम् ॥ १५६ ॥

अकथयदिति ।—अथ दमयन्तीनिर्गमनानन्तरं, वन्दिसुन्दरो कश्चित् वैतालिकस्त्री, शुद्धान्तःपुरे पुरुषप्रवेशनिषेधादिति भावः; द्वाःसविधं द्वारसमीपम्, उपेत्य समागत्य, नृप ! हे राजन् ! जय सर्वोत्कर्षेण वर्त्तस्व, अह्नः मध्यं मध्याह्नकालः समागत इत्यर्थः, अत एव दिनस्य दिवसस्य, यौवनं तारुण्यं, पूर्णावस्था इत्यर्थः, मध्याह्नः इति यावत्, तस्य ऊष्मणा सन्तापेन, तप्ता उष्णाभूता, क्षितिः धरणी, ते तव, प्लवनजलानि स्नानोदकानि, पिपासति पातुमिच्छति, तापस्य पिपासाहेतुत्वादिति भावः, इति नलाय नैषधाय, अकथयत् अवदत्, माध्याह्निकस्नानकालोऽयमवधार्य्यतामिति तात्पर्य्यार्थः ॥ १५७ ॥

उपेति ।—किञ्च, कम्बुच्छवि शङ्खच्छायं, शङ्खवत् शुभ्रप्रभ-

अनुभवितुमनन्तरं तरङ्गा-
समशमनस्वसृमिश्रभावशोभाम् ॥ १५८ ॥
तपति जगत एव मूर्द्ध्नि भूत्वा
रविरधुना त्वमिवाद्भुतप्रतापः।
पुरमथनमुपास्य पश्य पुण्यै-
रधरितमेनमनन्तरं त्वदीयैः ॥ १५९ ॥

मित्यर्थः, अविगङ्गं गङ्गायाः, [विभक्त्यर्थेऽव्ययीभावः] उपहृतम् आनीत, कलशेन गङ्गातः समानीतमित्यर्थः, अम्बु गाङ्गं जलम् इत्यर्थः, तत्र तं, कचभङ्ग्याः कुटिलकृष्णकुन्तल-जालस्य, सङ्गात् स्पर्शात्, अनन्तर सङ्गात् परमित्यर्थः, तरङ्गैः ऊर्मिभिः, असमायाः विषमायाः, निम्नोन्नतायाः इत्यर्थः, शमनस्वसुः अतिकृष्णायाः यमुनायाः, मिश्रभावस्य मेलनस्य, शोभां मान्दर्यम, अनुभवितं प्राप्तं, वाञ्छति इच्छति शुभ्रगङ्गा-जलमध्ये कुटिलकृष्णकेशकलापं निमज्ज्य स्नानं कुरु, ततश्च शुभ्रतरस्य गाङ्गजलस्य कृष्णतरकेशपाशसङ्गे प्रयागजलशोभा भविष्यतीति भावः। निदर्शनालङ्कारः॥ १ ८॥

तपतीति।—त्वम् इव भवानिव, अद्भुतप्रतापः आश्चर्यतेजः-सम्पन्नः, एकत्र—कोषदण्डजप्रभावशाली, अन्यत्र—मध्याह्न-कालिकप्रखरकरसम्पन्न इत्यर्थः, रविः सूर्यः, अधुना इदानीं, जगतः पृथिव्याः, मूर्द्ध्नि एव शिरसि एव, आकाशस्य ऊर्ध्वेति यावत्, भूत्वा स्थित्वा, तपति सन्तापं ददाति, एकत्र—दुर्जनान् शास्ति, अन्यत्र—जगन्ति सन्तापयतीत्यर्थः, अनन्तरं ततश्च स्नानोत्तरकालं, पुरमथनं शिवम्, उपास्य अर्चयित्वा, त्वदीयैः पुण्यैः तव सेवासुकृतैः, इतीति शेषः, अधरितं मस्तको-परिभागात् च्यावितं, तदा मध्याह्नापगमात् अधस्तात्

आनन्दं हठमाहरन्निव हरध्यानार्चनादिक्षण-
व्यासत्तावपि भूपतिः प्रियतमाविच्छेदखेदालसः ।
पक्षद्वारदिशं प्रति प्रतिमुहुर्द्राङ्निर्गतप्रेयसी-
प्रत्यावृत्तिधिया दिशन् दृशमसौ निर्गन्तुमुत्तस्थिवान् ॥ १६० ॥
श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
अन्याक्षुण्णरसप्रमेयभणितौ विंशस्तदीये महा-
काव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः ॥ १६१ ॥

---

गतमित्यर्थः, एन रवि, पश्य अवलोकय, प्रणामार्थमिति भावः, पुरहरप्रसादात् सूर्य्याभ्यधिकप्रतापा भविष्यसि इत्यर्थः ॥ १५८ ॥

आनन्दमिति ।—हरस्य शिवस्य, ध्यानार्चनादिक्षणस्य मनःसमाधानपूर्वकचिन्तापूजादिसमयस्य, आसत्तौ समीपवर्त्तित्वेऽपि, प्रियतमाविच्छेदखेदेन प्रेयसीवियोगदुःखेन, अलसः जडः, कर्त्तव्यविमुख इत्यर्थः, असौ अयं, भूपतिः राजा नलः, द्राक् झटिति, निर्गतायाः निष्क्रान्तायाः, प्रेयस्याः प्रियतमाया भैम्याः, प्रत्यावृत्तिधिया पुनरागमनबुद्ध्या, पक्षद्वारदिशं प्रति पार्श्ववर्त्तिकपाटप्रदेशमुद्दिश्य, तेनैव द्वारेण प्रत्यागमनसम्भवादिति भावः, प्रतिमुहुः पुनः पुनः, दृशं दृष्टिं, दिशन् व्यापारयन्, हठं बलपूर्वकं यथा तथा, स्वत एव आनन्दलाभासम्भवादिति भावः, आनन्दं प्रेयसीसमागमरूपम्, आहरन् इव परावर्त्तयन् इव, निर्गन्तुं गृहात् निर्यातुम्, उत्तस्थिवान् शय्यातः उज्जगाम ॥ १६० ॥

श्रीहर्षमिति ।—अन्यैः अपरैः, अक्षुण्णाः अस्पृष्टाः, पूर्वम् अनालोचिता इत्यर्थः, रसाः शृङ्गारादयः, प्रमेयाः वाक्यार्थाश्चयाः, यासु भणितिषु वाक्येषु तस्मिन्, [ "तृतीयादिषु

# एकविंशः सर्गः ।

---

तं विदर्भरमणीमणिसौधादुज्जिहानमनुदर्शितसेवैः ।
अर्पणान्निजकरस्य नरेन्द्रैरात्मनः करदता पुनरूचे ॥ १ ॥
तस्य चीनसिचयैरपि बद्धा पद्धतिः पदयुगात् कठिनेति ।
तां व्यधत्त शिरसा खलु मौल्या राजराजिरभितः प्रणमन्ती ॥२॥

---

भाषितपुंस्कं पुंवत्" इत्यादिना पुंवद्भावः । तदीये श्रीहर्षकृते, महाकाव्ये, । विंशतीति पूरणे डटि, "ति विंशतेः" इति ति-शब्दस्य लोपः ] ; गतमध्यत ॥ १६१ ॥

---

तमिति ।—विदर्भरमण्या वैदर्भ्या दमयन्त्याः, मणिसौधात् रत्नमयप्रासादात्, उज्जिहानं निर्गच्छन्तं, तं नलम्, अनु प्रति, तं लक्ष्यीकृत्य इत्यर्थः, दर्शितसेवैः दर्शिता अन्तःपुरद्वारि प्रणामादिना विज्ञापिता, सेवा आराधना, आनुगत्यमित्यर्थः यैः तैः, [ अनोः लक्षणार्थे कर्मप्रवचनीयत्वात्तद्योगे द्वितीया ] नरेन्द्रैः अधीनराजन्यवर्गैः, निजकरस्य स्वस्वहस्तस्य, अर्पणात् दानात्, सोपानावतरणसमये नलाय हस्तावलम्बनदानादित्यर्थः, आत्मनः स्वस्य, करं हस्तं बलिं च ददातीति करदः, ( "बलिहस्तांशवः कराः" इत्यमरः ) तस्य भावः तत्ता, पुनः भूयोऽपि, बलिदानादेव करदत्वे सिद्धे पुनर्हस्तदानेन करदता इति पुनरुक्तिरिति भावः, ऊचे अभाषि । एतेन नलस्य चक्रवर्त्तित्वं द्योत्यते ॥ १ ॥

तस्येति ।—राजराजिः सामन्तनृपपङ्क्तिः, अभितः समन्तात्, प्रणमन्ती आभूमि शिरो नमयन्ती सती, चीनसिचयैः चीनदेशीयपट्टवस्त्रैः, बद्धा आच्छादिता अपि, पद्धतिः मार्गः,

द्रागुपाक्रियत तस्य नृपैस्तद्दृष्टिदानबहुमानकृतार्थैः ।
स्वस्वदिश्यमथ रत्नमपूर्वं यत्नकल्पितगुणाधिकचित्रम् ॥ ३ ॥
अङ्गुलीचलनलोचनभङ्गिभ्रूतरङ्गविनिवेदितदानम् ।
रत्नमन्यनृपढौकितमन्ये तत्प्रसादमलभन्त नृपास्तत् ॥ ४ ॥

तस्य नलस्य, पदयुगात् चरणयुगलात्, कठिना कठोरा, इति हेतोः, [ "पञ्चमी विभक्तेः" इति पञ्चमी ] तां पद्धतिं, शिरसां मूर्ध्नां, माल्यैः मालाभिः साधनैः, प्यधत्त पिहितवती, खलु इति उत्प्रेक्षायाम् ; पदयुगलादपि भूमेः कठिनत्वात् तत्र पदविन्यासे वेदनाप्राप्तिसम्भवादिति भावः ॥ २ ॥

द्रागिति ।—अथ प्रणामानन्तरं, तस्य नलस्य, दृष्टिदानम् अक्षिनिक्षेप एव, तेषु नृपेषु तदानीतरत्नेषु च इति भावः, बहुमानः समादरः, तेन कृतार्थैः सफलश्रमैरित्यर्थः, नृपैः सामन्तराजभिः, स्वेषां स्वेषां दिशि भवं स्वस्वदिश्यं निजनिज-देशोत्पन्नं, [ "तत्र भवम्" इति यत्-प्रत्ययः ] यत्नेन समादरेण, कल्पितैः शाणवर्षणादिना सम्पादितैः, गुणैः औज्ज्वल्य-सुदृश्यत्वादिधर्मैः, अधिकं प्रकृष्टं, श्रेष्ठमित्यर्थः, चित्रम् आश्चर्यम्, अपूर्वं पूर्वं केनाप्यप्राप्तं, रत्नं मणिः, तस्य नलस्य सम्बन्धे, द्राक् शीघ्रं, स्वमतिक्रम्य गमनसम्भावनया इति भावः, उपाक्रियत उपायनीकृतम् ॥ ३ ॥

अङ्गुलीति ।—अन्ये अपरे, नृपाः राजानः, अङ्गुलीचलनेन अङ्गुलीकम्पनेन, अङ्गुलीनिर्देशेनेत्यर्थः, लोचनभङ्ग्या नेत्र-भङ्गेन, भ्रूतरङ्गेण भ्रुवोश्चालनेन च, विनिवेदितं विज्ञापितं, दानं त्यागः यस्य तत् तथोक्तम्, अन्यैः अपरैः, नृपैः राजभिः, ढौकितम् उपहृतं, तत् पूर्वोक्तं रत्नं, तस्य नलस्य, प्रसादम् अनुग्रहस्वरूपम्, अलभन्त प्राप्नुवन्, एकस्मात् लब्धं रत्नजातम्

तानसौ कुशलसूनृतसेकैस्तर्पितानथ पितेव विसृज्य।
अस्त्रशस्त्रखुरलीषु विनिन्ये शैष्यकोपनमितानमितौजाः॥ ५॥
मर्त्त्यदुष्प्रचरमस्त्रविचारञ्चारु शिष्यजनतामनुशिष्य।
स्वेदबिन्दुकितगोधिरधीरं स श्वसन्नभवदाप्लवनेच्छुः॥ ६॥
यक्षकर्दमसृदून्मृदिताङ्गः प्राक् कुरङ्गमदमौलितमौलिम्।

---

अन्यस्मै प्रदत्तं, न तु कोषागारे निक्षिप्तम् इति अस्य दातृत्वम् अनुजीविनोषणं विवेकित्वञ्चोक्तम॥ ४॥

तानिति।—अथ उपहारग्रहणदानानन्तरम्, अमितम् अतुलनीयम्, ओजः तेजः यस्य तादृशः, असौ नलः, कुशलस्य कुशलप्रश्नस्य, सूनृतस्य सत्यप्रियवचनस्य च, पीयूषरूपस्येति भावः, सेकैः वर्षणैः, उक्तिभिरित्यर्थः, तर्पितान् प्रीणितान्, तान् नृपान्, विसृज्य सम्प्रेष्य, गमनाय अनुमत्य इत्यर्थः, शैष्यकेण शिष्यत्वेन, ["योपधाद्गुरूपोत्तमाद्वुञ्"] उपनमितान् समेतान्, युद्धशिक्षार्थं शिष्यभावेन समागतानित्यर्थः, नृपानिति शेषः, पितेव जनक इव, अस्त्रेषु धनुरादिषु, शस्त्रेषु खड्गादिषु, खुरलीषु भ्रमणविशेषेषु, अस्त्रशस्त्राणां खुरलीषु प्रयोगसंहारविषयेषु इति वा, विनिन्ये शिक्षितवान्॥ ५॥

मर्त्त्येति।—सः नलः, मर्त्त्येषु मनुष्यलोकेषु, दुष्प्रचरम् अविद्यमानप्रसरम्, अस्त्रविचारम् अस्त्रशिक्षा, शिष्यजनतां शिष्यभूतनृपसमूहं, चारु सुष्ठु यथा भवति तथा, अनुशिष्य शिक्षयित्वा, स्वेदेन घर्मोदकेन, बिन्दुकितः सञ्जातबिन्दुकः, गोधिः ललाटं यस्य सः तादृशः सन्, ("ललाटमलिकं गोधिः" इत्यमरः) अधीरम् अस्थिरं यथा भवति तथा, श्वसन् श्रमजनितदीर्घदीर्घश्वासं त्यजन्, आप्लवनं स्नानं, तदिच्छुः तदभिलाषी, अभवत् अजायत॥ ६॥

गन्धवाभिरनुबन्धितभृङ्गैरङ्गनाः सिषिचुरुच्चकुचास्तम् ॥ ७ ॥
भूभृतं पृथुतपोघनमाप्तस्तं शुचिः स्नपयति स्म पुरोधाः।
सन्दधज्जलधरस्खलदोघास्तीर्थवारिलहरीरुपरिष्टात् ॥ ८ ॥

यच्चेति।—उच्चाः उन्नताः, कुचाः स्तना यासां तादृश्यः, अङ्गनाः स्त्रियः, प्राक् प्रथमं, यक्षकर्दमेन कर्पूरादियोगजेन सुगन्धिस्नानीयचूर्णेन, ("कर्पूरागुरुकस्तूरी-कक्कोलैर्यक्षकर्दमः" इत्यमरः) मृदु कोमलं यथा तथा, उन्मृदितं शोधितम्, अङ्गं शरीरं यस्य तं तादृशं, तथा कुरङ्गमदेन कस्तूर्या, मीलितः सम्बन्धं प्रापितः, लिप्त इति यावत्, मौलिः मस्तकः यस्य तं तादृशं, तं नलम्, अनुबन्धिताः अनुबन्धं गमिताः, स्वसौगन्ध्यात् संयोगं प्रापिता इत्यर्थः, भृङ्गाः भ्रमराः येषु तैः तादृशैः, गन्धवाभिः गन्धोदकैः साधनैः, सिषिचुः सिक्तवत्यः, स्नपयामासुरित्यर्थः ॥ ७ ॥

भूभृतमिति।—तदनन्तरं आप्तः विश्वस्तः, शुचिः शुद्धः, पुरोधाः पुरोहितः, जलधरात् जलपूर्णघटात्, स्खलन् पतन्, ओघः प्रवाहः यासां ताः तादृशीः, तीर्थवारीणां गङ्गादितीर्थोदकानां, लहरीः तरङ्गान्, धारा इति यावत्, उपरिष्टात् मस्तकोपरिभागे, ["उपर्युपरिष्टात्" इति निपातनात् साधुः] सन्दधत् सन्दधानः सन्, वर्षयन् सन् इत्यर्थः, पृथुना महता, तपसा तपस्यया, घनं परिपूर्णं, भूभृतं राजानं, तं नलं, स्नपयति स्म अभिषिञ्चति स्म, स्नापितवान् इत्यर्थः। अन्यत्र—आप्तः प्राप्तः, शुचिः आषाढः, ("शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोरपि" इति विश्वः) जलधरेभ्यः मेघेभ्यः, स्खलन् पतन्, ओघः प्रवाहो यासां ताः तथोक्ताः, तीर्थवारिलहरीः पूतजलप्रवाहान्, उपरिष्टात् मस्तकोपरि, सन्दधत् सन्दधानः,

प्रेयसीकुचवियोगहविर्भुग्जन्मधूमविततीरिव बिभ्रत् ।
स्नायिनः करसरोरुहयुग्मं तस्य गर्भधृतदर्भमराजत ॥ ८ ॥
कल्प्यमानममुनाऽऽचमनार्थं गाङ्गमम्बु चुलुकोदरचुम्बि ।

वर्षयन् सन् इत्यर्थः, पृथोः तदाख्यस्य वेणपुत्त्रस्य नृपभेदस्य, ("पृथुः स्यात् महति त्रिषु । त्वक्पत्र्यां कृष्णजीरेऽस्त्री पुमानग्नौ नृपान्तरे ॥" इति मेदिनी ) तपसा तपस्याप्रभावेण, घनम् अशिथिलं, दृढमित्यर्थः, तं प्रसिद्ध, भूभृतं भूमिधरं, हिमालयादिपर्वतामित्यर्थः, ("भूभृत् भूमिधरे नृपे" इति विश्वः ) स्नपयति स्म, अङ्गनाः सामान्यजलेन पुरोधाः समन्त्रकतार्थोदकेन तं स्नपयन्ति स्म इति बोद्धव्यम । अत्र द्वितीयार्धस्य प्रकृत अपर्य्यवसानात् उपमाध्वनौ पर्य्यवसानं ज्ञेयम् ॥ ८ ॥

प्रेयसीति ।—स्नायिनः मन्त्रवज्जलेन स्नानं कुर्वतः, तस्य नलस्य, गर्भे अभ्यन्तरे, करतले इत्यर्थः, धृतानि गृहीतानि, दर्भाणि कुशाः येन तत् तादृशं, स्नानकाले कुशग्रहणस्य शास्त्रीयत्वादिति भावः, यद्वा—स्नायिनः कृतस्नानस्य, तस्य नलस्य, गर्भे मध्यमाकनिष्ठयोरन्तराले, अनामिकायामित्यर्थः, धृतः परिहितः इत्यर्थः, दर्भः कुशः, कुशाङ्गुरीयकी येन तत्तादृशं, करयोः पाण्योः एव, सरोरुहयोः कमलयोः, युग्मं द्वयं, प्रेयस्याः दमयन्त्याः, कुचयोः स्तनयोः, वियोगहविर्भुजः विरहवह्नेः, जन्म सम्भवः यस्य तथाभूतस्य, धूमस्य वितती: सन्ततीः, बिभ्रदिव धारयदिव, अराजत् अशोभत, नूतनदर्भाणां श्यामवर्णत्वात् धूमसाम्यमिति बोध्यम् ॥ ८ ॥

कल्प्यमानमिति ।—अमुना नलेन, आचमनार्थम् उपस्पर्शनार्थं, कल्प्यमानं गृह्यमाणम्, अत एव चुलुकस्य प्रसृतस्य,

निर्मलत्वमिलितप्रतिबिम्बा द्यामयच्छदुपनीय करे नु ? ॥ १० ॥
मुक्तमाप्य दमनस्य भगिन्या भूमिरात्मदयितं धृतरागा ।
अङ्गमङ्गमनु किं परिरेभे तं मृदो जलमृदुं ग्रहयालुम् ? ॥ ११ ॥

---

निकुञ्जप्रान्तरित्यर्थः, उदरं मध्यं, चुम्बति स्पृशतीति तादृशं, गाङ्गं गङ्गासम्बन्धि, अम्बु जलं, [ कर्त्तृ ] निर्मलत्वेन स्वच्छत्वेन हेतुना, मिलितः संयुक्तः, तत्र निपतित इत्यर्थः, प्रतिबिम्बः प्रतिच्छाया यस्याः तथोक्ता, द्याम् आकाशं स्वर्गञ्च, ("द्यौः स्वर्गसुरवर्त्मनोः" इत्यमरः) करे हस्ते, उपनीय सम्प्राप्य, अयच्छत् नु ? अददात् किम् ? प्रजाभ्य इति शेषः, दानार्थैव तद्ग्रहणमभवदिति भावः । द्यौःशब्दस्य स्वर्गाकाशवाचित्वाच्छलेनोक्तः ॥ १० ॥

मुक्तामिति ।—भूमिः तिलकार्थं गृहीता रक्तवर्णा मृत्तिका, अत्र स्मृतिः,—"विप्रा गौरमृदः प्रोक्ताः क्षत्रा रक्ताः प्रकीर्त्तिताः" इति ; दमनस्य भीमात्मजस्य, भगिन्या सोदरया दमयन्त्या, मुक्तं स्नानार्थं परित्यक्तं, मृदः तिलकार्था मृत्तिकाः, ग्रहयालुं ग्रहीतारम्, आत्मनः स्वस्य, दयितं प्रियं, पतिमिति यावत्, राज्ञो भूपतित्वादिति भावः, तं नलम्, आप्य लब्ध्वा, धृतः गृहीतः, बद्ध इत्यर्थः, रागः स्वभावत एव रक्तवर्णः अनुरागश्च यया सा तथोक्ता सती, ("रागोऽनुरागे मात्सर्य्ये क्लेशे च लोहितादिषु" इति विश्वः ) जलेन स्नानोदकेन, मृदुं कोमलम्, अङ्गम् अङ्गं ललाटादिकं प्रत्यवयवम्, अनु लक्ष्यीकृत्य, परिरेभे आलिलिङ्ग किम् ? अन्याऽपि सपत्न्या दूरेऽवस्थितं वल्लभं प्राप्य सानुरागा सती यथा प्रत्यङ्गमालिङ्गति तद्वदिति भावः । ललाटादिषु द्वादशाङ्गेषु मृत्तिलकानि चकारेति निष्कर्षः ॥ ११ ॥

मूलमध्यशिखरश्रितवेधःशौरिशम्भुकरकाङ्घ्रिशिरःस्थैः।
तस्य मूर्ध्नि चकृरे शुचिदर्भैर्वारि वान्तमिव गाङ्गतरङ्गैः॥ १२॥
प्राणमायतवतो जलमध्ये मज्जिमानमभजन्मुखमस्य।
आपगापरिवृढोदरपूरे पूर्वकालमुषितस्य सुधांशोः॥ १३॥
मर्त्यलोकमदनः सदशत्वं बिभ्रदभ्रविशदद्युति तारम्।
अम्बरं परिदधे विधुमौलेः स्पर्द्धयेव दशदिग्वसनस्य॥ १४॥

मूलमिति।—मूलमध्यशिखराणि दर्भाणाम् आदिमध्याग्राणि, श्रितानां यथाक्रमं प्राप्तानां, वेधःशौरिशम्भूनां ब्रह्मविष्णुरुद्राणाम्, अत्र स्मृतिः,—"कुशमूले स्थितो ब्रह्मा कुशमध्ये तु केशवः। कुशाग्रे शङ्करं विद्यात् त्रयो देवाः कुशस्थिताः॥" इति; करकाङ्घ्रिशिरःसु कमण्डलुपादमस्तकेषु, तिष्ठन्ति वर्त्तन्ते इति तथोक्तैः, गाङ्गैः गङ्गाम्बुसम्भवैः, तरङ्गैः ऊर्म्मिभिः, वान्तं निष्ठ्यूतम् इव, स्थितमिति शेषः, शुचि निर्मलं, वारि गङ्गोदकं, दर्भैः कुशैः, कर्त्तृभिः] तस्य नलस्य, मूर्ध्नि शिरसि, चकृरे कीर्णम्; नलः कुशाग्रजलेन "आपोहिष्ठा" इत्यादि मन्त्रं पठन् मान्त्रं स्नानं कृतवान् इत्यर्थः। ["कृ विक्षेपे" इति धातोः कर्मणि लिट्]॥ १२॥

प्राणमिति।—जलस्य उदकस्य, मध्ये अभ्यन्तरे, प्राणमायतवतः प्राणायामं कृतवतः, अस्य नलस्य, मुखं वदनं, [कर्त्तृ] पूर्वकालं समुद्रमन्थनात् प्राक्, आपगापरिवृढस्य नदीभर्त्तुः समुद्रस्य, उदरपूरे जलगर्भप्रवाहमध्ये, उषितस्य कृतवासस्य, सुधांशोः चन्द्रस्य, मज्जिमानं सौन्दर्य्यम्, अभजत् अलभत, समुद्रोदरमध्यस्थचन्द्रसदृशं दर्शनीयमभूदित्यर्थः॥ १३॥

मर्त्यलोकेति।—मर्त्यलोकमदनः भूलोककन्दर्पः, नलः इति शेषः, दश दशसङ्ख्यकाः, दिशः ककुभ एव, वसनं वस्त्रं यस्य तस्य

भीमजामनु चलत् प्रतिवेलं संयियंसुरिव राजऋषीन्द्रः।
प्राववार हृदयं स समन्तादुत्तरीयपरिवेषमिषेण ॥ १५ ॥

दिगम्बरस्य, विधुमौलेः चन्द्रशेखरस्य, शम्भोरित्यर्थः, स्पर्द्धयेव साम्यतोषहेतुकाहमिकयेव, मदनत्वादेव मदनारिणा हरेण सह स्पर्द्धा युज्यत इति भावः, सदशत्वं दशाभिः प्रान्त-विलम्बिदीर्घतन्तुभिः सह वर्त्तमानम्, आकाशपक्षे—दशभिः दिग्विभागैः सह युक्तं, तस्य भावः तत्त्वं सदशत्वं, बिभ्रत् धारयत्, "ईषद्धौतं नवं शुभ्र सदशं यन्न धारितम्" इत्यादिस्मृत्या सदशवस्त्रधारणस्य प्रशस्तत्वादिति भावः, तथा अभ्रस्येव शारदमेघस्येव, तदाख्यस्य शुभ्रधातुविशेषस्येव वा, विशदा शुभ्रा, द्युतिः प्रभा यस्य तत् तादृशं, तारं महत् सूक्ष्मतरं वा, अन्यत—अभ्रेषु मेघेषु, विशन्त्यः प्रवेशं कुर्वन्त्यः, अत एव अद्युतयः दीप्तिरहिताः, ताराः नक्षत्राणि यस्मिन् तत्तादृशम्, अम्बरं वस्त्रम आकाशञ्च, ("अम्बरं व्योम्नि वाससि" इत्यमरः) परिदधे परिहितवान् ॥ १४ ॥

भीमजामिति।—राजऋषीणाम् ऋषिवत् सदाचार-सम्पन्ननृपतीनां मध्ये, [ राजा ऋषिः, "ऋत्यकः" इति प्रकृति-भावः ] इन्द्रः श्रेष्ठः, सः नलः, प्रतिवेलम् अनुक्षणं, भीमजाम् आत्मप्रियां दमयन्तीम्, अनु लक्ष्यीकृत्य, चलत् गच्छत्, हृदयं वक्षः अन्तःकरणञ्च, संयियंसुः इव संयन्तुमिच्छुरिव, बद्धुमिच्छुः सन्निवेत्यर्थः. स्वहृदयस्य सर्वदा स्वं विहाय अन्यत्र गमनस्य अन्याय्यत्वात् तस्य बन्धनेच्छा इति भावः, उत्तरीयस्य उत्तरा-सङ्गस्य, य परिवेषः परिधिः, हृदयोपरि वेष्टनमित्यर्थः. तस्य मिषेण व्याजेन, समन्तात् सर्वतः, प्राववार प्रावृतवान्, स्वहृदयमेवेति शेषः ॥ १५ ॥

स्नानवारिघटराजदुरोजा गौरमृत्तिलकविन्दुमुखेन्दुः ।
केशशेषजलमौक्तिकदन्ता तं बभाज सुभगाऽऽप्लवनश्रीः ॥ १६ ॥
श्वैत्यशैत्यजलदैवतमन्त्रस्वादुताप्रमुदिता चतुरक्षीम ।
वीक्ष्य मोघधृतसौरभलोभं घ्राणमस्य सलिलघ्रमिवाभूत् ॥ १७ ॥

---

स्नानेति ।—स्नानवारिघटौ स्नानीयोदककुम्भाविव, राजन्तौ शोभमानौ, उरोजौ कुचौ यस्याः सा तादृशी, गौरः शुभ्रवर्णः, शुष्कत्वादिति भावः, मृत्तिलकविन्दु मृत्तिकाकृतवर्त्तुलतिलकमिव, मुखेन्दुः वदनचन्द्रः यस्याः सा तादृशी, केशशेषाणि कुन्तलेषु अवशिष्टानि, जलमौक्तिकानि मुक्तातुल्यवारिविन्दव एव, दन्ताः दशनाः यस्याः सा तादृशी, [ "नासिकोदर—" इत्यादिना पक्षे ङीषो विधानादत्र पक्षे टाप् ] सुभगा रम्या, नलाङ्गसङ्गलाभादिति भावः, आप्लवनस्य श्रीः स्नानशोभा, तं नलं, बभाज सिषेवे ॥ १६ ॥

श्वैत्येति ।—अस्य नलस्य, घ्राणं घ्राणेन्द्रियं, नासिकेत्यर्थः, चतुर्णां चतुःसङ्ख्यकानाम्, अक्षाणां नयनत्वक्श्रोत्ररसनाख्यानाम् इन्द्रियाणां समाहारः चतुरक्षी तां चतुरक्षीं, श्वैत्येन जलस्य श्वेततया, तेन नेत्रं प्रमुदितमित्याशयः, शैत्येन जलस्यैव शीतत्वेन, तेन च त्वक् प्रमुदितेत्याशयः, जलं वारि, दैवतं देवता यस्य तेन तादृशेन मन्त्रेण "ऋतञ्च सत्यञ्चाभिध्यात्तपसः" इत्यादिमनुना, तच्छ्रवणेन च श्रोत्रेन्द्रियं प्रमुदितमित्याशयः, तथा स्वादुतया जलस्यैव माधुर्य्येण च, तेन च रसना प्रमुदितेत्याशयः, प्रमुदितां प्रहृष्टां, वीक्ष्येव दृष्ट्वेव, मोघं व्यर्थं यथा भवति तथा, धृतः प्राप्तः, सौरभे सौगन्ध्ये, द्रव्यान्तरस्येति शेषः, लोभः लोलुपता येन तत् तादृशं सत्, सलिलं जलं, जिघ्रति घ्राणविषयीकरोतीति तत् तादृशं सलिलघ्रम्, [ "घ्रातोऽनुपसर्गे कः" ] अभूत् अजायत,

सम्यगस्य जपतः श्रुतिमन्त्राः सन्निधानमभजन्त कराब्जे ।
शुद्धवीजविशदस्फुटवर्णाः स्फाटिकाक्षवलयच्छलभाजः ॥ १८ ॥
पाणिपर्वणि यवः पुनराख्यद्दैवतर्पणयवार्पणमस्य ।
न्युप्यमानजलयोगितिलाघैः स द्विकृत्तकरकालतिलोऽभूत् ॥१९॥

---

अघमर्षणकाले ऋतञ्च इत्यादि मन्त्रं पठन् जलं जिघ्रति स्मेति निष्कर्षः ॥ १७ ॥

सम्यगिति।—शुद्धानि आगमोक्तक्रमोच्चारणान्निर्दोषाणि, वीजानि वह्निवारुणादिमूलमन्त्राणि येषु ते च ते विशदाः निर्मलाः, स्फुटाः स्पष्टाश्च, वर्णाः अक्षराणि येषां ते चेति तथोक्ताः, [ शुद्धवीजाश्च ते विशदस्फुटवर्णाश्चेति विशेषणसमासः ] श्रुतिमन्त्राः वेदोक्तमन्त्राः गायत्र्यादयः, शुद्धानि अदुष्टानि, वीजानि गुडकानीत्यर्थः यस्य तच्च तत्, विशदः शुभ्रः, स्फुटः उज्ज्वलश्च, वर्णः प्रभाविशेषः यस्य तच्चेति तत, स्फाटिकं स्फटिकमयं, यत् अक्षवलयं जपमाला, तस्य छलं व्याजं, भजन्ति आश्रयन्ति ये ते तादृशाः सन्तः, सम्यक् सुष्ठु यथा तथा, जपतः जपं कुर्वतः, अस्य नलस्य, करः पाणिरेव, अब्जं कमलं तस्मिन्, सन्निधानं सान्निध्यम्, अभजन्त प्रापाः, इवेति शेषः ॥ १८ ॥

पाणिरिति।—अस्य नलस्य, पाणेः करस्य, पर्वणि ग्रन्थौ, यवः यवाकारा स्पष्टरेखा, दैवतर्पणे देवसम्बन्धितर्पणक्रियायां, यवानाम् अर्पणं दानं, [ कर्म ] पुनराख्यत् पुनरुक्तम् अकरोत्, पुनः पुनर्दानमभाषतेवेत्यर्थः, पाणिपर्वस्थयवैरेव तदर्पण-सम्पादनादिति भावः; तथा स नलः, न्युप्यमानेन पितृभ्यः दीयमानेन, ("पितृदानं निवापः स्यात्" इत्यमरः) जलेन उदकेन, युज्यन्ते मिल्यन्ते ये तैः तादृशैः, तिलानां कृष्ण-

पूतपाणिचरणः शुचिनोच्चैरध्वनाऽनितरपादहतेन ।
ब्रह्मचारिपरिचारिसुरार्चावेश्म राजऋषिरेष विवेश ॥ २० ॥
क्वापि यन्नभसि धूपजधूमैर्मेचकागुरुभवैर्भ्रमराणाम् ।
भूयते स्म सुमनःसुमनःस्रग्दामधामपटले पटलेन ॥ २१ ॥

तिलानाम्, ओघैः समूहैः करणैः, द्विरुक्तः वारद्वयमुक्तः, पुनरुक्त इत्यर्थः, द्विगुणीभूत इति यावत्, करकालतिलः पाणिस्थकृष्णवर्णतिलाकाररेखा यस्य सः तादृशः, अभूत् अजायत, इवेति शेषः, नलः देवानां पितृणाञ्च तर्पणं कृतवानिति भावः। भाग्यवतां हस्ते यवाकाराः तिलाकाराश्च रेखाः दृश्यन्ते इति सामुद्रिकाः ॥ १९ ॥

पूतपाणिरिति।—एषः अयं, राजऋषिः मुनितुल्यनृपतिः, नलः इति शेषः, ["ऋत्यकः" इति प्रकृतिभावः] पूतौ प्रक्षालनेन पवित्रौ, पाणिचरणौ हस्तपादौ यस्य सः तादृशः सन्, इतरैषां ब्रह्मचारिव्यतिरिक्तानां, पादैः चरणैः, हतः क्षुण्णः इतरपादहतः, तादृशः न भवतीति अनितरपादहतः तेन जनान्तरपादास्पृष्टेन, अत एव शुचिना शुद्धेन, अध्वना मार्गेण साधनेन, ब्रह्मचारिणः ब्रह्मचर्य्यव्रतावलम्बिन एव, परिचारिणः परिचारकाः यत्र तत् तादृशम्, उच्चैः उन्नतं, सुरार्चावेश्म देवपूजागृहं, विवेश प्रविष्टवान्, पूजार्थमिति भावः ॥ २० ॥

क्वेति।—यस्य सुरार्चावेश्मनः, नभसि आकाशे, अभ्यन्तराकाशे इत्यर्थः, क्वापि कस्मिंश्चित् प्रदेशे, सुमनःसुमनसां मालतीपुष्पाणां, ("सुमनाः पुष्पमालत्योः" इति मेदिनी) स्रग्दामभिः मालासमूहैः, कल्पितस्येति शेषः, धाम्नः गृहस्य, गृहाकाररचनाविशेषस्येत्यर्थः, पटले प्रान्ते, मेचकागुरुभवैः कृष्णागुरुसम्भवैः, धूपजधूमैः धूपोत्थधूमैः, भ्रमराणां भृङ्गाणां, पटलेन

साङ्कुरेव रुचिपीततमा यैर्यै पुराऽस्ति रजनी रजनीव।
ते धृता वितरितुं त्रिदशेभ्यो यत्र हेमलतिका इव दीपाः ॥२२॥
अङ्कचुम्बिघनचन्दनपङ्कं यत्र गारुडशिलाजममत्रम्।
प्राप केलिकवलीभवदिन्दोः सिंहिकासुतमुखस्य सुखानि ॥२३॥

समूहेन, भूयते स्म भूतम्; पुष्पाणामुपरि भ्रमरैः भ्राम्यम्, अत एव धूपजधूमा एव तत्समूहस्वरूपा जाता इत्यर्थः ॥ २१ ॥

साङ्कुरेति।—रजनी रात्रिः, यैः दीपैः, रुचिभिः दीप्तिभिः साधनैः, पीतं ग्रस्तं, विनाशितमित्यर्थः, तमः अन्धकारं यस्याः सा रुचिपीततमा सती, साङ्कुरा तेजोऽङ्कुरसहिता इव, पुरा प्राक्, अस्ति आसीत्, [ "पुरा लङ् चास्मे" इति भूते लट् ] रजनी रात्रिरेव, यैश्च दीपैः, रुचिभिः दीप्तिभिः, पीततमा अत्यर्थं पीतवर्णा सती, साङ्कुरा सप्ररोहा, दीपरूपाङ्कुरयुक्तेत्यर्थः, रजनी इव हरिद्रेव, पुरा प्राक्, अस्ति आसीत्, ( "रजनी पातिकाया रात्रौ हरिद्रायाम्" इति विश्वः ) हेमलतिकाः स्वर्णलता इव स्थिताः, ते पूर्वोक्ताः, दीपाः आलोकवर्त्तयः, यत्र सुराचविश्मनि, त्रिदशेभ्यः देवेभ्यः, वितरितुम् उत्सर्गीकर्त्तुं, धृताः स्थापिताः, परिचारकैरिति शेषः ॥ २२ ॥

अङ्केति।—यत्र सुराचविश्मनि, गारुडशिलाजं मरकतमणिनिर्मितम्, अमत्रं पात्रम्, अङ्कं क्रोडम, अभ्यन्तरभागमित्यर्थः, चुम्बति स्पृशतीति अङ्कचुम्बी, घनः सान्द्रः, चन्दनपङ्कः घृष्टचन्दनं यस्य तत्तादृशं सत्, केलिना क्रीडया, कवलीभवन् ग्रासीभवन्, अभ्यन्तरं प्रविशन्निति यावत्, इन्दुः चन्द्रो यस्य तादृशस्य, [ "कृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य" इति पुंवद्भावः ] सिंहिकासुतमुखस्य राहुवदनस्य, ( "सिंहिकातनयो राहुः" इति साधुः ) सुखानि आनन्दान्, सादृश्यमिति

गर्भमेणमदकर्दमसान्द्रं भाजनानि रजतस्य भजन्ति।
यत्र साम्यमगमन्नमृतांशोरङ्करङ्कुकलुषीकृतकुक्षेः॥ २४॥
उज्जिहानसुकृताङ्कुरशङ्का यत्र धर्मगहने खलु तेने।
भूरिशर्करकरम्भबलीनामालिभिः सु:तसौधसखानाम्॥ २५॥

---

भावः, प्राप लब्धवान्, इन्दु चन्दनपङ्कयोः श्वैत्य-शैत्यसाम्यात् सिंहिकासुत गारुडमणिपात्रयोश्च नीलत्व कृष्णवर्णत्वसाम्यादिति भावः। यत्र गृहे गारुड़मणिपात्राणि चन्दनभरितानि सन्तीति निष्कर्ष.॥ २३॥

गर्भमिति।—यत्र सुरार्चावेश्मनि, रजतस्य रौप्यस्य, भाजनानि पात्राणि, [ कर्तॄणि ] एणमदकर्दमेन कस्तूरीपङ्केन, सान्द्रं निविड़, परिपूर्णमित्यर्थः, गर्भं मध्यप्रदेशं, भजन्ति प्राप्नुवन्ति सन्ति, अङ्केन चिह्नेन, कलङ्कात्मकेनेत्यर्थः, रङ्कुणा मृगेण, यद्वा—अङ्के क्रोड़े, यो रङ्कुः मृगाकृतिचिह्नं, तेन कलुषीकृतः मलिनीभूतः, कुक्षिः उदरं यस्य तथोक्तस्य, अमृतांशोः चन्द्रस्य, साम्यं समताम्, अगमन् प्रापन्, रजतभाजनानां शुभ्रत्वगोलाकारत्वसाम्यात् चन्द्रसादृश्यं, कस्तूरीपङ्कस्य च कृष्णवर्णत्वात् क्रोडस्थहरिणतुल्यत्वं बोद्धव्यम्। यत्र देवपूजार्थं रजतपात्राणि दृष्टकस्तूरीपूर्णानि सन्तीति निष्कर्षः॥ २४॥

उज्जिहानेति।—धर्मेण सुकृतेन, गहने निविड़े धर्मगहने बहुविधधर्मानुष्ठानपूर्णे, अन्यत्र—धर्मारण्ये, यत्र सुरार्चावेश्मनि, सुगतस्य बुद्धस्य, सौधाना सुधाधवलितप्रासादानां, शुभ्रचैत्यानामित्यर्थः, सखायः शुभ्रतया तत्सदृशाः इत्यर्थः तेषां [ "राजाहःसखिभ्यष्टच्" ] भूरयः प्रभूताः, शर्कराः सिताः येषु तथोक्ताः, ये करम्भाः दधिसक्तव, ( "करम्भा दधिसक्तवः" इत्यमरः ) त एव बलयः उपहाराः, नैवेद्यानीत्यर्थः तेषाम्,

खर्वमाख्यदमरौघनिवासं पर्वतं क्वचन चम्पकसम्पत् ।
मल्लिकाकुसुमराशिरकार्षीत् यत्र च स्फटिकसानुमनुच्चम् ॥२६॥
स्वात्मनः प्रियमपि प्रति गुप्तिं कुर्वती कुलवधूमवजज्ञे ।
हृद्यदैवतनिवेद्यनिवेशात् यत्र भूमिरवकाशदरिद्रा ॥ २७ ॥

---

आलिभिः पङ्क्तिभिः, [ कर्त्रीभिः ] उज्जिहानेषु उद्गच्छत्सु, मुकुताङ्कुरेषु पुष्पप्ररोहेषु, शङ्का संशयः, तेने विस्तारयामासे, जनयामासे इत्यर्थः, खलु इति निश्चितम् ॥ २५ ॥

खर्वमिति।—यत्र सुरार्चाविश्मनि, क्वचन क्वचित् प्रदेशे, चम्पकानां स्वर्णवर्णचम्पकपुष्पाणां, सम्पत् समृद्धिः, राशि-रित्यर्थः, अमरौघस्य देवसमूहस्य, निवासं वासस्थलभूतं, पर्वतं सुमेरुं, खर्वं क्षुद्रम्, आख्यत् उक्तवती, तथा मल्लिकाकुसुमानां मल्लिकापुष्पाणां, राशिः समूहः, स्फटिकसानुं शुभ्रकैलास-पर्वतम्, अनुच्चं क्षुद्रम्, अकार्षीत् विदधे ॥ २६ ॥

स्वात्मन इति।—यत्र सुरार्चाविश्मनि, भूमिः पृथिवी, देवगृहाभ्यन्तरप्रदेश इत्यर्थः, हृद्यानां मनोज्ञानां, दैवतानां देवतासम्बन्धिनां, निवेद्यानाम् उपहर्त्तव्यानां, नैवेद्यानामित्यर्थः, देवेभ्यः प्रतिष्ठितदेवताभ्य, निवेद्यानाम् उत्सर्जनीयानामिति वा, निवेशात् स्थापनात् हेतोः, अवकाशदरिद्रा निरन्तराला सती, सर्वथा दृष्टेरगोचरा सतीत्यर्थः, स्वात्मनः निजायाः, प्रियं दयितं भर्त्तारं, भूपतिं नलमित्यर्थः, प्रति अपि नलम् उद्दिश्यापीत्यर्थः, गुप्तिं गोपनं, स्वाङ्गाच्छादनमित्यर्थः, कुर्वती विदधती, कुलवधूं सद्वंश्यामङ्गनाम्, अवजज्ञे अवज्ञातवती, कुलवधूरपि स्वभर्त्तारं प्रत्यपि लज्जाधिक्यात् स्वशरीरं गोपयति, अतः सा भूमिः तत्सदृशी जाता इत्यर्थः, बहूनि निवेद्यानि तत्र गृहे स्थापितानि आसन् इति निष्कर्षः ॥ २७ ॥

यत्र कान्तकरपीड़ितनील-ग्रावरश्मिचिकुरासु विरेजुः ।
गातृमूर्द्धविधुतेरनुविम्बात् कुट्टिमक्षितिषु कुट्टमितानि ॥ २८ ॥
नैकवर्णमणिभूषणपूर्णे स क्षितीन्दुरनवद्यनिवेद्ये ।
अध्यतिष्ठदमलं मणिपीठं तत्र चित्रसिचयोच्चयचारौ ॥ २९ ॥

---

यत्रेति ।—यत्र सुरार्चाविश्मनि, कान्तस्य प्रियस्य चन्द्रकान्तमणेश्च, ("कान्तः प्रिये चन्द्रकान्ते" इति यादवः) करेण हस्तेन अंशुना च, ("बलिहस्तांशवः कराः" इत्यमरः) पीड़ितानां मुष्टाकर्षणेन व्यथितानां, स्पर्शेन विकारं प्रापितानाञ्च, वर्णान्तरं प्रापितानामित्यर्थः, नीलग्राव्णाम् इन्द्रनीलमणीनां, रश्मयः दीप्तयः एव, चिकुराः केशाः यासां तादृशीषु, कुट्टिमक्षितिषु मणिनिबद्धभूमिषु, गातुः गायकस्य, मूर्द्धविधुतेः शिरःकम्पनस्य, अनुविम्बात् प्रतिविम्बपतनात् हेतोः, कुट्टमितानि शिरःकम्पनरूपशृङ्गारचेष्टाविशेषाः, विरेजुः शुशुभिरे। अत्र भरतमुनिः,—"केशस्तनाधरादिग्रहणेऽपि हर्षसम्भ्रमोत्पन्नं शिरःकरकम्पनं कुट्टमितमिति विज्ञेयं सुखं विदुः" इति। मणिबद्धा भूमयो गायकाश्च यत्र सन्तीति भावः ॥ २८ ॥

नैकेति ।—क्षितीन्दुः भूतलचन्द्रः, सः नलः, नैकवर्णाः विविधवर्णविशिष्टाः, ये मणयो रत्नानि, तेषां भूषणैः आभरणैः, पूर्णे व्याप्ते, अनवद्यानि निर्दोषाणि, निवेद्यानि उत्सर्जनीयानि द्रव्याणि यत्र तस्मिन्, तथा चित्राणां विविधप्रकाराणां, सिचयानां वस्त्राणाम्, उच्चयेन समूहेन, चारौ मनोज्ञे, तत्र सुरार्चाविश्मनि, अमलम् उज्ज्वलं, मणिपीठं रत्नमयासनम्, अध्यतिष्ठत् अधिष्ठितवान्, सुरार्चनार्थमुपविवेश इत्यर्थः। ["अधिशीङ्स्थासाम्" इति अधिकरणस्य कर्मसंज्ञा] ॥२९॥

सम्यगर्चति नलेऽर्कमतूर्णं भक्तिगन्धिरमुनाऽकलि कर्णः।
श्रद्दधानहृदयं प्रति चान्तः साम्बमम्बरमणिर्निरचैषीत्॥ १०॥
तत्तदर्घ्यमरहस्यजपेषु स्रक्स्रयः श्रयममुष्य बभाज।
रक्तिमानमिव शिक्षितुमुच्चै रक्तचन्दनजबीजसमाजः॥ ११॥

सम्यगिति।—नले नैषधे, अतूर्णम् अव्यग्रं, व्यग्रत्वे सम्यक्ताऽभावादिति भावः, अत एव सम्यक् सुष्ठु यथा भवति तथा, अर्कं सूर्य्यम्, अर्चति आराधयति सति, अमुना अर्केण, कर्णः राधेयः, भक्तेः श्रद्धाविशेषस्य, गन्धः लेशः अस्ति यस्य सः तादृशः भक्तिगन्धिः अल्पभक्तिः, ("गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः" इति विश्वः) ["अल्पाख्यायाम्" इति समासान्तः इत्] अकलि निरधारि, अम्बरमणिः सूर्य्यः, साम्बं तदाख्यकृष्णसुतं, प्रति च उद्दिश्यापि, अन्तः अन्तःकरणे, श्रद्दधानं भक्तिमत्, हृदयं चेतो यस्य तादृशं, शाम्बः केवलं मनसा भक्तः, न तु पूजक इति भावः, निरचैषीत् निश्चितवान्, कर्णापेक्षया तथा शाम्बापेक्षया च नल एव मे परमभक्त इति निश्चिकाय इत्यर्थः। "यावन्न दीयते चार्घ्यं भास्कराय महात्मने" इत्यादिना सूर्य्यार्घ्यदानमन्तरेण देवतान्तरपूजानिषेधात् नलः प्रथमं सूर्य्यमेवार्चयामासेति भावः॥ १०॥

तदिति।—तेषां तेषां श्रौतस्मार्त्तानाम्, अर्घ्यमृणः सूर्य्यस्य, रहस्यानां मन्त्राणां, जपेषु असकृत् गूढोच्चारणकाले, स्रक्स्रयः जपमालास्वरूपः, रक्तचन्दनजानां कुचन्दनोद्भवानां, बीजानां गुटिकानां, ("तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम्। कुचन्दनम्" इत्यमरः) समाजः समूहः, उच्चैः अधिकं, रक्तिमानं रक्तत्वं, शिक्षितुमिव अभ्यसितुमिव, अमुष्य नलस्य, श्रयं हस्तं, बभाज सिषेवे, नलपाणितलस्य प्रकृत्या एव रक्तिमातिशय्यात्

अर्चयन् हरकरं स्मितभाजा नागकेशरतरोः प्रसवेन ।
सोऽयमापयदतिर्य्यगवाग्दिक्-पालपाण्डुरकपालविभूषाम् ॥३२॥
नीलनीररुहमाल्यमयीं स न्यस्य तस्य गलनालविभूषाम् ।
स्फाटिकीमपि तनूं निरमासीन्नीलकण्ठपदमान्वयतायै ॥३३॥

शिक्षार्थं यथा शिष्याः उपाध्यायं सेवन्ते तथा रक्तिमाधिक्य-शिक्षार्थं तत्पाणितलम् आश्रयामास इति भावः ॥ ३१ ॥

अर्चयन्निति ।—सः उक्तरूपेण पूजानिरतः, अयम् एषः नलः, स्मितभाजा प्रस्फुटितेनेत्यर्थः, नागकेशरतरोः तदाख्य-वृक्षविशेषस्य, प्रसवेन कुसुमेन साधनेन, हरस्य शम्भोः, करं हस्तम्, अर्चयन् पूजयन्, तिरश्चा दिशः तिर्य्यग्वर्त्तमानप्राच्यादि-दिगष्टकात्, तथा अवाच्या दिशः अधोदिशश्च सकाशात्, अन्या पृथगिति अतिर्य्यगवाग्दिक् ऊर्द्ध्वा दिक् इत्यर्थः, तस्या पालः रक्षकः, ब्रह्मा इत्यर्थः, तस्य पाण्डुरं पाण्डुवर्णं, यत् कपालं शिरोऽस्थिखण्डं, भिक्षापात्ररूपेण हरकर्त्तृकचिरकालधारणात् गतकान्ति, अत एव पाण्डुवर्णं ब्रह्मणः पञ्चमशिरोऽस्थिखण्ड-मित्यर्थः, तस्य विभूषामिव विभूषा शोभाम्, आपयत प्रापित-वान् । हरेण स्वदुहितरं सन्ध्यां प्रति कामभावेनानुधावतः ब्रह्मणः पञ्चमं शिरः छिन्नं, ततः तत्पापस्य प्रायश्चित्तं चिकीर्षुः हरः भिक्षार्थं तत् करे दधार, नागकेशरपुष्पस्यापि तत्सदृश-पाण्डुवर्णत्वात् इयमुक्तिर्बोद्धव्या । नलेन पूजायां दत्तं नागकेशर-पुष्पं ब्रह्मकपालसदृशं बभौ इति भावः ॥ ३२ ॥

नीलेति ।—सः नलः, तस्य हरस्य, नीलनीररुहमाल्यमयीम् इन्दीवरमालारूपा, गलनालस्य कण्ठदेशस्य, विभूषां भूषणं, न्यस्य समर्प्य, स्फाटिकीं स्फटिकमयीम् अपि, तनूं शरीरं, नीलकण्ठ इति पदस्य शिवस्य नीलकण्ठ इति संज्ञावाचकस्य

प्रीतिमेष्यति कृतेन ममेष्टकर्मणा पुररिपुर्मदनारिः ।
तत्पुरः पुरमतोऽयमशाक्षीद्धूपरूपमथ कामशरञ्च ॥ ३४ ॥
तन्मुहूर्त्तमपि भीमतनूजा-विप्रयोगमसहिष्णुरिवायम् ।
शूलिमौलिशशिभीततयाऽभूद्ध्यानमूर्च्छननिमीलितनेत्रः ॥ ३५ ॥

शब्दस्य, सान्वयतायै अन्वर्थत्वाय, नीलः कण्ठो यस्य इति विग्रहस्य सार्थकतासम्पादनायेत्यर्थः, निरमासीत् कल्पितवान् । [ मा माने इति धातोराद्यादिकाल्लुङ् ] ॥ ३३ ॥

प्रीतिमिति ।—पुररिपुः त्रिपुरारिः, मदनारिः कामशत्रुश्च, शम्भुरिति शेषः, कृतेन विहितेन, मम मे, ईष्टकर्मणा गुग्गुलु-पर्य्यायकपुरदाहेन कर्पूरपर्य्यायककामशरदाहेन च कर्मणा, प्रीतिं सन्तोषम, एष्यति प्राप्स्यति, अतः अस्मादेव कारणात्, अयं नलः, तस्य पुरारिपो मदनारेश्च, पुरः अग्रतः, यथाक्रमं धूपरूपं धूपव्याजं, पुरं गुग्गुलुम् असुरपुरञ्च, [ "गुग्गुलौ कथितः पुरः" इति विश्वः ) अथ अनन्तरं, कामशरं कर्पूरं मदनबाणञ्च, अधाक्षीत् दग्धवान्, नलः धूपदानरूपां पूजां चकारेति निष्कर्षः ॥ २४ ॥

तदिति ।—अयं नलः, तन्मुहूर्त्तमपि तस्मिन् मुहूर्त्तेऽपि, [ "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया ] शूलिनः अर्च्यमान-शम्भोः, मौलिशशिनः शिरोभूषणचन्द्रकाशात्, भीततया भीत-त्वेन हेतुना, शशिनो विरहिपीड़कत्वादिति भावः, भीमतनूजायाः दमयन्त्याः, विप्रयोगं विरहम्, असहिष्णुरिव सोढ़ुमक्षमः सन् इव, ध्यानेनैव हृदि देवमूर्त्तिचिन्तनरूपेणैव, मूर्च्छनेन मूर्च्छा-रोगेण. सर्वेन्द्रियार्थोपरमत्वसाम्यात् ध्यानस्य मूर्च्छासाम्यत्वं बोद्धव्यं, निमीलिते मुद्रिते, नेत्रे लोचने यस्य सः तादृशः, अभूत् अजायत, धूपदानानन्तरं हरध्यानमकरोदिति निष्कर्षः ॥ ३५ ॥

दण्डवद्भुवि लुठन् स ननाम त्र्यम्बकं शरणभागिव कामः ।
आत्मशस्त्रविशिखासनबाणान् न्यस्य तत्पदयुगे कुसुमानि ॥२६॥
त्र्यम्बकस्य पदयोः कुसुमानि न्यस्य सैष निजशस्त्रनिभानि ।
दण्डवद्भुवि लुठन् किमु कामस्तं शरण्यमुपगम्य ननाम ? ॥ २७॥
व्यापृतस्य शतरुद्रियजप्तौ पाणिमस्य नवपल्लवलोलम् ।
भृङ्गभङ्गिरिव रुद्रपराक्ष-श्रेणिराश्रयत रुद्रपरस्य ॥ २८ ॥

---

दण्डवदिति ।—आत्मनः स्वस्य, शस्त्रान् आयुधस्वरूपान्, विशिखासनं धनुः, बाणान् विशिखान् च, कुसुमानि पुष्पाणि, कामस्य धनुर्बाणयोः पुष्पमयत्वादिति भावः ; तस्य त्र्यम्बकस्य, पदयोः चरणयोः, युगे द्वये, न्यस्य समर्प्य, शरणभाक् आश्रयार्थी, कामः कन्दर्प इव, सः नलः, दण्डवत् दण्डसदृशः, भुवि भूमौ, लुठन् पतन्, त्र्यम्बकं त्रिलोचनं, ननाम प्रणतवान् ॥२६॥

उक्तमेवार्थं भङ्ग्यन्तरेणाह, त्र्यम्बकस्येति ।—सः प्रसिद्धः एषः अयं, कामः मदनः, [ "सोऽचि लोपे चेत् पादपूरणम्" इत्यत्र श्लोकपादस्यापि ग्रहणमिष्यते इति सो लोपे वृद्धिः ] निजशस्त्रनिभानि स्वायुधसदृशानि, कुसुमानि पुष्पाणि, त्र्यम्बकस्य त्रिलोचनस्य, पदयोः चरणयोः, न्यस्य समर्प्य, भुवि भूमौ, दण्डवत् दण्डसदृशं, लुठन् पतन्, गात्रं पातयन्नित्यर्थः, शरण्यं रक्षितारं, त्र्यम्बकं त्रिनयनं हरम्, उपगम्य प्राप्य, ननाम किमु ? प्रणतवान् किम् ? ॥ २७ ॥

व्यापृतस्येति ।—रुद्रपरस्य शिवपरायणस्य, अत एव शतरुद्रियस्य शतं रुद्राः देवता अस्य तस्य रुद्रदेवताकमन्त्रविशेषस्य, [ "शतरुद्रात् घश्च" इति वक्तव्यात् घ-प्रत्ययः ] जप्तौ जपे, [ नपुंसके भावे क्तः, "आदितश्च" इति चकारात् विश्वस्तवत् निष्ठाया इड़भावे जप्तम्, "आदितश्चेति चकार-

उत्तमं स महति स्म महीभृत् पूरुषं पुरुषसूक्तविधानैः।
द्वादशापि च स केशवमूर्त्तीर्द्वादशाक्षरमुदीर्य्य ववन्दे ॥ ३९ ॥
मल्लिकाकुसुमडुण्डुभकेन स भ्रमीवलयितेन कृते तम्।
आसने निहितमैक्षत साक्षात् कुण्डलोन्द्रतनुकुण्डलभाजम् ॥४०॥

---

स्यानुक्तसमुच्चयार्थत्वात् विभक्तस्तद्वदित्याहुः" इति भट्टक्षीर-स्वामी। तथा च "जपिवमिभ्यां वा" इति महोपाध्याय-वर्द्धमानसूत्रम्] व्यापृतस्य आसक्तस्य, अस्य नलस्य, नव-पल्लवस्येव कोमलकिसलयस्येव, लीला विलासः यस्य तं तादृशं, पाणिं करं रुद्रात् रुद्रशब्दात्, परेषाम् उपरितनानां, पश्चादुच्चार्य्यमाणानामित्यर्थः, अक्षाणाम् अक्षेति अक्षराणां, रुद्राक्षाणामित्यर्थः; यद्वा—रुद्रपराणां शिवभक्तानां, ये अक्षाः जपमालाः, रुद्राक्षमाला इत्यर्थः, तेषां श्रेणिः पङ्क्तिः, भृङ्गाणां भ्रमराणां, भङ्गिरिव श्रेणिरिव, मालेव इति यावत्, आश्रयत श्रितवती, प्राप्तवतीत्यर्थः ॥ ३८ ॥

उत्तममिति।—सः पूजानिरतः, महीभृत् भूपालो नलः, उत्तमं पूरुषं पुरुषोत्तमं विष्णुं, पुरुषसूक्तस्य "सहस्रशीर्षा पुरुषः" इत्यादिमन्त्रस्य, विधानैः विधिभिः, महति स्म पूजितवान्, तथा सः नलः, द्वादशाक्षरम् "ओं नमो भगवते वासुदेवाय" इत्येवंरूपं द्वादशाक्षरात्मकं मन्त्रम्, उदीर्य्य उच्चार्य्य, केशवस्य नारायणस्य, द्वादशापि च मूर्त्तीः केशव-नारायणादि-द्वादशसङ्ख्यकविग्रहान्, ववन्दे तुष्टाव ॥ ३९ ॥

मल्लिकेति।—सः नलः, भ्रमीवलयितेन चक्राकारवेष्टनैः वलयाकारीकृतेन, मल्लिकाकुसुमानां मल्लिकापुष्पाणां, मल्लिका-पुष्पग्रथितेनेत्यर्थः, डुण्डुभकेन राजिलसर्पाकारया स्थूलया मालया, ["समौ राजिलडुण्डुभौ" इत्यमरः। "इवे प्रतिकृतौ"

मेचकोत्पलमयी बलिबन्धुस्तद्बलिस्रगुरसि स्फुरति स्म ।
कौस्तुभाख्यमणिकुट्टिमवास्तु-श्रीकटाक्षविकटायितकोटिः ॥ ४१॥

स्वर्णकेतकशतानि स हेम्नः पुण्डरीकघटना रजतस्य ।
मालयाऽरुणमणेः करवीरं तस्य मूर्द्धि पुनरुक्तमकार्षीत् ॥ ४२ ॥

---

इति कन्। मल्लिकाकुसुमगुम्फकेन इत्यत्र पादान्तगुरुत्वं छन्दःशास्त्रेऽभ्युपगम्यते ] कृते निर्मिते, आसने पीठे, निहितं स्थापितं, कुण्डलीन्द्रस्य नागराजस्य, शेषस्य सम्बन्धिन्याः इत्यर्थः, तनोः शरीरस्य, कुण्डलं वलयं, कुण्डलिततनुमित्यर्थः, भजते आश्रयति, चीरोदे शेषशायिरूपेणाधिशेते इत्यर्थः, यः तादृशं, तं नारायणं, साक्षात् ध्यानयोगेन प्रत्यक्षमिव, ऐक्षत अपश्यत् ॥ ४० ॥

मेचकेति ।—बलेः असुरविशेषस्य, बन्धुः बन्धकस्य, बलिनामकदैत्यराजबन्धनकारिणो विष्णोरित्यर्थः, उरसि वक्षसि, कौस्तुभाख्यं कौस्तुभरत्नसंज्ञकं, यत् मणिकुट्टिमं रत्ननिबद्धभूमिः, तदेव वास्तु आवासभूमिः यस्याः तादृश्याः, श्रियः लक्ष्म्याः, कटाक्षेण अपाङ्गदर्शनेन, विकटायिताः विशालीभूताः, वृद्धिं गता इत्यर्थः, कोटयः प्रान्तदेशाः यस्याः सा तादृशी, मेचकोत्पलमयी नीलोत्पलग्रथिता, तस्य नलस्य, तेन नलेन दत्ता इत्यर्थः, बलिस्रक् पूजामाल्यं, ("बलिः पूजोपहारः स्यात् बलिर्दैत्यो बलिः करः" इति विश्वः) स्फुरति स्म शुशुभे ॥ ४१ ॥

स्वर्णेति ।—स नलः, तस्य विष्णोः, मूर्द्धि शिरसि, हेम्नः सुवर्णस्य, मालया माल्येन, स्वर्णनिर्मितपुष्पमाल्यार्पणेनेत्यर्थः, स्वर्णकेतकानां स्वर्णवर्णकेतकीपुष्पाणां, शतानि बहुसङ्ख्यकानि, स्वर्णकेतकीकुसुममाल्यार्पणमित्यर्थः, रजतस्य रौप्यस्य,

माल्यभक्तबलिरन्ननिवेद्यैस्तस्य हारिणमदेन स कृष्णः।
शङ्खचक्रजलजातवदर्चः शङ्खचक्रजलपूजनयाऽभूत् ॥ ४३ ॥

मालया स्रजा, रौप्यनिर्मितपुष्पमालाऽर्पणेनेत्यर्थः, पुण्डरीकानां सिताम्भोजानां, घटनां रचनां, श्वेतपद्ममाल्यार्पणमित्यर्थः, अरुणमणेः पद्मरागस्य, मालया माल्येन, पद्मरागमणिघटित-माल्यदानेनेत्यर्थः, करवीरं करवीकुसुमं, रक्तकरवीरपुष्प-मालार्पणमित्यर्थः, पुनरुक्तं द्विरुक्तं, द्विगुणीकृतमित्यर्थः, [ पुनरुक्तानि च पुनरुक्ता च पुनरुक्तश्चेति द्वन्द्वे "नपुंसकम-नपुंसकेन—"इत्यादिना नपुंसकैकशेषे एकवद्भावः ] अकार्षीत् कृतवान्, द्विविधेनापि माल्येन स नारायणमर्चयामासेति निष्कर्षः ॥ ४२ ॥

नेति।—स भगवान् नारायणः, तस्य नलस्य, अन्ननिवेद्यैः अन्नान्येव भक्तान्येव, निवेद्यानि उपहाराः तैः, इवेति शेषः, नाल्पः प्रभूतः, भक्तबलिः अन्नोपहारः यस्य स तादृशः, ("भक्त-मन्धोऽन्नम्" इत्यमरः) अन्यत्र—नाल्पभक्तः अधिकभक्तिसम्पन्नः, बलिः असुरविशेषः यस्य सः तादृशः, तन्नामकः इत्यर्थः, अभूत् अजनि, तस्य हारिणमदेन कस्तूर्या, नलार्पितमृगमदोप-हारेणेवत्यर्थः, कृष्णः कृष्णवर्णः पापकर्षणात् कृष्णनामा च, ("कृष्णो वर्णे हरौ ध्वाङ्क्षे पिके व्यासे शुकेऽर्जुने" इत्यजय-पालः) अभूत्, तथा शङ्खानां दक्षिणावर्त्तादीनां विविधानां कम्बूनां, चक्रे समूहे, ("चक्रं सैन्ये रथाङ्गे च राष्ट्रे दम्भान्तरे चये। आयुधाः सलिलावर्त्ता." इत्यजयपालः) यत् जलं वारि, तेन या पूजना अर्चना तया, इवेति शेषः, शङ्खं पाञ्चजन्यं, चक्रं सुदर्शनं, जलजातं पद्मञ्च अस्या अस्तीति सा तद्वती शङ्ख-चक्रपद्मविशिष्टेत्यर्थः, अर्चा प्रतिमा पूजा च यस्य सः तादृशश्च,

राज्ञि कृष्णलघुधूपजधूमाः पूजयत्यहिरिपुध्वजमस्मिन् ।
निर्ययुर्भवधृता भुजगा भा-दुर्यशोमलिनिता इव जालैः ॥ ४४ ॥
अर्घनिःस्वमणिमाल्यविमिश्रैः स्मेरजातिमयदामसहस्रैः ।
तं पिधाय विदधे बहुरत्नक्षीरनीरनिधिमग्नमिवैषः ॥ ४५ ॥

("अर्चा पूजाप्रतिमयोः" इति विश्वः) अभूत्, नलपूजा-निबन्धना खलु भगवतः विष्णोः नाल्पमत्तबलिरित्यादिशब्द-वाच्यता अभूदिति भावः ॥ ४३ ॥

राज्ञीति।—अस्मिन् राज्ञि नले, अहिरिपुः नागारिः, गरुडः इत्यर्थः, ध्वजः लाञ्छनं, ध्वजे रथचूडायामित्यर्थो वा, यस्य तं विष्णुं, पूजयति अर्चयति सति, भिया अहिरिपुभयेन, यत् दुयशः भीरुत्वापवादः, तेन मलिनिताः स्वभावतः शुभ्रा अपि मलिनीकृताः, भवेन शम्भुना, तत्रैव प्रतिष्ठितेनेति भावः, धृताः भूषणत्वेन परिगृहीताः, भुजगाः वासुकिप्रमुखाः शुभ्रसर्पा इव, कृष्णाः कृष्णवर्णाः, लघवः अगुरवः, ("शीघ्रे मनोज्ञे निःसारे लघुः स्यादगुरुद्रुमे" इति शाश्वतः) तेषां धूपजाः धूपोत्थाः, धूपदानाय कालागुरुकाष्ठदहनोत्पन्ना इत्यर्थः, धूमाः, जालैः गवाक्षविवरैः, निर्ययुः निर्गताः, भवशरीरे भूषणत्वेन धृताः विशदा अपि भुजगाः पूज्यमाननारायणस्य रथध्वज-स्थितस्वशत्रुगरुडदर्शनात् भयेन मलिनाः इव सन्तः धूपजात-कृष्णधूमरूपेण वहिर्निर्जग्मुरित्यर्थः ॥ ४४ ॥

अर्घेति।—एषः नलः, अर्घेण मूल्येन, निःस्वानां दरिद्राणाम्, अमूल्यानामित्यर्थः, मणीनां रत्नानां, माल्यैः स्रग्भिः, विमिश्रैः संयुक्तैः, स्मेराणां विकसितानां, जातिमय-दाम्नां मालतीकुसुमस्रजां, सहस्रैः समूहैः, तं विष्णुं, पिधाय आच्छाद्य, बहुरत्नक्षीरनीरनिधौ बहूनि प्रभूतानि, रत्नानि

अक्षसूत्रगतपुष्करबीज श्रेणिरस्य करमङ्गमेत्य।
शौरिसूक्तजपितु: पुनरापत् पद्मसद्मचिरवासविलासम् ॥ ४६ ॥
कैटभारिपदयोर्नतमूर्द्धा सञ्जिता विचकिलस्रगनेन।
जह्नुजेव भुवनप्रभुणाऽभात् सेविताऽनुनयताऽऽयतमाना ॥ ४७॥

---

मणयो यस्मिन् तादृश:, य: चौरनौरनिधि: चीरोदसमुद्र:, तत्र मज्जनम् इव, विदधे चकार। अत्र चौरस्थानीया: शुभ्रमालतीकुसुमस्रज: रत्नस्थानीयानि च मणिमाल्यानीति बोध्यम् ॥ ४५ ॥

अक्षसूत्रेति।—अक्षसूत्रग [illegible] मालाग्रथनतन्तुस्थितानां, पुष्करबीजानां पद्मगुटिकानां, [illegible], माला इत्यर्थ:, शौरिसूक्तस्य पुरुषसूक्तस्य, जपितु: जपं कर्तु:, अस्य नलस्य, करमङ्गं हस्तमस्तकम, एत्य प्राप्य, पुन: भूयोऽपि, पद्मं कमलम् एव, सद्म गृहं, तत्र चिरवासस्य बहुकालावस्थिते:, विलासं शोभाम, आपत् प्राप्तवती, नलकरस्य कमलसदृशत्वादिति भाव: ॥ ४६ ॥

कैटभारीति।—नत: भूसङ्गत इत्यर्थ:, मूर्द्धा शिर: यस्य तेन प्रणामार्थं नतमस्तकेन, अनुनयता स्तवेन देवं प्रसादयता, भुवनप्रभुणा भूलोकनाथेन, अनेन नलेन भगीरथेन च, यद्वा—जलेश्वरेण समुद्रेण च, ("भुवनं विपिने तोये" इति विश्व:) कैटभारे: विष्णो:, पादयो: चरणयो:, सञ्जिता संसर्गं प्रापिता, समर्पिता इत्यर्थ:, अन्यत्र—आसञ्जिता आसक्तिं गता, भक्तिमतीत्यर्थ:, विष्णुपदोद्भूतत्वादिति भाव:, आयतं दीर्घं, मानं प्रमाणं यस्या: सा, अन्यत्र—यतमाना चेष्टमाना, पृथिव्यां गन्तुं यत्नवतीत्यर्थ:, यद्वा—आयत: दीर्घ:, मान: ईर्ष्याकोपश्च यस्या: सा, ("मानं प्रमाणे प्रस्थादौ मान-

स्वानुरागमनघः कमलायां सूचयन्नपि हृदि न्यसनेन ।
गौरवं व्यधित वागधिदेव्याः श्रीगृहाङ्कनिजकण्ठनिवेशात् ॥ ४८॥
इत्यवेत्य वसुना बहुनाऽपि प्राप्नुवन्न मुदमर्चनया सः ।
सूक्तिमौक्तिकमयैरथ हारैर्भक्तिमैहत हरेरुपहारैः ॥ ४९ ॥

---

श्वित्तोमत्तौ गृहे" इति विश्वः ) सेविता आराधिता, एकत्र—सुगन्धेन सर्वैः समादृता इत्यर्थः, अन्यत्र—त्रिभुवनजनपूजिता इत्यर्थः, विचकिलस्रक् मल्लिकाकुसुममाला, ( "स्मृतो विचकिलो मल्ली-प्रभेद मदनेऽपि च" इति विश्वः ) जह्नुजा गङ्गा इव, अभात् बभौ ॥ ४७ ॥

स्वेति ।—अनघः निष्पापः, विष्णुरिति शेषः, हृदि वक्षसि, न्यसनेन स्थापनेन, कमलाया एवेति भावः, कमलायां लक्ष्म्यां, स्वानुरागं निजप्रेम, सूचयन् प्रकटयन् अपि, श्रियः तस्याः कमलाया एव, गृहात् निवासभूतात्, निजवक्षसः इति शेषः, अङ्के उपरिस्थिते, निजे स्वकीये, कण्ठे गलदेशे, निवेशात् स्थापनात् हेतोः, वागधिदेव्याः वाग्देवतायाः सरस्वत्याः, गौरवं पूजां, सम्मानाधिक्यमित्यर्थः, कमलापेक्षया इति भावः, व्यधित कृतवान् ॥ ४८ ॥

इतीति ।—सः नलः, इति पूर्वोक्तप्रकारं विष्णोर्मनोभावम्, अवेत्य ज्ञात्वा, बहुना प्रभूतेनापि, वसुना धनेन, लक्ष्मीरूपेण मणिरत्नादिना इति भावः, लक्ष्म्या च इति ध्वन्यते, विहितया इति शेषः, अर्चनया पूजया, अपीति शेषः, मुदं प्रीतिं, न प्राप्नुवन् न लभमानः सन्, अथ अनन्तर, सूक्तिमौक्तिकमयैः सूक्तयः सरस पदनिबद्धानि स्तोत्राण्येव, मौक्तिकानि मुक्तासमूहाः, विशदत्वा-दिति भावः, तन्मयैः तदात्मकैः, हारैः हाररूपैः, सरस्वत्या इति च ध्वन्यते, उपहारैः उपायनैः, हरेः नारायणस्य, भक्तिम्

दूरतः स्तुतिरवाग्विषयस्ते रूपमस्मदभिधास्तव निन्दा ।
तत् क्षमस्व यदहं प्रलपामीत्युक्तिपूर्वमयमेतदवोचत् ॥ ५० ॥
स्वप्रकाश । जड एष जनस्ते वर्णनं यदभिलष्यति कर्त्तुम् ।
नन्वहर्पतिमहः प्रति स स्यान्न प्रकाशनरसस्तमसः किम् ? ॥५१॥

---

ऐकान्तिकसेवाविशेषम्, ऐहत अचेष्टत, हरिभक्तिं दर्शयितु-मैच्छदिति भावः, हरिणा कमलातः वाण्याः अधिकं गौरवं कृतमतः सरस्वतीकरणकार्चनेनैवास्मिन् अधिका भक्तिः प्रदर्शिता भविष्यतीति मत्वा नलः सरस्वतीमयैः सूक्तैस्तमभजत इति निष्कर्षः ॥ ४९ ॥

दूरत इति ।—हे भगवन् ! ते तव, रूपं स्वरूपम्, अवाग्विषयः वाचामगोचरः, "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इत्यादि श्रुतेरिति भावः, स्तुतिः स्तवः, दूरतः दूरे, कर्त्तुमशक्या इत्यर्थः, यस्य तव स्वरूपं वाचामतीतं तस्य तव स्तुतिः कथं कर्त्तुं शक्येत ? कथमपि नेत्याशयः, एवञ्च अस्मदभिधाः अस्माकमुक्तयः, अस्मदीया स्तुतिरित्यर्थः, तव भवतः, निन्दा कदर्थना, भवतीति शेषः, अनन्तगुणस्य तव अत्यल्पगुणप्रकाशकत्वात् वागविषयस्य च वाचा वर्णनात् तिरस्कार एवेत्यर्थः ; अत एव अहं नलः, यत् प्रलपामि अनर्थकं वच्मि, तत् प्रलापवचनं, क्षमस्व सहस्व, मार्जयेत्यर्थः, इत्युक्तिः एवं-वचनं, पूर्वं प्रथमं यस्मिन् तत् यथा भवति तथा, अयं नलः, एतत् वक्ष्यमाणम्, अवोचत् उक्तवान् ॥ ५० ॥

स्वेति ।—स्वप्रकाश ! हे स्वयंप्रकाश ! अन्यनिरपेक्षप्रकाश-रूप ! विष्णो ! "एष आत्मा स्वप्रकाशः" इति वेदान्तादिति भावः, जडः मूढः, अविद्याच्छन्नः इति यावत्, एषः अयं, जनः लोकः, ते तव, चिन्मयस्येति भावः, वर्णनं गुणकीर्त्तनं, कर्त्तुं

मैव वाङ्मनसयोर्विषयो भूस्त्वां पुनर्न कथमुद्दिशतां ते ।
उत्कचातकयुगस्य घनः स्यात् तृप्तये घनमनाप्नुवतोऽपि ॥ ५२ ॥

---

विधातुं, यत् अभिलष्यति वाञ्छति, ननु भो विष्णो !, सः तादृशवर्णनाभिलाषः, अहर्पतेः सूर्य्यस्य, महः तेजः, प्रति लक्ष्यीकृत्य, तमसः अन्धकारस्य, प्रकाशने प्रकटने, स्वाविर्भाव-विषये इत्यर्थः, रसः वाञ्छा, न स्यात् किम् ? न भवेत् किम् ? अपि तु स्यादेव इत्यर्थः ; स्वप्रकाशस्य तव वर्णने जड़स्य ममाभिलाषः प्रकटप्रकाशसूर्य्यतेजःप्रकाशने तमसः अभिलाष इव अत्यन्तमशोभन एवेति भावः। तेजोनाश्यस्य तमसः तेजः-प्रकाशाभिलाषः यथा विफल एव, तथा स्वप्रकाशनाश्याया जड़ताया अपि तं प्रति प्रकाशनात्मकवर्णनोद्यमः विफल एवेति तात्पर्य्यम् ॥ ५१ ॥

मैवेति ।—हे विष्णो ! वाङ्मनसयोः वाक्यचेतसो, [ "अचतुर —"इत्यादिना साधु ] विषयः गोचरः, मैव भूः नैव भव,त्वमिति शेषः, "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुतेरिति भावः, पुनः तथाऽपि, ते वाङ्मनसे, त्वां भवन्तं, कथं केन हेतुना, न उद्दिशताम् ? न लक्षयताम् ? त्वामुद्दिश्य न प्रवर्त्तेता-मित्यर्थः, अपि तु उद्दिशतामेवेति भावः. [ "दिश अतिसर्जने" इत्यस्माद्धातोर्लोटि रूपम् ] तथा हि, घनं मेघम्, अनाप्नुवतः अलभमानस्य अपि दूरावस्थितत्वादिति भावः, उत्कयोः मेघार्थमेव उत्सुकयोः, चातकयोः सारङ्गयोः, युगस्य द्वन्द्वस्य, चातकमिथुन-स्येत्यर्थः, तृप्तये जलदानेन प्रीतये, घनः मेघः स्वयमेव, स्यात् भवेत्, चातकयुगस्य अविषयोऽपि मेघो यथा स्वयमेव तत्तृप्तये भवति, तथा वाङ्मनसयोरगोचरोऽपि त्वं स्वयमेव मत्तृप्तये स्याः, अतो न वर्णनोद्यमो मया त्याज्य इति निष्कर्षः ॥ ५२ ॥

छद्ममत्स्यवपुषस्तव पुच्छास्फालनाज्जलमिवोद्धृतमब्धेः।
श्वैत्यमेत्य गगनाङ्गणसङ्गादाविरस्ति विबुधालयगङ्गा ॥ ५३ ॥
भूरिसृष्टिधृतभूवलयानां पृष्ठसीमनि किणैरिव चक्रैः।
चुम्बिताऽवतु जगत् क्षितिरक्षा-कर्मठस्य कमठस्तव मूर्त्तिः ॥ ५४ ॥
दिक्षु यत्खुरचतुष्टयमुद्रामभ्यवैमि चतुरोऽपि समुद्रान्।
तस्य पोत्रिवपुषस्तव दंष्ट्रा तुष्टयेऽस्तु मम वास्तु जगत्याः ॥ ५५ ॥

छद्मेति।—हे विष्णो! छद्मना कपटेन, वेदोद्धारव्याजे-नेत्यर्थः, मत्स्यः मीनः, वपुः शरीरं यस्य तथोक्तस्य, तव ते, पुच्छस्य लाङ्गूलस्य, आस्फालनात् ताड़नात् हेतोः, अब्धेः सागरात्, उद्धृतम् ऊर्द्ध्वम् उत्क्षिप्तं, जलं वारि, [कर्त्तृ] गगनाङ्गणेन आकाशात्मकचत्वरेण, सङ्गात् संयोगात् हेतोः, श्वैत्यं श्वेतत्वम्, एत्य प्राप्य, विबुधालयगङ्गा स्वर्णदी, भूत्वा इति शेषः, आविरस्तीव प्रादुर्भवतीव, नीलवर्णा अपि सामुद्रा ह्यापो गगनालोकसंस्पर्शादेव धवला दृश्यन्ते इति भावः ॥ ५३ ॥

भूरीति।—हे भगवन्! पृष्ठसीमनि पृष्ठप्रदेशे, भूरिषु प्रतिकल्पं नूतनसृष्टिकरणात् बह्वीषु, सृष्टिषु सृजनकार्य्येषु, धृतानां पृष्ठदेशे एव उद्धृतानां, भूवलयानां पृथ्वीमण्डलानां, किणैः पुनः पुनः वहनेन घर्षणजनितचिह्नविशेषैरिव, चक्रैः चक्राकारचिह्नराजिभिः, चुम्बिता स्थाने स्थाने स्पृष्टा, क्षितेः पृथिव्याः, रक्षायां पालने, जलनिमज्जनात् रक्षणविषये इत्यर्थः, कर्मठस्य कुशलस्य, ["कर्मणि घटोऽठच्"] तव भवतः सम्बन्धिनी, कमठः कूर्मरूपिणी, मूर्त्तिः तनुः, जगत् भुवनम्, अवतु रक्षतु ॥ ५४ ॥

दिक्ष्विति।—हे विष्णो! दिक्षु चतसृषु आशासु, चतुरः चतुःसङ्ख्यकान् अपि, समुद्रान् सागरान्, यस्य वराहमूर्त्तिधरस्य,

उद्धृतिस्खलदिलापरिरम्भाल्लोमभिर्बहिरितैर्बहुहृष्टैः।
ब्राह्ममण्डमभवत् बलिनीपं केलिकोल! तव तत्र न मातुः ॥५६॥
दानवौघगहनप्रभवस्त्वं सिंह! मामव रवैर्घनघोरैः।
वैरिदारिरिटिविषत्कृतास्त्वग्राममम्बरभवन्मनुजार्द्धः॥ ५७॥

खुराणां चतुष्टयस्य चतुःसङ्ख्याकशफस्य, मुद्रा चिह्नं, खुरेण विदलनजनितखातरूपचिह्नमिति यावत्, अभ्यवैमि जानामि, तस्य उक्तविधस्य, पोत्री वराह एव, ("वराहः शूकरो घृष्टिः कोलः पोत्री किरः किटिः" इत्यमरः) वपुः शरीरं यस्य तादृशस्य, तव भवतः, जगत्याः पृथिव्याः, वास्तु वेश्मस्थानं, रसातलादुद्धृत्य दंष्ट्रापरिस्थापनेन आवासभूता इत्यर्थः, ("वेश्मभूर्वास्तुरस्त्रियाम्" इत्यमरः) दष्ट्रा विशालदन्तः, मम मे, तुष्टये वाञ्छापूरणजनितप्रीतये, अस्तु भवतु॥ ५५॥

उद्धृतीति।—केलिकोल! हे क्रीडावराह! लीलाप्रदर्शनार्थं वराहरूपधारिन्! तत्र ब्रह्माण्डे, न मातुः अवकाशम् अलभमानस्य, अतिविपुलदेहत्वेति भावः, [मा-धातोस्तृचि षष्ठ्येकवचनरूपम्] तव भवतः, उद्धृतौ जलात् उद्धरणसमये, स्खलन्त्याः दलात् पतन्त्याः, इलायाः पृथिव्याः, परिरम्भात् सयत्नधारणात् आलिङ्गनाच्च हेतोः, बहु अत्यर्थं यथा भवति तथा, हृष्टैः रोमाञ्चितैः, पुलकितैरित्यर्थः, उद्गतैरिति यावत्, बहिर्ब्रह्माण्डस्य बहिःप्रदेशं, इतैः गतैः, लोमभिः तनूरुहैः साधनैः, ब्राह्मम् अण्डं ब्रह्माण्डं, बलिनीपं तव पूजार्थं कदम्बकुसुमम्, इवेति शेषः, अभवत् अजायत॥ ५६॥

दानवेति।—सिंह! हे नृसिंहमूर्त्तिधर! विष्णो!, दानवानां दनुजानाम्, ओघः समूहः एव, बहुदानवाधिपतिहिरण्यकशिपुसभा एवेति भावः, गहनं वनं, हिंस्रप्रकृति-

दैत्यभर्तृरुदराम्बुनिविष्टां शक्रसम्पदमिवोद्धरतस्ते ।
पातु पाणिसृणिपञ्चकमस्मांश्छिन्नरज्जुनिभलग्नतदन्त्रम् ॥ ५८ ॥

दानवौघाधिष्ठितत्वेन दुष्प्रवेशत्वादिति भावः, तत्र प्रभवः उत्पत्तिः यस्य सः तादृशः, अनेन सिंहाकारधारणस्य औचित्यं प्रकटितं, सिंहस्य वनसम्भवत्वादिति भावः, तथा वैरिणः शत्रून् दानवान्, दारयन्ति नाशयन्तीति तादृशानि, यानि दिविषत्-सुकृतानि देवानां पुण्यानि, तान्येव अस्त्राणि आयुधानि, तेषां ग्रामः समूह एव ग्रामः संवसथः, स्वल्पसङ्ख्यकमनुष्यवसति-स्थानमित्यर्थः, तस्मात् सम्भवः उत्पत्तिः यस्य सः तादृशः, भवन् जायमानः. प्रकटयन्नित्यर्थः, मनुजः मनुष्यः एव, नराकार एव इत्यर्थः, अर्द्धः अधःकायः यस्य स तादृशः, एतेन देवोपकारिनरोत्पत्तेरौचित्यं प्रदर्शितं, नरस्य ग्रामसम्भवत्वादिति भावः, त्वं भवान्, घनैः अनवरतैः, घोरैः भयङ्करैश्च, रवैः ध्वनिभिः, गर्जनैरिति यावत्, मा नलम्, अव रक्ष ॥ ५७ ॥

दैत्येति।—हे नरसिंह ! दैत्यभर्त्तुः हिरण्यकशिपोः, उदर-मेव जठरमेव, अम्बुः कूपः, [ "पुंस्येवान्धुः प्रहिः कूपः" इत्यमरः । "अजिदृशिकम्यमि—" इत्यादिना औणादिकः कु-प्रत्ययः धुगागमश्च ] तस्मिन् निविष्टां मग्नत्वेन स्थितां, शक्रसम्पदम् इन्द्रैश्वर्य्यम्, उद्धरतः उत्तोलयत इव, ते तव, छिन्नरज्जुनिभानि खण्डितदामसदृशानि, लग्नानि संसक्तानि, पाणिसृणिपञ्चके एव इति भावः, तस्य दैत्यभर्त्तुः, अन्त्राणि पुरीतदाख्यनाडी-विशेषाः यत्र तादृशम्, ( "अन्त्रं पुरीतत्" इत्यमरः ) पाणेः करस्य, सृणीनां तोत्त्रानस्वरूपाणाम् अङ्कुशानां, पञ्चकं पञ्चसङ्ख्या, अस्मान् मत्प्रभृतीन्, पातु रक्षतु, कूपे हि पतिता-

स्वेन पूर्य्यत इयं सकलाशा भो ! बले ! न मम किं भवतीति ? ।
त्वं वटुः कपटवाचि पटीयान् देहि वामन ! मनःप्रमदं नः ॥५६॥
दानवारिरमिकाय विभूतेर्वाश्मि तेऽस्मि सुतरां प्रतिपत्तिम् ।
इत्युदग्रपुलकं बलिनोक्तं त्वां नमामि कृतवामनमायम् ॥६०॥

न्युटत्ध्वनादीन्यङ्कुशाकारेण रज्जुवेष्टितेन लौहयन्त्रविशेषेण वाह्यन्ते यथा तद्वदिति भावः ॥ ५८ ॥

स्वेनेति ।—भोः ! बले ! हे बलिनामदैत्याधिप ! भवता त्वया, इयम् एषा, सकलाना सर्वेषामेव लोकानाम्, आशा मनोरथः, स्वेन धनेन, धनवितरणेनेत्यर्थः, पूर्य्यते परिपूर्णी-क्रियते, मम मे, किं न ? आशा पूर्य्यते इति पूर्वेणान्वयः, अपि तु पूर्य्यते एव । अन्यच्च—भो राजन् ! भवता इयं सकला सर्वा, आशा दिक्, ( "आशा तृष्णादिशोः प्रोक्ता" इति विश्वः ) स्वेन आत्मीयेन, बलेन सामर्थ्येन, पूर्य्यते व्याप्यते, मम मे, आशा दिक्, किं पूर्य्यते ? अपि तु नैवेत्यर्थः, मम वैकुण्ठलोकव्यापने तव सामर्थ्याभावादिति भावः, यद्वा—मम किम् ? तावता मे किं प्रयोजनम् ? मया ते त्रिपादभूमिरेव याच्यते, नाधिकेन अस्ति मे प्रयोजनम्, अतस्ते सर्वदिगधिकारे मम लाभक्षती न स्त इति भावः, वामन ! हे वामनरूपधर विष्णो ! इत्येवंरूपायां, कपटवाचि छद्मवचने, भगवतः आशाया एवाभावात् तादृश-प्रार्थनायाः कपटत्वमिति बोध्यम् ; पटीयान् कुशलो, वटुः माणवकः, तरुणब्रह्मचारीत्यर्थः, त्वं भवान्, नः अस्माकं, मनसः चेतसः, प्रमदं हर्षम्, अभीष्टसाधनादिना इति भावः, देहि कुरु ॥ ५९ ॥

दानवारीति ।—हे वामन ! अस्मि अहम्, अस्मीत्येतदव्यय-महमर्थे, दानस्य त्यागस्य, वारिणः जलस्य, दानार्थकसङ्कल्प-

भोगिभिः क्षितितले दिवि वासं बन्धमेष्यसि चिरं ध्रियमाणः।
पाणिरेष भुवनं वितरेति छद्मवामिव वामन ! विश्वम् ॥६१॥

सलिलस्येत्यर्थः, रसिकाय अनुरागिणे, प्रतिग्रहवाञ्छकाय इत्यर्थः, ते तुभ्यं, विभूतिः सम्पत्तेः, ममेति शेषः, सुतराम् अत्यर्थं, प्रतिपत्तिं दानं, वश्मि कामये, [वश कान्तावित्यस्य लडुत्तमपुरुषैकवचनम्]। अन्यच्च—हे वामन ! त्वं दानवानाम् असुराणां, अरिः शत्रुः साक्षात् विष्णुः, असि भवसि, अत एव अस्मि अहं, ते तव, कायविभूतेः शरीरसम्पत्तेः, गृहीत-त्रिविक्रममूर्त्तेरिति भावः, सुतराम् अत्यर्थं, प्रतिपत्तिं ज्ञानं, तत्स्वरूपज्ञानेच्छां, दर्शनप्राप्तिं वा इत्यर्थः, वश्मि कामये, इत्यनेन प्रकारेण, उदग्राः उत्कटाः, भक्त्यातिशय्यात् अत्यर्थ-मुद्गता इत्यर्थः, पुलकाः रोमाञ्चा यस्मिन् तत् यथा भवति तथा, बलिना दानवेन्द्रेण, उक्तं कथितं, कृता विहिता, वामनरूपा वामनाकारधारणात्मिका, माया छलं येन तं तादृशं, त्वां भवन्तं, नमामि नतोऽस्मि ॥ ६० ॥

भोगिभिरिति।—हे बले ! क्षितितले भूलोके, दिवि स्वर्गे वा, चिरं बहुकालं व्याप्य ध्रियमाणः अवतिष्ठमानः, [धृङ् अवस्थाने इत्यस्य रूपम्] त्वमिति शेषः, भोगः सुखमेषामस्तीति तादृशैः भोगिभिः सुखिभिः, जनैरिति शेषः, सह सार्द्धं, वासम् अवस्थानं, तथा बन्धं सख्यबन्धनञ्च, एष्यसि प्राप्स्यसि, मम करे दानवारिप्रदानादिति भावः, अत एव एष अयं, पाणिः हस्तः, मया प्रसारित इति शेषः, भुवनं जलं, दानवारीति यावत्, वितर देहि, अत्र पाणौ इति शेषः। अन्यच्च—हे बले ! दिवि स्वर्गे, स्वर्गतुल्यपरमरमणीये इत्यर्थः, क्षितितले रसातले, चिरं दीर्घकालं व्याप्य, ध्रियमाणः अवतिष्ठमानः, त्वमिति

एषा रतिः स्फुरति चेतसि कस्य यस्याः
सूते रतिं द्युतिरथ त्वयि वाऽऽतनोति ?।
त्रैयक्षवीक्षणखिलीकृतनिर्जरत्व-
सिद्धायुरध्वमकरध्वजसंशयं कः ?॥ ११८॥

कलनया साहश्येन, अंशतया वा, कलितस्य विदितस्य, वासव-तुल्यस्येत्यर्थः, भर्त्तुः पत्युः, नलस्य सम्बन्धिनो सती इत्यर्थः, यत् सती पतिव्रतैव, वर्त्तते इति शेषः, पार्वती तु अत्र जन्मनि कपालस्य ब्रह्मकर्परस्य, कलनया धारणया, कलितः विदितः, स न भवतीति अकपालकलनाकलितः, तादृगपि न भवतीति नाकपालकलनाकलितः तस्य गृहीतब्रह्मकपालत्वेन विख्यातस्य, भर्त्तुः पत्युः शिवस्य, सम्बन्धिनो सती, यत्, असती वर्त्तते इति शेषः, सः उक्तरूप एव, भेदः अन्तरं, पार्वत्याः तव च इति शेषः, तथा च दुर्गा पूर्वजन्मनि दक्षकन्यात्वे एव सती-नाम्ना विदिता आसीत्, हिमालयदुहितृत्वेऽधुना तु पार्वती-नाम्ना विदिता सती असती सतीति नामविरहिता, भवती तु अस्मिन्नपि जन्मनि पातिव्रत्येन सतीति प्रसिद्धा, अयमेव तव पार्वत्याश्च भेदः इति भावः॥ ११७॥

एषेति।—हे नल! एषा दमयन्ती, कस्य जनस्य, चेतसि मनसि, रतिः मदनवधूः, इति स्फुरति ? प्रकाशते ? अपि तु न कस्यापि इत्यर्थः, कुत इत्याह, यस्या एतस्याः दमयन्त्याः, द्युतिः अङ्गकान्तिः, एवेति शेषः, रतिम् अनुरागं मदनवधूञ्च इत्यर्थः, ("रतिः स्त्री स्मरदारेषु रागे सुरतगुह्ययोः" इति मेदिनी) सूते जनयति, यस्याः अङ्गकान्तिः रतिं जनयति सा कथमपि रतिर्भवितुं नार्हति इति भावः, अथ प्रश्नार्थकमव्ययं, कः वा, जनः इति शेषः, त्वयि भवति नले विषये, त्रैयक्षेण शिव-

एतां धरामिव सरिच्छविहारिहाराम्
उल्लासितस्त्वमिदमाननचन्द्रभासा ।
बिभ्रद्विभासि पयसामिव राशिरन्त-
र्वेदिश्रियं जनमनःप्रियमध्यदेशाम् ॥ ११९ ॥

सम्बन्धिना, [ "न य्वाभ्याम्—" इत्यजागमः ] वीक्षणेन चक्षुषा, तृतीयनयनेनेत्यर्थः, खिलीकृतः प्रतिबद्धीकृतः, विनाशित इति यावत्, निर्जरत्वेन देवत्वेन, सिद्धस्य प्रसिद्धस्य, आयुषः जीवन-कालस्य, अमरत्वरूपदीर्घजीवनस्य इत्यर्थः, अध्वा मार्गः यस्य तादृशस्य, मकरध्वजस्य कन्दर्पस्य, संशयं सन्देहं, मकरध्वज इति भ्रान्तिमित्यर्थः, आतनोति ? विस्तारयति ? न कोऽपि इत्यर्थः । देवत्वेन अमरोऽपि कामः कामारिनयनानलेन दग्धः सन् मृतः, मृतस्य च जीवितप्राणिनि सन्देहासम्भवात् भवति अयं कामो न वा इति संशयो न कस्यापि उदेतुमर्हति, तस्य मृतत्वादिति भावः । रतिकामाभ्यामपि भवन्तौ मनोहरश्रीकौ इति तात्पर्य्यम् ॥ ११८॥

एतामिति ।—हे राजन् ! त्वं भवान्, सरितः नद्याः इव, छविः शोभा, शुभ्रकान्तिरित्यर्थः, तया हारी मनोहारी, हारः मुक्तासरः यस्याः तां, पक्षे—स...तः नद्य. एव, छव्या कान्त्या, हारिणी मनोज्ञाः, हारा मौक्तिकसरा यस्यास्तां, वेद्याम् अन्तः अन्तर्वेदि वेदिकामध्यं, तद्वदतिकृशा इत्यर्थ., श्रीः शोभा यस्याः ता, यद्वा—अन्तः शरीराभ्यन्तरे, वेदेः कोटिविशेषस्य, श्रीरिव श्रीः सौन्दर्यं, तनुतारूपा इत्यर्थः यस्यास्ता, कुमारसम्भवादावपि "मध्येन सा वेदिविलग्नमध्या" इत्यत्र कोटिविशेषार्थे वेदिशब्दः प्रयुक्तः इति दृश्यते ; पक्षे—अन्तर्वेदिः तदाख्यगङ्गायमुना-सङ्गमस्थानं, तेन श्रीः शोभा यस्याः तादृशीम् ; तथा जनमनसां

दत्ते जयं जनितपत्त्रनिवेशनेयं
साक्षीकृतेन्दुवदना मदनाय तन्वी ।

लोकचेतसां, प्रियः प्रीतिजनकः, मध्यदेशो नितम्बभागो यस्याः ताम्; पक्षे—जनमनसां लोकचित्तानां, प्रियः हर्षजनकः, मध्यदेशः "हिमवद्विन्ध्ययोरन्तरं प्राक्कनखलादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥" इत्युक्तविन्ध्यहिमाचलान्तर-भूभागरूपः यस्याः ताम्, एतां दमयन्तीं, धरामिव पृथिवी-मिव, बिभ्रत् अङ्के दधानः, अस्याः दमयन्त्याः धरायाश्च, आननं मुखं, चन्द्रः शशधर इव, पक्षे—आननसदृशचन्द्रस्य, तस्य भासा प्रभया, उल्लासितः हर्षं प्रापितः उच्छ्वसितश्च सन्, पयसां राशिः समुद्रः इव, विभासि शोभसे ; सागरः हि चन्द्रभासा उच्छ्वसितः भवति इति प्रसिद्ध एव ॥ ११९ ॥

दत्ते इति ।—हे महाराज! जनितं कृतं, सखिभिः विचारकैश्च चेति शेषः, पत्त्रस्य कस्तूर्य्यादिकल्पितमकरपत्त्र-वल्लर्य्याद्याकारतिलकस्य जयसूचकपत्त्रस्य च, निवेशनं रचनम्, अङ्कनमित्यर्थः, दानमित्यर्थश्च यस्याः सा तिलकभूषितकपोला-दिका विचारकैः विचार्य्य लिखितजयपत्त्रा च, तथा अक्षिभ्यां सह वर्त्तमानः साक्षः [“बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्—” इति समासान्तः षच् ] असाक्षः साक्षः कृतः साक्षीकृतः सलोचनी-कृतः, इन्दुः चन्द्र एव, वदनं मुखं यस्याः सा, इन्दोः सलोचनीकरणाभावे वदने नेत्रस्थितिः कथं युज्यते इति भावः, अन्यत्र—साक्षीकृताः साक्षात् द्रष्टीकृताः, इन्दुवदनाः चन्द्रमुख्यः सख्यः यस्याः सा, कामजयविषये भैम्याः सख्यः एव साक्षिण्यः वर्त्तन्ते, यतः भैम्यां नलस्य कामवश्यता ताभिरेव साक्षात् दृष्टा इति भावः, अथवा—साक्षीकृतं साक्षात् द्रष्टृकृतम्, इन्दुवदनं

मध्यस्थदुर्बलतमत्वफलं किमेतत्
भुक्तिर्यदत्र तव भर्त्सितमत्स्यकेतोः ? ॥ १२० ॥
चेतोभवस्य भवतो कुचपत्रराज-
धानीयकेतुमकरा ननु राजधानी ।

स्वस्याः चन्द्रसुन्दरमुखं यया सा, नलस्य कामविजितत्वे भैम्याः मुखचन्द्र एव साक्षी इति भावः, इयं पुरतः दृश्यमाना, तन्वी कृशाङ्गी, दमयन्तीति शेषः, अन्यत्र—काचित् सूक्ष्मा विचार-प्रणाली च, मदनाय कामाय, जयं विजयं, दत्ते अर्पयति, मदनेन त्वां विजितं करोतीत्यर्थः, अन्यत्र—स्वविषये नल-कामयोः विवादे कामायैव विजयं, दत्ते अर्पयति, भैमीविषये कामः नलं जितवान् इत्यर्थः ; तथाऽपि भर्त्सितः तिरस्कृतः, रूपेण धिक्कृतः इत्यर्थः, अन्यत्र—बलात् सन्तर्जितश्च, मत्स्यकेतुः मीनध्वजः मदनः येन तादृशस्य, तव भवतः, अत्र अस्यां दमयन्त्यां, पक्षे—भुवि च, यत् भुक्तिः सुरतसम्भोगः, अन्यत्र—प्रतिपक्षात् बलपूर्वकं गृहीत्वा स्वयमुपभोगश्च, तदेतत्, मध्यस्थं कटिदेशस्थं, यत् दुर्बलतमत्वं कृशतया अत्यन्तहीनबलत्वम्, अत एव सम्भोगक्रियासु सुखकरत्वमिति भावः, तस्य, अन्यत्र—मध्यस्थानां विचारकाणां, दुर्बलतमत्वस्य बाधाप्रदाने अक्षमतया चित्तदौर्बल्यस्य, फलं परिणामः, किम् ? दमयन्त्याः मध्यावयवस्य अतिसूक्ष्मत्वेन परमरमणीयत्वमेव अतिसुन्दरस्य तव भोगप्रयोजकम्, अन्यथा पराजितोऽपि भवान् कथमिमां विवादभूमिं भोक्तुं शक्नोति ? इति भावः, अन्यत्र—जयपत्रे साक्षिषु च सत्स्वपि विजयिनः विषये अन्येन बलपूर्वकं विजयिनं तिरस्कृत्य या भुक्तिः तत्र सभ्यानां चित्तदौर्बल्यमेव कारणमिति भावः ॥ १२० ॥

अस्यां महोदयमहस्पृशि मीनकेतोः
के तोरणं तरुणि ! न ब्रुवते भ्रुवौ ते ? ॥ १२१ ॥
अस्या भवन्तमनिशं भवतस्तथैनां
कामः श्रमं न कथमृच्छतु नाम गच्छन् ? ।
छायेव वामथ गतागतमाचरिष्णोः
तस्याध्वजश्रमहरा मकरध्वजस्य ॥ १२२ ॥

चेत इति ।—ननु भो दमयन्ति ! कुचयोः स्तनयुगयोः, पत्रं तिलकरचनैव, राजधानीयः राजावासीभूतनगरसम्बन्धी, केतुः ध्वजः, पताकास्थानीय इत्यर्थः, मकरः मीनविशेषः यस्याः सा तादृशी, भवती त्वं, चेतोभवस्य कामस्य, राजधानी राजावासभूता नगरी, नगरीस्वरूपेत्यर्थः,राजधान्यामिव राजभिः निजनिजासाधारणचिह्नयुक्तानां ध्वजाना स्थापनीयत्वात् कामराजस्य मुख्यध्वजः मकरः राजधानीभूतयोः तव कुचयोः चित्रितः राजते इति भावः ; तरुणि ! हे युवति ! के जनाः, मीनकेतोः कामस्य, महोदयः आधिपत्यं, राज्यप्राप्तिरूपोन्नतिरित्यर्थः, तत्र यः महः उत्सवः, तं स्पृशति स्पर्शं करोतीति तादृश्या, ( "महोदयः कान्यकुब्जेऽप्याधिपत्यापवर्गयोः" इति विश्वः । "महस्तूत्सवतेजसोः" इत्यमरः ) अस्यां राजधानीस्वरूपायां भवत्यां, ते तव, भ्रुवौ भ्रूयुगलमेव, तोरणं वहिर्द्वारं, वहिर्द्वारस्थितवक्रकाष्ठस्वरूपमित्यर्थः, न ब्रुवते ? न कथयन्ति ? अपि तु सर्वः एव ब्रुवते इत्यर्थः ॥१२१॥

अस्या इति ।—हे महाराज ! कामः मीनकेतनः, अस्याः दमयन्त्याः सकाशात्, भवन्त त्वा, तथा भवतः त्वत्तः सकाशात्, एनां दमयन्तीम्, अनिशं निरन्तरं, गच्छन् गतागतं कुर्वन्नित्यर्थः, कथं किमर्थं, श्रमम् आयासं, नाम सम्भावनायां,

स्वेदप्लवप्रणयिनी तव रोमराजी
रत्यै यदाचरति जागरितव्रतानि ।
आभासि तेन नरनाथ ! मधूत्थसान्द्र-
मग्नासमेषुशरकेशरदन्तुराङ्गः ॥ १२३ ॥

न ऋच्छतु ? न प्राप्नोतु ? अपि तु ऋच्छत्येव इत्यर्थः, निरन्तरं यातायातकरणादिति भावः; अथ किंवा, गतागतं गमनागमनम्, आचरिष्णोः कुर्वतः, तस्य श्रान्तस्य, मकरध्वजस्य कामस्य, वां युवयोः, छाया एव कान्तिरेव, सौन्दर्य्यमिति यावत्, अनातप एव च, ("छाया सूर्य्यप्रिया कान्तिः प्रतिविम्बमनातपः" इत्यमरः) अध्वजं पथपर्य्यटनजनितं, श्रमं क्लान्तिं, हरति नाशयति या सा तादृशी, भवतीति शेषः, छायाबहुले मार्गे गतागतिं कुर्वाणानां पान्थानां पर्य्यटनक्लेशाननुभवादिति भावः। दमयन्त्याः कामस्त्वयि तव च दमयन्त्यामेव वर्त्तते, नान्यत्र कुत्रापीति तात्पर्य्यम् ॥ १२२ ॥

स्वेदेति।—नरनाथ! हे मनुजाधिप! नल! स्वेदः घर्मजलं, तत्र प्लवे स्नाने, प्रणयः प्रीतिः अस्या अस्तीति सा तादृशी, तव भवतः, रोमराजिः रोमसमूहः, रत्यै सुरताय, जागरितानि जागरणान्येव, उद्गमा एव च, व्रतानि नियमान्, यत् आचरति अनुतिष्ठति, पुष्पवती कामिनी यथा शुद्धस्नाता पतिसन्तोषार्थं जागरितानि आचरति तद्वदिति भावः, तेन व्रताचरणेन हेतुना, मधुनः क्षौद्रस्य, शरात्मककुसुमसारस्य इत्यर्थः, उत्थन उद्गमेन, ["सुपि स्थः" इत्यत्र योगविभागात् भावे क-प्रत्यये ततः समासः] सान्द्राः गाढ़ाः, मिश्रणेन हेतुना घनीभूता इत्यर्थः, तथा मग्नाः भवदङ्गे अन्तःप्रविष्टाश्च, असमेषोः अयुग्मशरस्य कामस्य, शराणां

प्राप्ता तवापि नृप ! जीवितदेवतेयं
घर्माम्बुशीकरकरम्बनमम्बुजाक्षी ।
ते ते यथा रतिपतेः कुसुमानि बाणाः
स्वेदस्तथैव किमु तस्य शरक्षतास्रम् ? ॥ १२४ ॥
रागं प्रतीत्य युवयोस्तमिमं प्रतीची
भानुश्च किं द्वयमजायत रक्तमेतत् ? ।

बाणानां, कुसुममयानामिति भावः, केशरैः किञ्जल्कैः, दन्तुराणि निम्नोन्नतानि, अङ्गानि अवयवाः यस्य सः तादृशः इव, आभासि प्रतीयसे, भैमीसङ्गात् सात्त्विकभावोदयेन रोमाञ्चितशरीरः स्वेदयुक्तश्चासि इति निष्कर्षः ॥ १२३ ॥

प्राप्तेति ।—नृप ! हे राजन् ! नल ! तव भवतः, जीवितस्य जीवनस्य, देवता अधिष्ठात्री, जीवनेश्वरीत्यर्थः, अम्बुजाक्षी कमलनयना, इयम् दमयन्ती अपि, घर्माम्बुनः स्वेदजलस्य, शीकरैः कणैः, करम्बनं मिश्रणं, प्राप्ता अधिगता, सात्त्विक-भावोदयात् स्वेदप्लुताङ्गी जाता इत्यर्थः, रतिपतेः कामस्य, ते ते प्रसिद्धाः, बाणाः शोषणसम्मोहनादयः शराः, यथा यद्वत्, कुसुमानि कमलादीनि पुष्पाणि, अभवन्निति शेषः, तथैव तद्वदेव, स्वेदः घर्मोदकं, तस्य कामस्य, शराणां बाणानां, क्षतस्य व्रणस्य, अस्रं रक्तं, किमु ? तथा हि सुकुमाराण्यपि कुसुमान्यपि यदि कामस्य शराः भवितुमर्हन्ति, तदा स्वेदोदकमलोहितमपि तस्य शराघातनिसृतं लोहितं भवितुमर्हत्येव, दैवप्रभावस्य उभयत्रापि तुल्यत्वादिति भावः ॥ १२४ ॥

रागमिति ।—हे राजन् ! प्रतीची पश्चिमा दिक्, भानुः सूर्य्यश्च, एतत् द्वयम् उभयं, युवयोः भवतोः, तं पूर्वोक्तस्वेदादि-सात्त्विकभावसूचितम्, इमं परिदृश्यमानं, रागम् अनुरागं,

तद्वीक्ष्य वां किमिह केलिसरित्सरोजैः
कामेषुतोचितमुखत्वमधीयमानम् ? ॥ १२५ ॥
अन्योऽन्यरागवशयोर्युवयोर्विलास-
स्वच्छन्दताच्छिदपयातु तदालिवर्गः ।

---

प्रतीत्य ज्ञात्वा, प्रत्यक्षं दृष्ट्वेत्यर्थः, रक्तं रक्तवर्णम् अनुरक्तञ्च, ( "रक्तं स्यात् कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि। अनुरक्ते च नील्यादिरञ्जिते लोहितेऽन्यवत् ॥" इति विश्वः) अजायत किम्? अभवत् किम्? कयोश्चित् स्त्रीपुंसयोः सम्भोगानुरागदर्शनेन अपरयोरपि स्त्रीपुंसयोः तथाविधानुरागोत्पत्तेः प्रायोदर्शना-दिति भावः, दिवाविहारस्य शास्त्रनिषिद्धत्वात् अथच भैमी-नलयोरत्युत्कटसम्भोगाभिलाषावलोकनात् कृपया अस्तगमन-द्वारा रात्र्यानयनाभिप्रायेण सूर्य्यः किं रक्तवर्णोऽजायत इति तात्पर्य्यम्; तथा इह अस्मिन् समये, केलिसरितः तवैव क्रीडानद्याः, सरोजैः कमलैः, तत् प्रतीचीभानुदयं, वां युवाञ्च, वीक्ष्य दृष्ट्वा, अस्तगमनाय सुरतसम्भोगाय च अभिलाषिण-मवलोक्येत्यर्थः, कामेषुतायाः कन्दर्पबाणत्वस्य, उचितं योग्यं, मुखम् अग्रभागः, मुकुलितत्वेन सूक्ष्ममिति भावः, येषां तेषां भावः तत्त्वम्, अधीयमानम् अभ्यस्यमानं, किम्? वर्त्तते इति शेषः, मुखस्य सूक्ष्मतायाः अभावे बाणत्वासङ्गतेरिति भावः। सायंकालोपस्थितेः प्रतीचीभानू अरुणवर्णौ जातौ, कमलञ्च मुकुलितप्रायम्, अतः सत्वरं रात्रिरागमिष्यति, अलं वाम् उत्कण्ठयेति निष्कर्षः॥ १२५ ॥

अन्योऽन्येति।—हे दमयन्तीनलौ! तत् तस्मात्, युवयो-रत्यन्तसुरताभिलाषहेतोरित्यर्थः, अन्योऽन्यस्मिन् परस्परं प्रति, रागस्य अनुरागस्य, रमणाभिलाषस्येत्यर्थः, वशयोः अधीनयोः,

अत्याजयन् सिचयमाजिमकारयन् वा
दन्तैर्नखैश्च मदनो मदनः कथं स्यात् ?॥ १२६ ॥
इति पठति शुके मृषा ययुस्ताः
बहुरूपकृत्यमवेत्य सान्ध्यवेलम् ।
कुपितनिजसखीदृशाऽऽहृष्टाः
कमलतयेव तदा निकोचवत्यः ॥ १२७ ॥

युवयोः भवतोः, विलासस्य सुरतक्रीड़ायाः, स्वच्छन्दतां स्वाभिप्रायानुवर्त्तितां, छिनत्ति व्याहन्ति यः सः तादृशः, सुरतव्यापारस्य रहः सम्पाद्यत्वादिति भावः, आलिवर्गः सखीसमूहः, दमयन्त्या इति शेषः, अपयातु निर्गच्छतु, गृहादिति शेषः ; तथा हि, मदनः कामः, सिचयं वस्त्रं, दम्पत्योरिति भावः, अत्याजयन् अमोचयन्, दम्पतीभ्यामेव परस्परं वस्त्रोन्मोचनमकारयन् इत्यर्थः, वा अथवा, दन्तैः दशनैः, नखैश्च कररुहैश्च, आजिं युद्धं, परस्पराघातरूपमित्यर्थः, अकारयन् अनाचरयन्, दम्पतीभ्यामेव परस्परमिति भावः, कथं केन प्रकारेण, मदनः मदयिता, सुरतव्यापारे मत्ततोत्पादक इत्यर्थः, स्यात् ? भवेत् ? अपि तु न कथञ्चिदेवेत्यर्थः ॥ १२६ ॥

इतीति।—इति पूर्वोक्तप्रकारेण, शुके कीरपक्षिणि, पठति वाचयति सति, गन्धर्वराजतनयानां वीणागानानुवादक्रमेण स्फुटम् उच्चारयति सतीत्यर्थः, तदा तस्मिन् सन्ध्यासमये, कमलतयेव पद्मत्वेनेव हेतुना, निजनिजवदनानामिति भावः, निकोच. सङ्कोचः विद्यते यासां ताः निकोचवत्यः सङ्कोचशालिन्यः, एकत्र—सन्ध्याकालागमनात्, अन्यत्र—सुरतप्रसङ्गोत्थानेन लज्जोदयादिति भावः, ताः आल्यः गन्धर्वराजतनयाश्च, मृषा मिथ्या, कुपितायाः क्रुद्धायाः, सखीनिर्गमनेन क्रोधभावं

अकृत परभृतः स्तुहि स्तुहीति
श्रुतवचनस्रगनक्तिवृत्तचञ्चुम्।
पठितनलनुतिं प्रतीव कीरं
तमिव नृपं प्रति जातनेत्ररागः॥ १२८॥

प्रकाशमानाया इत्यर्थः, निजसख्याः दमयन्त्याः सम्बन्धिन्या, दृशा चक्षुषा, अर्द्धदृष्टाः किञ्चिदीक्षमाणाः, क्रोधव्याजेन ईषदवलोकिताः सत्य इत्यर्थः, सान्धिवेलं सन्धिवेलायां सन्ध्यासमये भवं, ["सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्"] बहु अनेकं, नृपस्य नलस्य, कृत्यं कार्य्यं, सान्ध्योपासनादिकम् अनुष्ठेय-मित्यर्थः, अवेत्य ज्ञात्वा, ययुः प्रतस्थिरे, तस्मात् गृहादिति शेषः॥ १२७॥

अकृतेति।—परभृतः कोकिलः, सख्या आनीत इति भावः, नृपं राजानं, तं नलं, प्रति उद्दिश्य, जातः उत्पन्नः, नेत्रयोः नयनयोः, रागः रक्तवर्णता अनुरागश्च यस्य सः तादृशः सन् इव, तस्य परमसुन्दराकारत्वादिति भावः, ("रागोऽनुरागे मात्सर्य्ये क्लेशादौ लोहितादिषु" इति विश्वः) अत एव नृपस्तुतौ कीरस्य प्रवर्त्तनमिति बोद्धव्यम्; श्रुतानाम् आकर्णितानां, वचनस्रजां वाक्यमालिकानाम्, अन्यमुखात् श्रुतवाक्यपर-म्पराणामित्यर्थः, अनूक्त्या अनुवचनेन, वित्ते विख्याते इति तादृश्यौ, ["तेन वित्तश्चुञ्चुप्चणपौ"] चञ्चू त्रोटद्वयं यस्य तं तादृशम्, एतेन नलस्तुतौ कीरस्य सामर्थ्यमस्तीति सूचितम्; तथा पठिता अधीता, उच्चरिता इत्यर्थः, नलस्य नैषधस्य, नुतिः स्तुतिः येन तं तादृशं, कीरं शुकं, प्रति लक्ष्यीकृत्य इव, स्तुहि स्तुहि स्तवं कुरु स्तवं कुरु, इति एवं ध्वनिम्, अकृत कृतवान्, पिको हि राजनि अनुरागाधिक्यात् नलस्तुतिविषये विरतं शुकं

तुङ्गप्रासादवासादथ भृशकृशतामायतीं केलिकुल्याम्
अर्द्धाचोदर्कबिम्बप्रतिकृतिमणिना भीमजा राजमानाम्।
वक्रं वक्रं व्रजन्तीं फणियुवतिरिति त्रस्नुभिर्व्यक्तमुक्ता-
न्योऽन्यं विद्रुत्य तीरे रथपदमिथुनैः सूचितामार्त्तिकृत्या॥१२९॥

स्तुहि स्तुहि इति सहजरवम् उच्चार्य्य प्रोत्साहितवानिवेति भावः॥ १२८॥

तुङ्गेति।—अथ कोकिलवचनानन्तरं, भीमजा दमयन्ती, तुङ्गे अत्युन्नते, प्रासादे सौधे, वासात् अवस्थितेः हेतोः, भृशम् अत्यर्थं, कृशतां क्षीणताम्, आयतीं गच्छन्तीं, विस्तृतत्वेऽपि प्रासादस्य अत्युन्नततया दमयन्तीदृशि अतिकृशत्वेन प्रतीयमानामित्यर्थः, दृश्यते हि सुदूरात् स्थूलमपि द्रव्यं कृशत्वेन लोके, अत्र प्रासादस्य तुङ्गतैव कुल्याया दूरत्वे हेतुर्बोद्धव्यः, तथा अर्कबिम्बस्य सूर्य्यमण्डलस्य, अस्तोन्मुखत्वात् आरक्तस्येति भावः, प्रतिकृतिरेव प्रतिबिम्बमेव, तज्जलपतितेति भावः, मणिः वृहदाकारपद्मरागरत्नमित्यर्थः तेन, राजमानां शोभमानां, वक्रं वक्रं कुटिलं कुटिलं यथा तथा, व्रजन्तीं गच्छन्तीं, प्रवहन्तीमित्यर्थः, अत एव फणियुवतिः काचित् सर्पस्त्री इयम्, इति एवं विविच्य, त्रस्नुभिः भीरुभिः, रथपदानां चक्रनाम्नां, मिथुनैः द्वन्द्वैः, [कर्त्तृभिः] व्यक्तं स्फुटमेव, मुक्तं त्यक्तम्, अन्योऽन्यं परस्परं यस्मिन् तत् यथा भवति तथा, तीरे कूलभागे, कुल्याया एव एकैकस्मिन् तीरे इत्यर्थः, विद्रुत्य पलाय्य, आर्त्तिकृत्या दुःखस्वनेन साधनेन, निशागमनात् भाविविरहचिन्तया कातरस्वरेणेति भावः, सूचितां ज्ञापिताम्, ईषदन्धकारागमेन स्पष्टं न दृश्यमानामपि चक्रवाकशब्दैः विदितामित्यर्थः, केलिकुल्यां

अथ रथचरणौ विलोक्य रक्तौ
अतिविरहासहताऽऽहताविवास्रैः ।
अपि नमकृत पद्मसुप्तिकालं
श्वसनविकीर्णसरोजसौरभं सा ॥ १३० ॥

अभिलपति पतिं प्रति स्म भैमी
सदय ! विलोकय कोकयोरवस्थाम् ।
मम हृदयमिमौ च भिन्दतीं हा !
क इव विलोक्य नरो न रोदितीमाम् ? ॥१३१॥

---

क्रीडार्थं कृत्रिमसरितं, ( "कुल्याऽल्पा कृत्रिमा सरित्"इत्यमरः ) अद्राक्षीत् ऐक्षिष्ट ॥ १२९ ॥

अथेति ।—अथ क्रीडासरिद्दर्शनानन्तरं, सा दमयन्ती, रथचरणौ चक्रवाकयुगलौ, अतिविरहस्य समस्तरजनीव्यापितया दीर्घवियोगस्य, असहतया अक्षमतया, आहतौ प्राप्ताघातौ, कामशरविद्धतया कातरौ इत्यर्थः, द्विधा भूतौ इत्यर्थश्च, अत एव अस्रैरिव रुधिरैरिव, रक्तौ रक्तवर्णौ, अनुरक्तौ च, विलोक्य दृष्ट्वा, नम् आसन्नं, पद्मानां कमलानां, सुप्तिकालमपि सङ्कोचसमयमपि, सायंसमयमपीत्यर्थः, श्वसनेन चक्रवाकदुःखदर्शनेन स्वस्या अपि दुःखसूचकदीर्घनिःश्वासेन, विकीर्णं विक्षिप्तं, सरोजसौरभं पद्मसौगन्ध्यं यस्मिन् तं तादृशम्, अकृत कृतवती, तदा सन्ध्यासमये पद्मसङ्कोचात् तत्सौरभासम्भवेऽपि स्वस्याः पद्मिनीजातीयत्वात्, पद्मिन्याश्च पद्मसुगन्धिश्वासवायुत्वात् निःश्वासमोचनेन पद्मसौगन्ध्यं विस्तारयति स्म इति भावः ॥ १३० ॥

अभिलपतीति ।—भैमी दमयन्ती, पतिं नलं, प्रति उद्दिश्य, अभिलपति स्म उवाच, किमित्याह—सदय ! हे दयालो ! कोकयोः चक्रवाकयोः, अवस्थां दुर्दशां, वियोगजनितकातर्य-

कुमुदमुदमुदेष्यतीमसोढ़ा
रविरविलम्बितुकामतामतानीत्।
प्रतितरु विरुवन्ति किं शकुन्ताः
स्वहृदि निवेशितकोककाकुकुन्ताः? ॥ १२२ ॥

मिति यावत्, विलोकय पश्य, मम मे, हृदयं वक्षःस्थलम्, इमौ वियोगिनौ कोकौ च, भिन्दतीं विदारयन्तीं वियोजयन्तीश्च, अनयोः कातरतादर्शनजनितशोकात्, वियोगदुःखदानाच्चेति भावः, इमां वियोगावस्थां, विलोक्य दृष्ट्वा, हा! खेदे, कः इव नरः को वा जनः, न रोदिति? न क्रन्दति? अपि तु सर्व एव जनः रोदनं करोत्यर्थः। सदयत्वात् तवापि रोदनसम्भव इति मन्ये इति भावः॥ १२१ ॥

कुमुदेति।—रविः भानुः, उदेष्यतीम् आविर्भविष्यन्तीं, कुमुदानां कैरवाणां, मुदं चन्द्रोदयात् विकाशरूपं हर्षम्, असोढ़ा असहिष्णुरिव सन्, तेषामुत्फुल्लभावं द्रष्टुमक्षमः इव सन्नित्यर्थः, [ सहेः तृणि "हो ढः" इति हस्य ढत्वे "झषस्तथोर्धोऽधः" इति तस्य धत्वे, "ष्टुना ष्टुः" इति धस्य ढत्वे, "ढो ढे लोपः" इति प्रथम-ढलोपे "सहिवहोरोदवर्णस्य" इति ओत्वम् ] अविलम्बितुं त्वरां कर्त्तुं, शीघ्रमस्तं यातुमित्यर्थः, कामः अभिलाषः यस्य तस्य भावः तत्ता ताम्, अतानीत् विस्तारयामास, कृतवान् इत्यर्थः; दृश्यते च लोके, परोत्कर्षमसहमानाः स्वेतरेषामानन्ददर्शनात् तत्स्थानात् शीघ्रमेव प्रतिष्ठन्ते इति; तथा प्रतितरु तरुं तरु प्रति, प्रत्येकवृक्षोपरि उपविष्टा इत्यर्थः, [ याथार्थ्येऽव्ययीभावः ] शकुन्ताः पक्षिणः, स्वहृदि निजनिजवक्षसि, निवेशितः स्थापितः, दैवेन निखात इत्यर्थः, कोकानां चक्रवाकाणां, काकुः वियोगजार्त्तस्वरः एव,

अपि विरहमनिष्टमाचरन्तौ
अधिगमपूर्वकपूर्वसर्वचेष्टौ।
इदमहह! निदर्शनं विहङ्गौ
विधिवशचेतनचेष्टितानुमाने॥ १३३॥

अङ्घ्रिस्थारुणिमेष्टकाविसरणैः शोणे कृपाणः स्फुटं
कालोऽयं विधिना रथाङ्गमिथुनं विच्छेत्तुमन्विच्छता।

कुन्तः प्रासाख्यास्त्रविशेषः येषां तादृशाः सन्तः, ("प्रासस्तु कुन्तः" इत्यमरः) विरुवन्ति शब्दायन्ते, किम्? वितर्के किं-शब्दः॥ १३२॥

अपीति।—हे नाथ! अधिगमः ज्ञानं, वियोगक्लेशानुभव इत्यर्थः, पूर्वम् आदौ यासां तास्तादृश्यः, पूर्वसर्वचेष्टाः स्वयमेवानुष्ठितसकलविरहव्यापाराः ययोस्तौ तादृशौ, अपि प्रागनुभूतविरहदुःखावपीत्यर्थः, अनिष्टम् अनभिमतं, विरहं वियोगम्, आचरन्तौ अनुतिष्ठन्तौ, विधात्वनियमेन दीर्घकालं पालयन्तौ इत्यर्थः, विहङ्गौ चक्रवाकपक्षिणौ, विधिवशं दैवाधीनं, चेतनानां प्राणिनां, चेष्टितम् आचरणम्, इत्येवं-रूपे, अनुमाने कार्य्यात् कारणविशेषज्ञाने विषये, प्राक्तनकर्मवशादेव अनभिमतेऽपि विषये प्राणिनां प्रवृत्तिदर्शनादिति भावः, इदम् एतदेव, निदर्शनं दृष्टान्तः, अहह इति खेदे अद्भुते वा; तथा हि, सर्वे एव प्राणिनः दैवाधीनतयैव हितमहितं वा सर्वं कार्य्यम् इच्छया वा अनिच्छया वा कर्त्तुं प्रेरिता भवन्ति, ततश्च विरहस्य अनिष्टत्वं जानन्तावपि चक्रवाकयुगलौ स्वयमेव तमाचरत इति तावेवात्र निदर्शनमिति निष्कर्षः॥ १३३॥

अङ्घ्रीति।—हे प्रियतम! रथाङ्गयोः चक्रवाकयोः, मिथुनं द्वन्द्वं, विच्छेत्तुं वियोक्तुं, विशेषेण विदारयितुञ्च, अन्विच्छता

रश्मिग्राहिगरुत्मदग्रजसमारब्धाविरामभ्रमी
दण्डभ्राजिनि भानुशाणवलये संसज्य किं तिज्यते ?॥१३४॥
इति स विधुमुखीमुखेन मुग्धा-
लपितसुधासवमर्पितं निपीय ।

---

अभिलषता, विधिना ब्रह्मणा, अयम् एषः, कालः सायंसमयः, तत्स्वरूप इत्यर्थः, कृष्णवर्णश्च, ( "कालो मृत्यौ महाकाले समये यमकृष्णयोः" इति विश्वः ) कृपाणः खड्गः, अङ्घ्रिः किरणः पादश्च, तत्र तिष्ठन्तीति अङ्घ्रिस्थाः, ये अरुणिमानः रक्तिमानः, तान्येव इष्टकाभ्यिसरणानि इष्टकाचूर्णनिक्षेपाः, तैः शोणे रक्तवर्णे, रश्मिग्राहिणा अश्वरज्जुधारिणा, शाणयन्त्ररज्जुधारिणा च, गरुत्मदग्रजेन गरुडज्येष्ठेन अरुणेन, केनचित् शाणिकेन च, समारब्धा प्रक्रान्ता, अविरामा अविच्छिन्ना, भ्रमिः भ्रामणं यस्य तस्मिन्, तथा दण्डेन चण्डांशोः भानोः पारिपार्श्विकेन, शाणस्थेन वर्त्तुलेन काष्ठेन च, ( "दण्डो यमे मानभेदे लगुडे दमसैन्ययोः । व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि ॥ अभिमाने ग्रहे दण्डश्चण्डांशोः पारिपार्श्विके ॥" इति विश्वः ) भ्राजिनि शोभमाने, भानौ सूर्य्य एव, शाणवलये शस्त्रोत्तेजन-यन्त्रमण्डले, गोलाकारत्वसाधर्म्यादिति भावः, संसज्य आरोप्य, स्फुटं स्पष्टं यथा भवति तथा, तिज्यते तीक्ष्णीक्रियते, किम् ? [ तिज निशाने क्षमायाञ्च इत्यस्मात् भौवादिकात् कर्मणि यकि रूपम् ] "निज्यते" इति पाठे—परिष्क्रियते, उज्ज्वलीक्रियते इत्यर्थः, [ "णिजिर शौचे" इत्यस्य रूपम् ] शाणिका हि शाणचक्रे इष्टकाचूर्णं दत्त्वा दत्त्वा कृपाणादिकमुत्तेजयन्ति इति लोके दृश्यते ॥ १३४ ॥

इतीति ।—सः नलः, इति अनेन प्रकारेण, विधुमुख्याः

स्मितशबलबलन्मुखोऽवदत् तां
स्फुटमिदमीदृशमीदृशं यथाऽऽत्थ ॥ १३५ ॥
स्त्रीपुंसौ प्रविभज्य जेतुमखिलावालोचितौचित्ययो:
नम्रा वेद्मि रतिप्रसूनशरयोश्चापद्वयीं त्वद्भ्रुवौ ।
त्वन्नासाच्छलनिर्मितां द्विनलिकीं नालीकमुक्त्येषिणो:

चन्द्राननाया: दमयन्त्या:, मुखेन वदनेन, अर्पितं दत्तं, मुग्धं सुन्दरम्, आलपितमेव भाषितमेव, सुधासवं पीयूषवत् स्वादु मद्य, निपीय आस्वाद्य, स्मितेन ईषद्धास्येन, शबलं चित्रं, रञ्जितमित्यर्थ:, बलत् चलच्च, भैमीं प्रतिवक्तुमुपक्रमादिति भाव:, मुखं वदनं यस्य स: तादृश: सन्, तां दमयन्तीम, अवदत् अवोचत्; अन्येऽपि कामिन: यथा कामिनीमुखार्पितासवं सादरं पिबन्ति, तत: बलितमुखा: सहास किञ्चित् वदन्ति च तद्वदिति भाव: ; किमित्याह—हे प्रिये ! यथा यादृशं, यदित्यर्थ:, आत्थ ब्रूषे, त्वमिति शेष:, इदम् एतत्, ईदृशम् ईदृशम् एवम्भूतमेवम्भूतं, स्फुटं व्यक्तमेव, सत्यमेवेत्यर्थ: ॥१३५॥

स्त्रीपुंसाविति ।—हे प्रिये ! त्वद्भ्रुवौ तव भ्रूयुगलं, कुटिलाविति शेष:, अखिलौ समस्तौ, स्त्रीपुंसौ नारीनरौ, प्रविभज्य विभागीकृत्य, रतेरंशे स्त्रिय: कामांशे च पुमांस इत्येवं विभागं कृत्वेत्यर्थ:, जेतुं वशीकर्त्तुम्, आलोचितं मनसा विवेचितम्, औचित्यं युक्तियुक्तता याभ्यां तादृशयो:, रतिप्रसूनशरयो: कामप्रियाकामयो:, नम्रा लक्ष्यं लक्षीकृत्य आकर्षणेन वक्रीभूतामित्यर्थ:, चापद्वयीं कार्मुकयुगलम्, उभयोरेव वक्रत्वेन साम्यादिति भाव:, वेद्मि जानामि, नालीकमुक्त्येषिणो: नालीकानां "पिस्तल्" इत्याख्यया प्रसिद्धानाम् अस्त्रविशेषाणां, नालीकानां गुलिकाविशेषाणामित्यर्थो वा,

त्वन्निःश्वासलते मधुश्वसनजं वायव्यमस्त्रं तयोः ॥ १३६ ॥
पीतो वर्णगुणस्तवातिमधुरः कायेऽपि सोऽयं यथा
यं बिभ्रत् कनकं सुवर्णमिति कैराहत्य नोत्कीर्त्त्यते ? ।
का वर्णान्तरवर्णना धवलिमा राजेव रूपेषु यः

---

मुक्तिं मोचनं, निक्षेपमित्यर्थः, इच्छतोः अभिलषतोः, तयोः रतिमदनयोः, त्वन्नासाच्छलेन तव नासिकाद्वयव्याजेन, निह्नुतां गोपितां, द्वयोः नालिकयोः समाहारः इति तां द्विनलिकीं नलद्वयविशिष्टगुलिकाक्षेपकलौहमयास्त्रविशेष-मित्यर्थः, ( दोनलो पिस्तल ) वेद्मि इति पूर्वेणान्वयः ; उभयोरेव तुल्यदर्शनत्वादिति भावः, तथा तव भवत्याः, निःश्वासौ एव लते निश्वासवायुप्रवाहद्वयमित्यर्थः, तयोः रतिस्मरयोः, मधुश्वसनजं वसन्तकालिकमलयजातं, वायव्यं वायुदेवताकम्, अस्त्रम् आयुधं, वायुत्वाविशेषादिति भावः, वेद्मि इति पूर्वेणान्वयः ; अहमिति शेषः । स्मरास्त्रोपमे त्वमतीव निपुणेति तात्पर्य्यम् ॥ १३६ ॥

पीतो वर्णेति ।—हे प्रिये ! सः प्रसिद्धः, अयम् एषः, पीतः गौरो नाम, वर्णगुणः वर्णस्वरूपः, अतिमधुरः अतिरमणीयः, यथा येन हेतुना, यं पीतवर्णं, बिभ्रत् धारयत्, कनकं हिरण्यं, कैः जनैः, सुवर्णं शोभनः वर्णः यस्य तत् तादृशम्, इति एवं-रूपेण, आहत्य आग्रहेणाक्लिश्य, न उत्कीर्त्त्यते ? न उच्चैः प्रशस्यते ? अपि तु सर्वैरेव उत्कीर्त्त्यते इत्यर्थः ; तथा तव भवत्याः, काये शरीरे अपि, अस्ति इति शेषः, अत एव अतिमधुर इति मन्ये इति भावः ; वर्णान्तराणां पीतशुक्लव्यतिरिक्तानां नीलादीनां वर्णानां, वर्णना प्रसङ्गः, का ? कीदृशी ? दूरे आस्तामिति भावः, यः धवलिमा शुक्लत्वं, शुभ्रवर्ण

तद्योगादपि यावदेति रजतं दुर्वर्णतादुर्यशः ॥ १३७ ॥
खण्डक्षोदमृदि स्थले मधुपयःकादम्बिनीतर्पणात्
कृष्टे रोहति दोहदेन पयसा पिण्डेन चेत् पुण्ड्रकः ।

इत्यर्थः, रूपेषु वर्णेषु, राजा एव उत्कृष्ट एव, अमिश्रवर्णत्वात् वर्णेषु प्रथमोच्चरितत्वाच्चेति भावः, तस्य धवलिम्नः, योगात् सम्बन्धात् अपि, शुभ्रवर्णधारणादपीत्यर्थः, रजतं रौप्य, [ कर्त्तृ ] यावत् साकल्येन, दुर्वर्णतादुर्यशः दुष्टः निन्दितः, वर्णः रूपं यस्य तस्य भावः तत्ता, तस्याः दुर्यशः अकीर्त्तिम, अपकृष्टवर्णतालक्षणनिन्दामित्यर्थः, दुर्वर्णम् इति नामधेयं च, [ कर्म ] ( "दुर्वर्णं रजतं रूप्यम्" इत्यमरः ) एति प्राप्नोति ; तथा हि, स्वर्णस्य पीतत्वादेव लोकाः तं सुवर्णमिति वदन्ति, यतः असौ हि पीतो वर्णः तव देहे विद्यते, ततश्च पीतो वर्णः वर्णेषु मुख्यः एव, नीलरक्तादयश्च हीनाः, यस्तु शुभ्रो वर्णः वर्णेषु प्रथमः कीर्त्यते तद्योगादपि रजतं दुर्वर्णमिति निन्दामाप्नोति अतः शुभ्रवर्णोऽपि पीतात् हीन एव इति निष्कर्षः ॥ १३७ ॥

खण्डेति ।—हे प्रिये ! मधूनि क्षौद्राणि एव, पयांसि जलानि यस्याः तादृश्याः, कादम्बिन्याः मेघमालिकायाः, ( कादम्बिनी मेघमाला" इत्यमरः ) तर्पणात् आप्यायनात्, तादृशवारिवर्षणेन अभिषिञ्चनादनन्तरमित्यर्थः, कृष्टे हलचालनेन पुनरपि कृतकर्षणे, वर्षणानन्तरं कृषीवलाः पुनरपि क्षेत्रं कर्षन्तीति लोकदर्शनादिति भावः ; खण्डस्य शर्कराविशेषस्य, क्षोदः चूर्णमेव, मृत् मृत्तिका यत्र तादृशे, स्थले शस्यक्षेत्रे, पिण्डेन पाकविशेषात् पिण्डीभूतेन, घनीभूतेनेत्यर्थः, पयसा क्षीरेण एव, "पयसाम्" इति पाठे—पयसां

स द्राक्षाद्रवसेचनैर्यदि फलं धत्ते तदा त्वद्गिराम्
उद्देशाय ततोऽप्युदेति मधुराधारस्तमप्प्रत्ययः॥ १३८॥
उन्मीलद्गुडपाकतन्तुलतया रज्ज्वा भ्रमोरर्जयन्
दानान्तःश्रुतशर्कराचलमथः स्वनामृतान्धाः स्मरः।

---

पिण्डेनेत्यन्वयः ; दोहदेन वृक्षादिवृद्धिकरेण वस्तुना साधनेन, पुण्ड्रकः इक्षुविशेषः, ("रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः" इत्यमरः) रोहति प्रभवति, चेत् यदि, सः पुण्ड्रकः, द्राक्षाद्रवसेचनैः मृद्वीकारससेकैः, यदि चेत्, फलं शस्यं, धत्ते धारयति, तदा तर्हि, ततोऽपि तादृशेक्षुफलादपि, त्वद्गिरां भवद्वचनानाम्, उद्देशाय उत्कर्षनिर्देशाय, मधुरः मधुर इति शब्दः, आधारः आश्रयः, प्रकृतिरित्यर्थः यस्य स तादृशः, तमप्प्रत्ययः मधुरतम इत्यर्थः, उदेति उत्पद्यते, सम्भाव्यमानतादृशेक्षुफलादपि मधुरतमा तव वाणी इति भावः॥ १३८॥

उन्मीलदिति।—हे प्रियतमे! अमृतं पीयूषमेव, अन्धः अन्नं यस्य सः तादृशः, अत एव अमृतभोजिनः देवस्य स्मरस्य तदुत्थापनायाः अतीवावश्यकता इति भावः, स्मरः कन्दर्पः, स्वेन आत्मनैव, स्वयमेवेत्यर्थः, न पुनरन्यसाहाय्येन, तथा सति न सर्वथा हर्षोत्पादकता स्यादिति भावः ; उन्मीलन्ती प्रकाशयन्ती, जायमाना इत्यर्थः, गुडस्य स्वनामख्यातस्य इक्षुरसविकारस्य, पाकात् अग्निसंयोगेन क्वथनात्, या तन्तुलता सूत्राकारता, सूत्रवदविच्छिन्नसंयोगः इत्यर्थः, यद्वा—तन्तुलता तन्तव इव तन्तवः गुडनिर्गतदोरकाः, त एव लता तया तद्रूपया, रज्ज्वा रश्मिना साधनेन, दानान्तः तुलापुरुषादिमहादानानां मध्ये, श्रुतः शास्त्रे आकर्णितः, यः शर्कराचलः सितापर्वतः, दानार्थं पर्वताकारतया स्थापितः

नव्यामिक्षुरसोदधेर्यदि सुधामुत्थापयेत् सा भव-
ज्जिह्वायाः क्वातमाह्वयेत परमा मत्कर्णयोः पारणाम् ॥११९॥
आस्ये या तव भारती वसति तल्लीलारविन्दोल्लस-
द्वासे तत्कलवैणनिक्वणमिलद्वाणीविलासामृते।
तत्केलिभ्रमणार्हगैरिकसुधानिर्माणहर्म्याधरे

शर्करारागिरित्यर्थः, स एव मन्था मन्थनदण्डः तस्य, ["भस्य टेर्लोपः" इति टिलोपः] भ्रमैः भ्रामणानि, घर्षणानीत्यर्थः, अर्जयन् सम्पादयन्, आकर्षणेन कुर्वन् सन् इत्यर्थः, इक्षुरसस्य उदधेः इक्षुरससमुद्रात्, नव्याम् अभिनवां, देवासुरोत्थापितसुधातो भिन्नरूपामित्यर्थः, सुधाम् अमृतं, यदि चेत्, उत्थापयेत् उत्तोलयेत्, तदा सा सुधा, [कर्त्री] मत्कर्णयोः मम श्रवणयोः, परमाम् उत्कृष्टां, पारणां पारणावत् अद्वितीय-तृप्तिहेतुं, भवज्जिह्वायाः तव रसनायाः, [ सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः ] क्वातिं काव्यं, गिरम् इत्यर्थः, आह्वयेत स्पर्द्धया आकारयेत्, प्रतिभटीकुर्य्यात् इत्यर्थः, ["स्पर्द्धायामाङः" इति ह्वेञः तङ्] मधुरद्रव्यवाधितं हि द्रव्यं परममधुरमेव भवति, एवञ्च प्रोक्तरूपेणैवोत्थापिता सुधा तव वाचः सादृश्यं लब्धमर्हति, न पुनरन्यः कश्चित् पदार्थ इति भावः ॥ ११९ ॥

आस्ये इति।—हे प्रिये ! तस्याः भारत्याः, लीलारविन्दस्य हस्ते स्थितस्य क्रीडाकमलस्य, उल्लसन् प्रसरन्, वासः गन्धः यस्मिन् तादृशे, पद्मिनीत्वात् पद्मतुल्यपरिमले इति भावः, तथा तस्याः भारत्या एव, कलः मधुरास्फुटः, यः वेणः वीणासम्बन्धी, निक्वणः नादः, तद्रूपं मिलत् सम्बध्यमानं, वाणीविलास एव वक्रोक्त्यादिनानाविधवाग्वैचित्र्यमेवेत्यर्थः, अमृतं पीयूषं यस्मिन् तादृशे, तथा तस्याः भारत्या एव, केलिभ्रमणार्हे

तन्मुक्तामणिहार एव किमयं दन्तस्रजो राजतः ? ॥१४०॥

वाणी मन्मथतीर्थमुज्ज्वलरसस्रोतस्वती काऽपि ते
खण्डः खण्ड इतीदमीयपुलिनस्यालप्यते वालुका ।
एतत्तीरमृदेव किं विरचिताः पूताः सिताश्चक्रिकाः ?

लीलया गमनयोग्यं, गैरिकेण रक्तवर्णधातुविशेषेण, रञ्जितया इति शेषः, सुधया धवलतासाधनचूर्णद्रव्येण, निर्माणं चित्रादि-रचना यत्र तादृशं, यत् हर्म्यं गृहं, तदेव अधरः रदनच्छदः यस्मिन् तादृशे, तव भवत्याः, आस्ये वदने, या भारती सरस्वती, वसति तिष्ठति, दन्तस्रजौ तव आस्ये पुरो दृश्यमाने ये द्वे दन्तमाले, राजतः शोभेते, तद्रूपः अयं पुरः दृश्य-मानः, तस्याः भारत्याः, मुक्तामणिहारः मुक्तामणिखचितः हारः एव, किम् ? तद्वत्ते रेजाते इत्यर्थः । सरस्वतीवीणाक्वणित-तुल्या तव वाणी इति भावः । अत्र वाणीवर्णनं प्रस्तुतम्, अन्यत् प्रासङ्गिकम् । पद्मगन्धादिभिः मुखे भारतीवासः अनुमीयते ॥ १४० ॥

वाणीति ।—हे प्रिये ! ते तव, वाणी वाक्, का अपि वर्ण-यितुम् अशक्यत्वात् लोकोत्तरा इत्यर्थः, अथच अनिर्दिष्टनामा, उज्ज्वलरसस्रोतस्वती शृङ्गाररससम्बन्धिनी नदी, अथच निर्मल-जला नदी, अत एव मन्मथस्य कामस्य, तीर्थं योनिः, कारण-मित्यर्थः, कामोद्दीपिका इति यावत्, अथ च, तीर्थं जलाव-तारः, नद्यामवतरणार्थं सोपानश्रेणीत्यर्थः, ( "तीर्थं योनौ जलावतारे च" इति हेमः ) तथा खण्डः खण्ड इक्षुविकार-विशेषः, इदमीयस्य अस्याः नद्याः सम्बन्धिनः, पुलिनस्य तोयोत्थिततटभागस्य, ( "तोयोत्थितं तत् पुलिनम्" इत्यमरः ) वालुका सिकता, इति आलप्यते गीयते, तथा पूताः

किं पोयषमिदम्पयांसि ? किमिदन्तीरे तवेवाधरौ ? ॥ १४१॥

परभृतयुवतीना सम्यगायाति गातुं
न तव तरुणि ! वाणीय सुधासिन्धुवेणी ।
कति न रसिककण्ठ कर्त्तुमभ्यस्यतेऽसौ
भवदुपविपिनाम्र ताभिराम्रेडितेन ? ॥ १४२ ॥

निर्मला:, सिता: शुभ्रा:, चक्रिका: शर्कराकृतचक्राणि, एतस्या: नद्या:, तीरस्य तटस्य, मृदा एव धवलमृत्तिकया एव, विरचिता: कल्पिता:, किम् ? तथा पोयषम् अमृतम्, अस्या: सम्बन्धीनि पयांसि इदम्पयांसि अस्या नद्या: जलानि, किम् ? अस्या: जलानि एव अमृतत्वेन आलप्यन्ते किम् ? तथा तव भवत्या:, अधरौ ओष्ठौ एव, इदन्तीरे अस्या: नद्या: उभौ तटौ, किम् ? शृङ्गाररसप्रधाना कामोद्दीपिका भवद्वाणी मधुरतमा इति भाव: ॥ १४१ ॥

परेति।—तरुणि ! हे प्रादुर्भूतयौवने ! सुधासिन्धो: अमृत-सागरस्य, वेणी प्रवाहरूपा, तव भवत्या:, इयम् उच्चार्य्यमाणा, वाणी वाक्,परभृतयुवतीना कोकिलवधूनां, सम्यक् उत्तम यथा तथा, गातुं भाषितुं, न आयाति न आगच्छति, कोकिलाऽपि ईदृशसुमधुरस्वराभावात् तवाग्रे गातुं लज्जते इति भाव:, अत: ताभि: कोकिलाभि:, भवत्या: तव, उपविपिने उपवने, य: आम्र: आम्रवृक्ष: तस्मिन्, स्थित्वा इति शेष:, असौ त्वद्वाणी, रसिके अतिमधुरे, रसालाङ्कुरास्वादेन इति भाव:, अथच ममापि ईदृशी वाणी भवतु एव साभिलाषे, कण्ठे गलदेशे, कण्ठ-ध्वनौ इत्यर्थ:, कर्त्तुं विधातुं, कण्ठस्थां कर्त्तुमित्यर्थ:, आम्रे-डितेन द्विस्त्रिवारमुक्तेन, पुन:पुनर्वापणेन इत्यर्थ:, ( "आम्रेड़ितं द्विस्त्रिरुक्तम्" इत्यमर: ) कति कियत् वारान्, न अभ्यस्यते ? न

ऊर्द्धस्ते रदनच्छदः स्मरधनुर्बन्धूकमालामयं
मौर्वी तत्र तवाधराधरतटाधःसीमलेखालता ।
एषा वागपि तावकी ननु धनुर्वेदः प्रिये ! मान्मथः
सोऽयं कोणधनुष्मतीभिरुचितं वीणाभिरारभ्यते ॥ १४३ ॥

---

शिक्ष्यते ? अपि तु बहुवारम् अभ्यस्यते एव, तथाऽपि अद्यापि तासां भवद्वाणी सम्यक् न आयाति इति ज्ञायते इति भावः । कोकिलालापात् अपि त्वद्वाणी मधुरतमा इति निष्कर्षः । गुरुगृहे ब्रह्मचर्य्यावलम्बनपूर्वकं विद्याभ्यासस्य शास्त्रीयत्वात् परभृतपदं, तथा पुमपेक्षया स्त्रीणां विशेषतः तरुणीनां कण्ठस्वरं मधुरम् इति सूचनार्थं युवतीपदं प्रयुक्तमिति बोध्यम् ॥ १४२ ॥

ऊर्द्ध इति ।—हे प्रिये ! ते तव, ऊर्द्धः उपरिस्थितः, रदनच्छदः ओष्ठः, उत्तरोष्ठ एवेत्यर्थः, बन्धूकमालामयं बन्धुजीवपुष्पमालात्मकं, स्मरधनुः कामकार्म्मुकम्, ईषत् वक्राकारत्वादिति भावः, तथा तत्र कामचापे, तव भवत्याः, अधराधरतटस्य निम्नोष्ठदेशस्य, अधःसीमायां निम्नस्थमर्य्यादायां, प्रान्तदेशे इत्यर्थः, या लेखालता वीरुदाकाररेखाविशेष इत्यर्थः, दैर्घ्यादिति भावः, सा एव मौर्वी ज्या ; एषा श्रूयमाणा, तावकी तव सम्बन्धिनी, वाक् वाणी अपि, ननु निश्चये, मान्मथः कामसम्बन्धी, कामशास्त्रप्रतिपादकः इत्यर्थः, धनुर्वेदः, सः विशिष्टः, अयं त्वद्वाणीरूपः मान्मथधनुर्वेदः, कोणधनुष्मतीभिः वीणावादनसाधनधनुर्युक्ताभिः, ("कोणो वीणादिवादनम्" इत्यमरः) वीणाभिः वल्लकीभिः, आरभ्यते अभ्यस्यते, इति उचितं युक्तं, परम् अद्यापि न आयाति इति भावः । त्वद्वाणी वीणाक्वणितात् अपि मधुरतमा इति निष्कर्षः । धनुर्वेदस्य

स ग्राम्यः स विदग्धसंसदि सदा गच्छत्यपाङ्क्तेयतां
तस्य स्प्रष्टुमपि स्मरस्य विशिखा मुग्धे! विगानोन्मुखाः।
यः किं माध्विति नाधरं तव कथं हेमेति न त्वद्वपुः
कीदृङ्नाम सुधेति पृच्छति न ते दत्ते गिरं चोत्तरम् ॥१४४॥

धनुर्धरैः एव अभ्यस्यते इति एतत् उचितं, परन्तु यत् स्वत एव न आयाति तदागमनार्थम् अभ्यासः उचितः एव इति तात्पर्य्यम् ॥ १४३ ॥

स इति।—मुग्धे! हे सुन्दरि! यः पुरुषः, मधु क्षौद्रं, मद्यं वा, किम्? कीदृशम्? इति एवं, पृच्छति प्रश्नं कुर्वाणे जने विषये, तव ते, अधरम् निम्नोष्ठम् एव, उत्तरं मधु इति प्रतिवचनं, न दत्ते न विदधाति, सः ग्राम्यः पामरः, अचतुरः इत्यर्थः, न तु तव नगरनिवासयोग्यः इति भावः; [ "ग्रामात् य-खञौ" इति भवार्थे यः ] तथा हेम कनकं, कथम? किंप्रकारकम्? इति पृच्छति जने यः त्वद्वपुः तव शरीरम्, इति उत्तरं न दत्ते, सः जनः, विदग्धानां चतुराणां, संसदि सभायां, सदा सर्वकालम, अपाङ्क्तेयतां पङ्क्तिवहिर्भूतत्वं, याति गच्छति, तेषां पङ्क्तौ न उपवेष्टुमर्हति अचतुरत्वात् इति भावः। [ पाङ्क्तेयः इति नद्यादित्वात् ढक् ] तथा सुधा नाम पीयूषाख्यं द्रव्यं, कीदृक्? कीदृशम्? इति पृच्छति जने, यश्च ते तव, गिरं वाचम्, इति उत्तरं न दत्ते, स्मरस्य कामस्य, विशिखाः वाणाः, तस्य पुरुषं, स्प्रष्टुम् अपि स्पर्शं कर्त्तुमपि, विगानोन्मुखाः विरुद्धभाषणप्रवणाः, "नीरसः अयम्" इति घृणया तं स्प्रष्टुमपि न कृतोद्यमाः इत्यर्थः। त्वद्वाणी सुधायाः अपि मधुरतमा इति भावः। अधरादिवर्णनं तु प्रासङ्गिकम् ॥ १४४ ॥

मध्ये वस्त्राणिमा यत् सगरिममहिमश्रोणिवक्षोजयुग्मा
जाग्रच्चेतोवशित्वा स्मितधृतलघिमा मां प्रतीशित्वमेषि ।
सूक्तौ प्राकाम्यरम्या दिशि विदिशि यशोलब्धकामावसाया
भूतीरष्टावपीशस्तददित मुदितः स्वस्य शिल्पाय तुभ्यम् ॥१४५॥

मध्ये इति ।—हे प्रिये ! त्वं यत् यस्मात् हेतोः, मध्ये उदर-प्रदेशे, वस्त्रः धृतः, अणिमा सौक्ष्म्यातिशयो यया सा तादृशी कृशोदरी ; तथा गरिममहिमभ्यां गुरुत्वमहत्त्वाभ्यां सह वर्त्त-मानं, श्रोणिः नितम्बः, वक्षोजयुग्मं स्तनयुगलञ्च यस्याः सा तादृशी गुरुस्थूलनितम्बा पीनोन्नतकुचा च ; तथा जाग्रत् स्फुरत्, उद्बुध्यमानमित्यर्थः, चेतसि मनसि, वश इन्द्रियाणां स्वाधीनत्वं, तदस्यास्तीति वशी तद्भावो वशित्वं जितेन्द्रियता यस्याः सा तादृशी पतिव्रता ; तथा स्मिते ईषद्धास्येऽपि, धृतः आश्रितः, लघिमा अल्पत्वं यया सा तादृशी अल्प-हासेत्यर्थः ; [अणिमादौ गुणवचनत्वादिमनिच्] तथा मां नलं, प्रति उद्दिश्य, ईशनमीशः ऐश्वर्य्यं, तदस्यास्तीति ऐशी तद्भावः ईशित्वं स्वामिताम्, एषि गच्छसि, मम प्राणानामीश्वरी भवसी-त्यर्थः ; तथा सूक्तौ वचनचातुर्य्यविषये, प्राकाम्येण प्रकार-बाहुल्येन, रम्या रमणीया, वक्रोक्त्यादिनानाप्रकारां वाणीं वक्तुं त्वमेव जानासि नान्या इति भावः ; तथा दिशि प्राच्यादौ, विदिशि आग्नेय्यादौ च, यशसः सौन्दर्य्यादिविषयककीर्त्तेः, यशसा वा कृत्वा, लब्धः प्राप्तः, कामं यथेष्टं यथा तथा, अवसायः अप्रतिहतप्रसरा गतिर्यया सा तादृशी त्रैलोक्यप्रसरकीर्त्तिः, असीति शेषः, तत् तस्मात् कारणात्, मुदितो हृष्टः, त्वां निर्माय सौन्दर्य्यादिना परितुष्टः इत्यर्थः, ईशः ईश्वरः, अष्टावपि अष्टसङ्ख्यका अपि, भूतीः ऐश्वर्य्याणि, स्वकीयाः अणिमादीः

त्वद्वाचः स्तुतये वयं न पटवः पीयूषमेव स्तुम-
स्तस्यार्थे गरुडामरेन्द्रसमरः स्थाने स जानेऽजनि।
द्राक्षापानकमानमर्दनसृजा क्षीरे दृढावज्ञया
यस्मिन्नाम धृतोऽनया निजपदप्रक्षालनानुग्रहः॥ १४६॥

मद्वासिद्वोरित्यर्थः, स्वस्य आत्मनः, शिल्पाय कारवे, तुभ्यं भवत्यै, त्वद्रूपाय निजनिर्माणाय इत्यर्थः, अदित प्रायच्छत्। यथा सन्तुष्टो हि पित्रादिः अपत्यादिभ्यः स्वकीयमैश्वर्य्यादिकं प्रददाति, तथेश्वरेण सन्तुष्टेन स्वकीयम् "अणिमा महिमा गरिमा लघिमा वशित्वमीशित्वं प्राकाम्यं कामावसायिता च" इत्येवमष्टविधमैश्वर्य्यं तुभ्यं दत्तम्, अन्यथा एतत् सर्वं त्वयि कथं स्यादिति भावः। अत्र वाणीवर्णनम् एव प्रस्तुतं मध्यादिवर्णनं प्रासङ्गिकम्॥ १४५॥

त्वदिति।—हे प्रिये! वयं नलादयः, त्वद्वाचः तव सुमधुर-वाण्याः, स्तुतये प्रशंसायै, न पटवः न समर्थाः, तस्मात् पीयूषम् अमृतमेव, स्तुमः प्रशंसां कुर्मः, तस्य पीयूषस्य, अर्थे निमित्तं, सः पुराणादिप्रसिद्धः, गरुडस्य वैनतेयस्य, अमरेन्द्रस्य देवेन्द्रस्य च, समरः युद्धम्, अजनि जातः, तत् स्थाने युक्तं, जाने इत्यहं मन्ये; द्राक्षापानकस्य पक्वद्राक्षासम्बन्धिनः संस्कृतपानीय-विशेषस्य, मानोऽहङ्कारः, माधुर्य्यातिशयरूप इति भावः, तस्य मर्दनं खण्डनं, सृजति विदधातीति तादृश्या, तथा क्षीरे दुग्धे विषये, दृढा निश्चला, अन्येन त्याजयितुम् अशक्या इत्यर्थः, अवज्ञा अनादरः यस्याः तादृश्या, अनया तव वाण्या, यस्मिन्नमृते, निजपदयोः स्वचरणयोः, प्रक्षालनेनैव शोधनेनैव, अनुग्रहः प्रसादः, धृतः कृतः, नाम सम्भावनायाम्, इति सम्भावयामीत्यर्थः, अथ च यस्मिन् पीयूषे भवद्वाक्यभूतया

शोकश्चेत् कोकयोस्त्वां सुदति ! तुदति तद्व्याहराज्ञाकरस्ते
गत्वा कुल्यामनस्तं व्रजितुमनुनये भानुमेतज्जलस्थम्।
बद्धे यद्यञ्जलावप्यनुनयविमुखः स्यात्स्वयैकग्रहोऽयं
दत्त्वैताभ्यां तदम्भोऽञ्जलिमिह भवतीं पश्य मामेवमाप्तम्॥१४७॥

वाण्या स्वोयसुमिङन्तरूपाणां पदानां प्रक्षालनात् अनु पश्चात्, ग्रहणं ग्रहः, कृतोऽस्त्येव, अमृतक्षालिततयेव निर्दोषं मधुरञ्च वदसीत्यर्थः। द्राक्षापानकक्षीरपीयूषादपि त्वद्वाणी मधुरतमा इति भावः। प्रभोर्यस्मिन्ननुग्रहातिशयः स एव प्रभोः चरणक्षालनादिकं यथा करोति तद्वत् इति बोध्यम्॥ १४६॥

शोक इति।—सुदति ! हे शोभनदन्ते दमयन्ति ! कोकयोः चक्रवाकयोः, शोकः विरहजनितशुक्, त्वां भवतीं, तुदति पीडयति, चेत् यदि, तत् तदा, व्याहर ब्रूहि, ते तव, आज्ञाकरः आदेशपालकः, अहमिति शेषः, कुल्यां क्षुद्रकृत्रिमसरितं, गत्वा प्राप्य, एतस्याः कुल्यायाः, जलस्थं जले प्रतिविम्बितं, भानुं सूर्यम्, अनस्तम् अस्तगमनाभावं, व्रजितुं प्राप्तुम, अस्ताचल-गमनाभिप्रायं परित्यक्तुमित्यर्थः, अनुनये विनयेन अभ्यर्थये, त्वयि अस्तमिते कोकयोरन्योऽन्यं वियोगः अवश्यम्भावी, अतो नास्तं व्रज इति सविनयं प्रार्थये इत्यर्थः, यदि चेत्, मया नलेन, अञ्जलौ करद्वयसंयोगे, बद्धे कृतेऽपि, एकः एकमात्र, ग्रहः अभिनिवेशः यस्य सः तादृशः एकग्रहः एकमात्रविषये दृढ-निर्बन्धपरः, निजनिर्बन्धापरित्यागीत्यर्थः, चन्द्रादिषु मुख्य-ग्रहश्च, ( "निर्बन्धोपरागार्कादयो ग्रहाः" इत्यमरः ) अयं भानुः, अनुनयविमुखः विनीतप्रार्थनायामपि पराङ्मुखः, स्यात् भवेत्, एकग्रहत्वात् मम प्रार्थनामगणयित्वा यदि अस्तमेव व्रजेदित्यर्थः, तत् तर्हि, इह अस्मिन् सायंकाले, अम्भसः जलस्य, अञ्जलिं

तदानन्दाय त्वत्परिहसितकन्दाय भवती
निजालीनां लीनां स्थितिमिह मुहूर्त्तं मृगयताम्।
इति व्याजात् कृत्वाऽऽलिषु वलितचित्तां सहचरीं
स्वयं सोऽयं सायन्तनविधिविधित्सुर्वहिरभूत्॥ १४८॥
श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
तस्यागादयमेकविंशगणनः काव्येऽति नव्ये कृतौ
भैमीभर्त्तृचरित्रवर्णनमये सर्गो निसर्गोज्ज्वलः॥ १४९॥

---

गण्डूषम, आभ्यां कोकाभ्यामिव, दत्त्वा प्रदाय, अनुनयाग्राहिणे सूर्य्याय न दत्त्वा काकाभ्यामिव क्षिप्ता इत्यर्थः, भवतीं त्वा प्रति, एष्यमाणं पुनः प्रत्यागमिष्यन्तम्, ईङ् गतावित्यस्य लृटः शानचि रूपम्। मा नलं, पश्य अवलोकय। सायमन्ध्योपासनानिमित्तं भङ्ग्या वहिर्गमनाभ्यनुज्ञा याचितवान् इति भावः॥ १४७॥

तदिति।—हे दमयन्ति! तत् तस्मात्, तथा सूर्य्यानुनयस्य प्रयोजनीयत्वादित्यर्थः, भवती त्वं, त्वत्परिहसितं तव परिहास एव, कन्द मूलं यस्य तादृशाय, आनन्दाय प्रीत्यै, परिहासानन्दं कर्त्तुमित्यर्थः, इह प्रासादे एव, निजानाम् आत्मीयानाम्, आलीना सखीना, लीनां क्वचित् गूढां, स्थितिम् अवस्थानं, मुहूर्त्तं कञ्चित् कालं, मृगयताम् अन्विष्यतु, इति एवं, व्याजात् छलात्, सहचरीं दमयन्तीम्, आलिषु सखीषु विषये, वलितचित्ताम् आसक्तमनस्कां, कृत्वा विधाय, सः अयं नलः, स्वयम् आत्मना, सायन्तनविधिं सायंसन्ध्याऽग्निहोत्रादिकृत्यं, विधित्सुः विधातुमिच्छुः सन्, वहिः तस्मात् प्रासादात् निर्गतः, अभूत्॥ १४८॥

श्रीहर्षमिति।—भैमीभर्त्तुः नलस्य, यत् चरितं शीलं, तद्वर्णनमये तत्कथनात्मके, काव्ये नव्ये नूतने, अत्र अस्मिन्,

# द्वाविंशः सर्गः ।

उपास्य सान्ध्यं विधिमन्तिमाशारागेण कान्ताधरचुम्बिचेताः ।
अवाप्तवान् सप्तमभूमिभागे भैमीधवं सौधमसौ नरेन्द्रः ॥ १ ॥
प्रत्युद्व्रजन्त्या प्रियया विमुक्तं पर्य्यङ्कमङ्कस्थितसज्जशय्यम् ।
अध्यास्य तामप्यधिवास्य सोऽय सन्ध्यामुपश्लोकयति स्म सायम् ॥२॥

---

श्रीहर्षस्य कृतौ, एकविंशतिः गणना यस्य सः तादृशः अयं सर्गः अगात् समाप्तिं गतः । गतमन्यत् ॥ १४८ ॥

---

इदानीं पूर्वसर्गान्तप्रस्तावितसायंकालवर्णनात्मकमन्तिमसर्गमुपक्रमते, उपास्येति ।—असौ अय, नरेन्द्रः मनुजाधिपः नलः, सान्ध्य सायंकालिक, विधिं जपाद्यनुष्ठानम्, उपास्य अर्चयित्वा, उपासनारूपेण विधायेत्यर्थः, अन्तिमाशायाः चरमदिश , पश्चिमाया दिशः इत्यर्थः, अस्तगमनरूपान्तिमसमये सूर्य्यगम्यतया पश्चिमाया दिशः अन्तिमाशात्वं बोध्यं, रागेण अरुणिम्ना, रक्तवर्णतादर्शनेन हेतुनेत्यर्थः, कान्तायाः प्रियायाः, अधरचुम्बि साट्टश्यात् अधरोष्ठस्मारि, चेतः चित्तं यस्य तादृशः सन्, अत एव तद्विरहासहिष्णुतया वहिः अवस्थातुम् अशक्तः इति भावः, भैम्याः दमयन्त्याः, धरं केलिपर्वतरूपं, सौधं यत्र सा विद्यते तं हर्म्यं, सप्तमभूमिभागे प्रासादस्य सप्तमतले, सप्तमीम् उपकारिकामित्यर्थः, [ "गले बद्धा गौर्नीयते" इतिवत् सप्तमी ] अवाप्तवान् प्राप ॥ १ ॥

प्रतीति ।—सः अयं नलः, प्रत्युद्व्रजन्त्या प्रत्युद्गच्छन्त्या, अभ्यर्थनार्थं सम्मुखम् आगच्छन्त्या इत्यर्थः, प्रियया कान्तया भैम्या, विमुक्तं परित्यक्तम्, अङ्के क्रोड़देशे, मध्ये इत्यर्थः, स्थिता विन्यस्ता, सज्जा आस्तृता, शय्या तूलिका यस्य तं तादृशं, पर्य्यङ्क

विलोकनेनानुगृहाण तावद्दिशं जलानामधिपस्य दारान् ।
अक्षालि लाक्षापयसेव येयमपूरि पङ्कैरिव कुङ्कुमस्य ॥ ३ ॥

खट्वाम्, अध्यास्य स्वयम् अधिष्ठाय, [ "अधिशीङ्—" इति कर्मत्वम् ] तां भैमीम् अपि, अधिवास्य तत्र उपवेश्य, [ आस्ते-हस्तते: ल्यप्, तस्य धात्वन्तरत्वात् "उपान्वध्याङ्वस:" इति कर्मत्वाप्राप्ते: सामर्थ्यात् तत्रेति अध्याहार्य्यम् ] सायं सूर्य्यास्त-कालसम्बन्धिनीं, सन्ध्यां दिवारात्रिसम्बन्धिसन्धिमुहूर्त्तम्, उप-श्लोकयति स्म भैम्या: पुर: श्लोकै: स्तौति स्म, वर्णितवानित्यर्थ: । [ "सत्यापाश—" इति णिचि स्मयोगे भूते लट् ] ॥ २ ॥

विलोकनेनेति ।—हे प्रिये ! जलानां वारीणां, जड़ानाञ्च, अधिपस्य अधीश्वरस्य वरुणस्य, दारान् भार्य्यां, तत्स्वरूपा-मित्यर्थ:, दिशं पश्चिमां दिशं, विलोकनेन तावत् सम्पूर्णतया दर्शनेन, समग्रदृष्टिदानेनेत्यर्थ:, न तु कटाक्षदर्शनादिना इति भाव:, अनुगृहाण कृतार्थीकुरु, त्वमिति शेष: ; यद्वा—तावत् चन्द्रोदयपर्य्यन्तमित्यर्थ:, यावत् चन्द्रोदयादिना अरुणिमापगमेन अस्या: सौन्दर्य्यं न विलुप्तं भवति, यावच्च प्राच्यां राम-णीयकं तिष्ठति तावत् सान्ध्यरागेण रमणीयां पश्चिमां दिशं विलोकयेति भाव: । जड़ाधिपस्य मूर्खतमस्य च भार्य्या दु:खिता विलोकनादिना अनुगृहीतुमर्हा भवतीति च गम्यते ; या इयं पश्चिमा दिक्, लाक्षापयसा अलक्तकरसेन, अक्षालि इव क्षालिता इव, केनापि जनेनेति शेष:, तथा कुङ्कुमस्य काश्मीरजस्य, पङ्कै: कर्दमै:, गाढ़द्रवैरिति यावत्, अपूरि परिपूरिता इव, अत्रापि केनापि जनेनेति शेष:, एवंविधा दृश्यते यत: तस्मात् रमणीयाम् एतां विलोकयेति भाव: ॥ ३ ॥

उच्चैस्तरादम्बरशैलमौलेश्च्युतो रविर्गैरिकगण्डशैलः।
तस्यैव पातेन विचूर्णितस्य सन्ध्या रजोराजिरिहोज्जिहीते ॥ ४ ॥
अस्ताद्रिचूडाऽऽलयपक्कणालिच्छेकस्य किं कुक्कुटपेटकस्य।
यामान्तकूजोन्नमितैः शिखौघैर्दिग्वारुणी द्रागरुणीकृतेयम् ?॥ ५॥

उच्चैरिति।—हे प्रिये! रविः सूर्य्य एव, गैरिकः तदाख्य-धातुविशेषसम्बन्धी, गण्डशैलः स्थूलपाषाणः, उच्चस्तरात् अत्यु-न्नतात्, अम्बरशैलस्य गगनरूपगिरेः, मौलेः शिखरात्, च्युतः पतितः; पातेन उच्चैस्तरगिरिशिखरात् अधः पतनेन हेतुना, विचूर्णितस्य विशेषेण चूर्णीभूतस्य, तस्यैव रविरूपगैरिकगण्ड-शैलस्यैव सम्बन्धिनी, सन्ध्या सायंकालिकरक्तिमा एव, रजोराजिः रक्तवर्णचूर्णसमूहः, इह सायकाले पश्चिमदिशि वा, उज्जिहीते उपरिष्टात् प्रसरति। दृश्यते च लोके अत्युच्चात् पतित पाषाणादिकं चूर्णीभवतीति ॥ ४ ॥

अस्तेति।—हे प्रिये! अस्ताद्रेः अस्ताचलस्य, चूडा शिखरम् एव, आलयः अवस्थितिस्थानं यस्याः सा तादृशी या पक्कणालिः शवरगृहसमूहः, ("पक्कणः शवरालयः" इत्यमरः) तत्र छेकस्य गृहासक्तस्य, शवरगृहपालितस्येत्यर्थः, ("गृहासक्ताः पक्षि-मृगाश्छेकास्ते गृह्यकाश्च ते" इत्यमरः) कुक्कुटानां चरणायुधानां, पेटकस्य समूहस्य, ("पेटकं पुस्तकादीनां मञ्जूषायां कदम्बके" इति विश्वः) यामान्ते प्रहरान्ते, दिवसस्य शेषप्रहराव-साने इत्यर्थः, या कूजा कूजनम, अव्यक्तशब्दकरणमित्यर्थः, तेन उन्नमितैः किञ्चित् उच्चीभूतैरित्यर्थः, शिखानां शिरःस्थ-ताम्रवर्णचर्ममयचूडानाम, ओघैः वृन्दैः, इयम् एषा, वारुणी दिक् पश्चिमाशा, द्राक् झटित्येव, अरुणीकृता रक्तवर्णीकृता किम्? इत्युत्प्रेक्षा। ताम्रचूडापराख्याना कुक्कुटाना शिखाः

पश्य द्रुतास्तङ्गतसूर्य्यनिर्य्यत्करावलीहैङ्गुलवेत्रयाऽत्र।
निषिध्यमानाऽहनि सन्ध्ययाऽपि रात्रिप्रतीहारपदेऽधिकारम् ॥६॥
महानटः किं नु स भानुरागी सन्ध्याय सन्ध्या कुनटीमशेषाम्।

स्वभावत एवारुणवर्णाः, प्रतियामान्ते कूजनं कूजनकाले च शिखोन्नमनं तेषां स्वभाव एव इति बोध्यम् ॥ ५ ॥

पश्येति।—हे प्रिये! द्रुतं शीघ्रम्, अस्तं गतात् पश्चिमाचलप्राप्तात्, सूर्य्यात् दिवाकरात्, निर्य्यती निर्गच्छन्ती, या करावली किरणश्रेणी, सा एव हैङ्गुलं हिङ्गुलाख्येन रक्तवर्णद्रव्यविशेषेण रञ्जितं, वेत्रं दण्डविशेषः यस्याः तादृशया, सन्ध्ययाऽपि सायंकालाधिदेवतयाऽपि, निषिध्यमानं निवार्य्यमाणं, प्रतिषिद्धपुनःप्रसरमित्यर्थः, अहः दिनं यस्मिन् तादृशे, [अत्र तत्पुरुषाभावात् टजभावः] अत्र सायसमये, रात्रेः चन्द्रस्य नायिकाभूतायाः रजन्याः, प्रतीहारस्य दौवारिकस्य, पदे स्थाने, अधिकारं नियोगं, सन्ध्याया एव विधिनेति शेषः, पश्य अवलोकय; स्त्रिया हि दौवारिकी स्त्रेयत्र युक्तेति सन्ध्येव रात्रेर्दौवारिकी जातेत्यर्थः। सूर्य्योऽस्तमितो दिनं गतं रात्रिरागतेति सायंसन्ध्यया ज्ञाप्यते इति भावः ॥ ६ ॥

इदानीं सन्ध्यानक्षत्रयोगं वर्णयति. महानट इति।—हे प्रिये! सः ताण्डवनृत्ये प्रसिद्धः, महानटः उत्कृष्टनर्त्तकः शिवः, वक्ष्यमाणश्लोकेऽपि शिवस्यैवाभिधानात् ताण्डवकारित्वेन प्रसिद्धत्वाच्च इति भावः, कुनटीमपि मनःशिलाकाञ्चिपर्णीमिव, मनःशिलावत् रक्तवर्णामित्यर्थः, ("मनःशिला···। नेपाली कुनटी गोला" इत्यमरः) सन्ध्या सायंकालं, भानोः सूर्य्यस्य, रागे आरक्तवर्णतासम्पादने इत्यर्थः, ईशा समर्था, सन्ध्याय सम्यक् विविच्य, सन्ध्यासमय एवायं समागत इति सम्यक् निश्चित्य

तनोति तन्वा वियताऽपि तारस्रेणिस्रजा साम्प्रतमङ्गहारम् ॥७॥

इत्यर्थः, तारश्रेणिः तारकाराजिरेव, स्रक् माला यस्य तादृशेन, वियता आकाशेन, आकाशरूपयेत्यर्थः, महादेवस्याष्टमूर्त्तन्तर्गतत्वात् आकाशस्य इति भावः, तन्वाऽपि मूर्त्त्याऽपि, आकाशस्यामूर्त्तत्वेऽपि तद्रूपया मूर्त्त्याऽपीत्यर्थः, साम्प्रतम् अधुना, अङ्गहारम् अङ्गविक्षेपं, नृत्यव्यापारं अङ्गचालनादिकमित्यर्थः, ("अङ्गहारोऽङ्गविक्षेपः" इत्यमरः) तनोति किन्तु ? विस्तारयति किम् ? बाहुल्यतया करोति किम ? इत्यर्थः, पक्षान्तरे—महानटः नृत्यकुशलो कश्चित, कुनटीमपि नृत्यकर्मणि अनभिज्ञतया निकृष्टनर्त्तकीमपि, सन्ध्या केशरताकृष्णयोः सन्धिसमये अवस्थिताम, अत एव सभायाः संसदः, सभास्थदर्शकजनानामिति यावत्, अनुरागे अनुरागजनने, दर्शनाग्रहोत्पादने इत्यर्थः, ईशा समर्था, सन्ध्याय सम्यक् विविच्य, तारश्रेणिः निर्मलमौक्तिकराजिरेव, स्रक् माला, हार इति यावत्, ("तारो निर्मलमौक्तिके। मुक्ताशुद्धावच्छनादे नक्षत्रनेत्रमध्ययोः ॥" इति विश्वः) यत्र तादृशया, वियता आकाशेन, आकाशवत् विशालयाऽपीति भावः, तन्वा देहेन, साम्प्रतम् अधुना, अङ्गहारम् अङ्गविक्षेपं, नृत्यविशेषे अङ्गचालनादिकमित्यर्थः, तनोति किन्तु ? विस्तारयति किम् ? यद्वा—महान् सन्ध्योपासनादिविषये अतिप्रशस्तः, तथा अटति गच्छतीति अटः, एवम्भूतः सः प्रकृतः सायन्तनः कालः, यद्वा—महान् परमेश्वरः महादेवः, नटः नर्त्तकः यस्मिन्, सन्ध्याकाले हि महेश्वरो नृत्यति, स प्रकृतः सायंसन्ध्यासमयः, भानोः सूर्य्यस्य, रागे लौहित्ये सति, अस्तमयानन्तर सूर्य्यस्य रागमात्रे अवशिष्टे सति, सन्ध्यां सन्ध्याकान्तिं, किञ्चित् पीतरक्तवर्णत्वात्, कुनटीं "नेपाली कुनटी

गोला" इत्याद्यभिधानात् मनःशिलारूपा, तथा ईशामपि स्वकान्तस्वामिनीं वा, अथ पितृप्रसूरूपब्रह्मत्वात् देवतारूपाम्, अथच मर्य्यादिमतीं, सन्ध्याय सम्यक् विचिन्त्य, साम्प्रतम् इदानीं, तन्वा किञ्चित् उद्गतया, सन्ध्यारागतिरोहितकान्तितया वा कृशया किञ्चित् दृश्यया, तथा वियता अपि गगनरूपया लक्षणया यावद्गगनं विस्तीर्णया च, यद्वा आ सामस्त्येन व्याप्तं वियत् यया गगनव्यापिन्या च तारश्रेण्या नक्षत्रपरम्परा-रूपया स्रजा पुष्पादिमालया हारं तनोति विरचयति किम्? यद्वा—ताराणा शुद्धमौक्तिकानां श्रेणिः यत्र तादृश्या ग्रथित-मौक्तिकमालया हारविरचनं युक्तमिति सन्ध्याकालः सन्ध्याय एवंविधा मां चिन्त्य नक्षत्रपरम्परामेव हार विरचयति किमि-त्यर्थः। सन्ध्यारागः कियानवशिष्टोऽस्ति, मुक्तातुल्यानि नक्षत्राणि च किञ्चिद्दृश्यानि जातानीति भावः। तथा तारश्रेणिस्रजा उपलक्षितेन तद्युक्तेन वियता गगनेनैव हारं तनोतीति वा। सन्ध्यामेवंविधा विज्ञाय तूष्णीम्भूतः इति न, किन्त्वाचित्या-दिशिष्टया तारश्रेणिस्रजा हारमपि विरचयतीत्यर्थः इति वा अपिशब्दार्थः। अथच स प्रसिद्धः, महानटस्ताण्डवनृत्यकर्त्ता शिवः, भानोः सूर्य्यस्य, रागे सति अस्तमितार्द्धे सूर्य्ये सतीति यावत्, तत्र सन्ध्यासमये, मनःशिलातुल्यवर्णाम् अचिरस्थायि-त्वात् कुत्सितनर्त्तकीरूपां वा ईशा देवीं सन्ध्यां, सन्ध्याय सम्यक् ध्यात्वा, सायं सन्ध्यावन्दनं कृत्वा वा, अष्टासु मूर्त्तिषु मध्ये तारापरम्परेव माला यस्या तया गगनरूपया अपि अमूर्त्तया अपि, तन्वा मूर्त्त्या इदानीं सन्ध्यावन्दनानन्तरम्, अङ्गहार मुख-करपार्श्वीयाङ्गाना विक्षेप, करोति किमिति वितर्कः। अमूर्त्तस्य

दिङ्मण्डल मण्डयतीह खण्डैः सायंनटस्तारकराट्किरीटः ॥८॥
कालः किरातः स्फुटपद्मकस्य वधं व्यधात् यस्य दिनद्विपस्य।
तस्यैव सन्ध्या रुचिराऽस्रधारा ताराश्च कुम्भस्थलमौक्तिकानि ॥९॥

---

अङ्गहारकरणं विचित्रमिति विरोधार्थोऽपिशब्दः। न केवलं चन्द्रमपभागादिभूषितयैव तन्वाऽङ्गहारं करोति, किन्तु वियताऽपि तन्वेति समुच्चयार्थो वा। ईश्वरो हि सायंसमय नृत्यति। भानुरागि मनःशिलातुल्यवर्णां सन्ध्यामपीशा सहचरीं पार्वतीं विचिन्त्य विशिष्टया वियद्रूपयाऽपि तन्वाऽङ्गहारं तनोति। पार्वतीसमीपेऽपीश्वरो नृत्यति ॥ ७ ॥

भूषेति।—हे प्रिये! तारकराट् तारकाभिः राजते यः सः तादृशः चन्द्रः, किरीटं मुकुटं, शिरोभूषणमिति यावत् यस्य सः तादृशः, चन्द्रशेखर इत्यर्थः, सायं नटतीति सायंनटः सन्ध्यानर्त्तकः शिवः, उड़कोटीकपटं कोटिसङ्ख्यकनक्षत्रव्याजं, वहद्भिः धारयद्भि, नाट्यात् उद्धतात् नृत्यात् हेतोः, त्रुटितस्य छिन्नस्य, भूषास्थिदाम्न. आत्मन एव कण्ठभूषणभूतास्थिमालायाः, खण्डैः इतस्ततः विक्षिप्तैः शकलैरिव, इह सायंसमये, दिङ्मण्डलं दिक्चक्रवालं, मण्डयति भूषयति, पश्य अवलोकय। एतानि नक्षत्राणि न, किन्तु ताण्डवत्रुटितास्थिमालोच्छलच्छकलान्येव दिक्षु शोभन्ते इति भावः। मण्डयतीवेति पाठे उत्प्रेक्षा ॥ ८ ॥

काल इति।—हे प्रिये! कालः सन्ध्यासमयरूपः, कृष्णवर्णश्च, हिंसकत्वात् मृत्युरूपः वा, किरातः व्याधः, स्फुटानि विकसितानि, पद्मानि कमलानि यस्मिन् तादृशस्य, [ बहुव्रीहौ कप् ] यद्वा—स्फुटपद्मं विकसितकमलं, कं जलं यस्मिन् तादृशस्य, अन्यत्र—स्फुटं प्रकटीभूतशुण्डादण्डाग्रे प्रकाशमानं, पद्मकं सिन्दूरादिकृतपद्माकारतिलकबिन्दुः यस्य

सन्ध्यासरागः ककुभो विभागः शिवाविवाहे विभुनाऽयमेव।
दिग्वाससा पूर्वमवैमि पुष्पसिन्दूरिकापर्वणि पर्य्यधायि॥ १०॥
सतीमुमामुद्वहता च पुष्पसिन्दूरिकार्थं वसनं सुनेत्रे !।

---

तादृशस्य, यस्य दिनमेव दिवस एव, द्विपः हस्ती तस्य दिवसात्मकहस्तिनः, बधम् अपमारणं हननञ्च, व्यधात् अकरोत्, सन्ध्या सायङ्कालः, तस्यैव हतस्य दिवसरूपस्य करिणः एव, रुचिरा रम्या, असृधारा रुधिरधारा, इव शोभते इति शेषः; तथा ताराश्च नक्षत्राणि च, कुम्भस्थलमौक्तिकानि तस्यैव विदारितशिरःपिण्डान्तर्गतमुक्ताफलानि, इव शोभन्ते इति शेषः॥ ९॥

सन्ध्येति।—हे प्रिये! विभुना प्रभुणा, अत एव तस्याकरणीयं किञ्चिदपि नास्तीति भावः, दिश एव दिक्समूह एव, वासः वसनं यस्य तादृशेन दिगम्बरेण, हरेणेत्यर्थः, पूर्वं प्राक्, शिवायाः पार्वत्याः, विवाहे परिणयावसरे, पुष्पसिन्दूरिकापर्वणि पुष्पसिन्दूरिकाभ्यां रञ्जितस्य वसनस्य परिधानरूपे विवाहाच्चतुर्थदिवसानुष्ठेये उत्सवविशेषे इत्यर्थः, सन्ध्यया सायसमयोपस्थित्या, सरागः रक्तवर्णः, अयमेव एष एव, ककुभः पश्चिमायाः दिशः, विभागः प्रदेशविशेषः, पर्य्यधायि परिहितः, इति अवैमि मन्ये, रक्तवस्त्रपरिधानावसरेऽपि दिग्वसनत्वेन रक्तदिग्भागरूपवसनपरिधानस्यैवौचित्यात् स एव परिहितः इति शङ्के इत्यर्थः। विवाहस्य चतुर्थे दिने प्रथमदिनपरिहितानि वस्त्राणि प्रक्षालनार्थं परित्यज्य पुष्पसिन्दूरिकाख्यपर्वणि कौसुम्भादिरञ्जितरक्तवस्त्राणि बधूवरेण परिधीयन्ते इति वृद्धाचारः। वर्णकभूतपुष्पस्थाने ताराः, सिन्दूरिकास्थाने सन्ध्यारागः, वसनस्थाने पश्चिमदिग्भागः इति भावः॥ १०॥

प्रातःसायंसन्ध्ययोः प्राचीप्रतीच्योर्द्वयोरपि तुल्यरक्तवर्णत्वात्

दिशौ द्विसन्ध्योमपि रागशोभे दिग्वाससोमे किमलम्भिषाताम् ?
॥ ११ ॥

सायंसन्ध्यारक्तपश्चिमदिश एव पुष्पसिन्दूरिकात्वं कथं वर्ण्यते ? कथं वा दिगम्बरेण पूर्वा दिक् परिहृता ? इत्याक्षेपे तस्य परिहारार्थं प्राच्या अपि तद्भावमाह, सतीमिति।—सुनेत्रे। हे विशाललोचने ! प्रिये ! सतीं दाक्षायणीम्, उमां पार्वतीं च, उद्वहता परिणयता, दिग्वाससा दिगम्बरेण हरेण, पुष्पसिन्दूरिकार्थं पूर्वोक्तपुष्पसिन्दूरिकापर्वसम्पादनार्थं, द्वयोः सन्ध्ययोः समाहारः इति ता द्विसन्ध्यौ [समाहारद्विगोरेकत्वे "आबन्ता वा" इति स्त्रीत्वे च "द्विगोः" इति ङीपि सन्ध्याशब्दस्य तद्धितयदन्तत्वात् "हलः तद्धितस्य" इति च लोपः] अभि द्वे अपि प्रातःसायंसन्ध्ये लक्षीकृत्य, ["अभिरभागे" इत्यभिः कर्मप्रवचनीयत्वात तद्योगे द्वितीया] रागेण रक्तवर्णेन, शोभा सौन्दर्य्यं ययोस्ते, रागेण रक्तवर्णेन शोभेते इति वा तादृशी, उभे द्वे, दिशौ प्राचीप्रतीच्यौ ककुभौ, [लभेगत्यर्थत्वात् अणौ कर्त्तुः णौ कर्मत्वम्] वसने रक्तवस्त्रयुगलम्, अलम्भिषातां प्रापिते किम् ? श्वशुरात् वराभरणत्वेनेति शेषः, तस्य दिगम्बरत्वेन रक्तवर्णदिग्रूपस्यैव रक्ताम्बरस्य लाभौचित्यादिति भावः। दिग्वसनत्वेन विवाहद्वये सन्ध्याद्वयरक्तपूर्वपश्चिमदिग्द्वयमेव रक्तवस्त्रद्वयं शिवेन लब्धमित्यहं मन्ये इति निष्कर्षः। शिवेन द्वे दिशाविव वस्त्रे द्वे सन्ध्ये लक्षीकृत्य रागेण रञ्जकद्रव्येण कृत्वा ये शोभे कर्मभूते ते प्रापिते किम् ? विवाहे वस्त्रं रञ्जनाय कस्यचित् करे समर्प्यते तस्मात्किव्वेन दिग्द्वयरूपे मम द्वे वस्त्रे भवतीभ्यां रक्तशोभे प्रापणीये इति सन्ध्याद्वयम् आज्ञप्तं, ते च दिग्द्वयं रक्तशोभं चक्रतुः इति वा अर्थः॥ ११ ॥

आदाय दण्डं सकलासु दिक्षु योऽयं परिभ्राम्यति भानुभिक्षुः।
अब्धौ निमज्जन्निव तापसोऽयं सन्ध्याभ्रकाषायमधत्त सायम्॥ १२॥
अस्ताचलेऽस्मिन्निकषोपलाभे सन्ध्याकषोल्लेखपरीक्षितो यः।
विक्रीय तं हेलिहिरण्यपिण्डं तारावराटानियमादित द्यौः॥१३॥

आदायेति।—यः अयं पश्चिमाकाशे अस्तोन्मुखः, भानुः सूर्य एव, भिक्षुः परिव्राट्, ("भिक्षुः परिव्राट् कर्मन्दी" इत्यमरः) दण्डं तदाख्यं पारिपार्श्विकमेव दण्डं वेणुयष्टिं, ("माठरः पिङ्गलो दण्डः चण्डांशोः पारिपार्श्विकाः." इत्यमरः) आदाय गृहीत्वा, सकलासु सर्वासु दिक्षु आशासु, परिभ्राम्यति विचरति, सः अयं तापसः परिव्राट् भानुः, सायं सन्ध्याकाले, अब्धौ समुद्रे, निमज्जन् निमग्नीभवन्, समुद्रे निमज्जनेन पातालं प्रविशन् इत्यर्थः, अब्धिवत् बहुजले जलाशये स्नानं कुर्वंश्च सन्, सन्ध्यायाः सायंसमयस्य, अभ्रं रक्तवर्णं गगनमेव, काषायं कषायरञ्जितं रक्तवस्त्रं, [ "तेन रक्तम्" इत्यण् ] अधत्त इव परिहितवानिव। अन्योऽपि यतिः एकत्र बहुकालावस्थानस्य निषिद्धत्वादुत्तानचरणः सन् एव परिभ्रमन् सायंकालिकस्नानं समापय्य च काषायं वस्त्रं धारयति॥ १२॥

अस्तेति।—यः हेलिहिरण्यपिण्ड सूर्यः, अस्मिन् प्रतीच्यां परिदृश्यमाने, निकषोपलाभे सुवर्णपरीक्षापाषाणतुल्ये, अस्ताचले चरमपर्वते, सन्ध्या सायंकालीनरक्तिमा एव, कषोल्लेखः घर्षणचिह्नं, पीतरक्तत्वसादृश्यादिति भावः, तेन परीक्षितः अकृत्रिमतया निर्णीतः, आसीदिति शेषः, इयं परिदृश्यमाना, द्यौः आकाशं, तं तादृशमकृत्रिमतया निर्णीतमित्यर्थः, हेलिः सूर्य एव, हिरण्यपिण्ड स्वर्णगोलकः तं, पीतरक्तत्वसादृश्यादिति भावः; ("हेलिरालिङ्गने सूर्ये" इति हैमः) विक्रीय

पचेलिमं दाडिममर्कबिम्बमुत्ताय्य सन्ध्या त्वगिवोज्झिताऽस्य।
ताराभयं बीजभुजाऽदमीयं कालेन निष्ठ्यूतमिवास्थियूथम् ॥१४॥

विक्रयं कृत्वा, विनिमयेन कस्मैचित् दत्त्वेत्यर्थः, ताराः नक्षत्र-रूपान्, वराटान् कपर्दकान्, आदित जग्राह; उत्तमं सुवर्णं रक्तपीतं भवति, तथा च रक्तपीतसूर्य्यरूपसुवर्ण-गोलकस्य निकषपरीक्षितसुवर्णरेखेव सन्ध्या दृश्यते, ताराश्च वराटका इव दृश्यन्ते इति समुदितार्थः। लोकव्यवहारान-भिज्ञत्वद्योतनार्थं द्यौरिति स्त्रीलिङ्गनिर्देशः; स्त्री हि प्रभूत-सुवर्णं दत्त्वा मूर्खतया अकिञ्चित्करान् वराटकान् गृह्णाति, धूर्त्तेन वञ्च्यते च। सूर्य्यः अस्तमितः, ताराश्च गगने समुदिता इति निष्कर्षः॥ १३॥

पचेलिममिति।—बीजभुजा दाडिमफलस्यैव अभ्यन्तरस्थ-बीजभक्षणपरेण, कालेन सायंसमयेन, अर्कबिम्बं रक्तं सूर्य्य-मण्डलमेव, पचेलिमं तरोः उपर्य्येव स्वयं पक्कं, दाडिमं तदाख्यं फलम, उत्ताय्य उच्चित्य, गगनरूपवृक्षात् त्रोटयित्वा बीजग्रहणार्थं भित्त्वा वा इत्यर्थः, सन्ध्या सायंकालरूपा, रक्तता-साम्यादिति भावः, अस्य दाडिमस्य, त्वक् वल्कल, पक्कत्वात् रक्तवर्णमिति भावः, उज्झिता इव परित्यक्ता इव, तद्बीजभक्षणार्थ-मुपरितनबीजावरणवत् सन्ध्या पृथक् कृता इवेति भावः, तथा ताराभयं नक्षत्ररूपम्, अदमीयम् अमुष्य दाडिमस्य अमीषां बीजानां वा सम्बन्धि, अस्थ्नां निःशेषेण पीतरसबीजानां, निःसार-दृढ़क्षुद्रक्षुद्रशुभ्रवस्तुविशेषाणामित्यर्थः, यूथं वृन्दं, निष्ठ्यूतमिव बीजरससेवनानन्तरं थूत्कृत्य मुखात् उद्गीर्णमिव, दृश्यते इति शेषः. न हि कालादृते कश्चिदन्यः सूर्य्यदाडिमं भक्षितुं समर्थः इति भावः। अन्योऽपि दाडिममुत्ताय्य तत्त्वचं

तारावतिर्बीजमिवादमादमियं निरष्ठेवि यदस्थियूथम्।
तन्निष्कुलाकृत्य रविं त्वगेषा सन्ध्योज्झिता पक्किमदाड़िमं
वा ? ॥ १५ ॥
सन्ध्यावशेषे कृतताण्डवस्य चण्डीपतेस्तच्चरणाभिघातात्।
कैलासशैलस्फटिकाश्मखण्डैरमण्डि पश्योत्पतयालुभिर्द्यौः ॥१६॥

---

परित्यज्य बीजान्यास्वाद्य पीतरसान् बीजकणान् थूत्कृत्य त्यजति इति ॥ १४ ॥

प्रकारान्तरेण पूर्वोक्तार्थमेवाचष्टे, तारेति।—योग्यत्वात् कालेन इति कर्त्तृपदं पूर्वतः आकर्षणीयम्; कालेन समयेन, [कर्त्रा] बीजं दाड़िमबीजसारम्, आदमादं भक्षयित्वा भक्षयित्वा, [अदेराभीक्ष्ण्ये णमुल्, द्विर्वचनञ्च] इयम् एषा, तारातति: नक्षत्रराजि:, ताराततिरूपमित्यर्थ:, यस्य सूर्य्यरूपस्य पक्कदाड़िमस्य सम्बन्धि, अस्थियूथं मध्यास्थितानि सारशुभ्रकठिन-क्षुद्रक्षुद्रद्रव्यसमूहं, निरष्ठेवि इव निष्ठ्यूता इव, थूत्कृत्य निक्षिप्तमेवेत्यर्थ:, तत् रविं सूर्य्यमेव, अस्तकालिकसूर्य्यरूप-मेवेत्यर्थ:, पक्किमं पचेलिमम्, सुपक्कमित्यर्थ:, दाड़िमं दाड़िमफलं, निष्कुलाकृत्य निस्त्वचीकृत्य, बीजरूपं सारं गृहीत्वा वल्कलं निक्षिप्येत्यर्थ:, ["निष्कुलान्निष्कोषणे" इति डाच्] एषा इयं, सन्ध्या सायंकालरूपा, त्वक् तस्यैव दाड़िमस्य वल्कलम्, उज्झिता वा ? वा-शब्द: सम्भावनायां, परित्यक्ता किम् ? इत्यर्थ:; वा-शब्द इवार्थे वा, परित्यक्तेवेत्यर्थ: ॥ १५ ॥

सन्ध्येति।—हे प्रिये ! सन्ध्याऽवशेषे सायं सन्ध्यावन्दनाव-साने, कृतम् आरब्धं, ताण्डवम् उद्दाम नृत्यं येन तादृशस्य, चण्डीपते: महेश्वरस्य, तयो: तादृशयो:, उद्दामनृत्यकाले सवेगं निक्षिप्तयोरित्यर्थ:, चरणयो: पादयो:, अभिघातात् दृढ़भावेन

इत्थं ह्रिया वर्णनजन्मनेव सन्ध्यामपक्रान्तवतीं प्रतीत्य।
तारातमोदन्तुरमन्तरिक्षं निरीक्षमाणः स पुनर्बभाषे॥ १७॥
रामेषुमर्मव्रणनार्त्तिवेगाद्रत्नाकरः ग्राहमुत्पपात।
आह्नीवक्रिमीरितमीनकम्बु नभो न भोः कामशरासनभ्रूः!
॥ १८॥

---

आघातात् हेतोः, "पत्पतनाभिघातात्" इति पाठे—पदोः चरणयो, पतनेन विक्षेपेण, अभिघातात्; उत्पतयालुभिः उत्पतनशीलैः, ऊर्द्धमुत्थितैरित्यर्थः, "स्पृहिगृहि—" इत्यालुच्-प्रत्ययः] कैलासशैलस्य कैलासपर्वतस्य, स्फटिकाश्मनां स्फटिक-मयशुभ्रप्रस्तराणां, खण्डैः शकलै, क्षुद्रक्षुद्रांशैरित्यर्थः, इवेति शेषः, द्यौः आकाशम, अमण्डि अलङ्कृता, इति पश्य अवलोकय, त्वमिति शेषः। कैलासस्य स्फटिकाश्मखण्डान्येव गगने ताराकृपेण शोभन्ते, न तु ताराः इति भावः॥ १६॥

इत्थमिति।—इत्थम उक्तप्रकारेण, वर्णनजन्मना उत्कीर्त्तन-जातया, ह्रिया लज्जया इव, सन्ध्यां सायंकालम, अपक्रान्त-वतीम् अपसृतवतीं, अपगतामित्यर्थः, प्रतीत्य ज्ञात्वा, दृष्ट्वा इत्यर्थः, अन्तरिक्षं गगनञ्च, तारातमोभ्यां नक्षत्रान्धकाराभ्यां, दन्तुरम् उन्नतदन्तमिव, दन्तान् विकाश्य अवस्थितमिवेत्यर्थः, निरीक्षमाणः अवलोकयन्, सः नलः, पुनः भूयः, बभाषे उवाच, भैमीमिति शेषः। अन्योऽप्युत्तमो निजवर्णनाश्रवणात् लज्जया अपक्रामति॥ १७॥

रामेति।—कामशरासनमेव अनङ्गकार्मुकमेव, भ्रुवौ यस्याः तत्सम्बुद्धौ, भोः! कामशरासनभ्रूः! हे भ्रूदर्शनमात्रेण कामोदयकारिणि! प्रियतमे! [शरासनभ्रूरित्यत्रङ्-त्वानत्वात् नदीत्वाभावात् ह्रस्वत्वाभावः] ग्राहाणां जलचारिणां जन्तूनाम्,

मोहाय देवाप्सरसां विमुक्तास्तारा: शरा: पुष्पशरेण शङ्के।
पञ्चास्यवत् पञ्चशरस्य नाम्नि प्रपञ्चवाची खलु पञ्चशब्द: ॥१९॥

ओघै: समूहै:, किर्मीरिता: मिश्रिता:, मीना: मत्स्या:, कम्बव: शङ्खाश्च यस्मिन् स तादृश:, इति लिङ्गव्यत्ययेनान्वय:, अयम् एष:, रत्नाकर: समुद्र एव, प्राक् पूर्वं, पुराकाले इत्यर्थ:, रामस्य राघवस्य जामदग्न्यस्य वा, इषुणा शरेण, मर्माणि हृदयादि-जीवस्थानि, व्रणनात् भेदनात्, चतोत्पत्त: हेतोरित्यर्थ:, या आर्त्ति: पीडा, तस्या: वेगात् जवात्, ऊर्द्ध्वोत्पतनानुकूलसंस्कार-विशेषाद्धेतोरित्यर्थ:, उत्पपात ऊर्द्धम् अगात्, तस्यैवायं कालिमा न तु गगनस्य, तथा तस्यैव रत्नानि नक्षत्ररूपेण अधोदेशात् अस्माभिर्दृश्यन्ते इति भाव: ; परन्तु ग्रहाणां शुक्रादीनामय-मिति ग्राह: ग्रहसम्बन्धी, य: ओघ: समूह:, शुक्रवृहस्पत्यादि-ताराग्रहसमूह:, ध्रुवमण्डलस्थग्रहसमूहो वा, तेन किर्मीरित: मिश्रित:, मीन: मीनाख्य: राशि:, कम्बु: शङ्खाकारविशाखा-नक्षत्रञ्च यस्मिन् तत् तादृशं, नभ: आकाशं न। रघुनाथेन किल सेतुबन्धयाचनासमये परशुरामेण च निजवसत्यर्थं प्रार्थनासमये किञ्चिदप्युत्तराप्रदानात् शरेण समुद्रो भेत्तुमुद्यत इति रामायणी वार्त्ता। मकरकर्कटादय: साक्षान्मीनादय: एव, न तु राश्यादिभूता:, शिष्टाश्च तारा: समुद्रमौक्तिकानि एव न तु तारा इति ज्ञातव्यम् ॥ १८ ॥

मोहायेति।—हे प्रिये! पुष्पशरेण कामेन, देवानाम् अमराणाम्, अप्सरसाञ्च स्वर्वेश्यानाञ्च, मोहाय अन्योऽन्यं प्रति चित्तविकारजननाय, विमुक्ता: प्रक्षिप्ता:, शरा: पुष्पमया: बाणा एव, तारा: तारका:, शङ्के इति मन्ये, अहमिति शेष:, कुन्दादि-कुसुमानां ताराणाञ्च वर्णपरिमाणाभ्यां परस्परसादृश्यादिति

नभोनदीकूलकुलायचक्रीकुलस्य नक्तं विरहाकुलस्य।
दृशोरपां सन्ति पृषन्ति ताराः पतन्ति तत्सङ्क्रमणानि धाराः॥२०॥

---

भावः। ननु कामस्य पुष्पशराणां पञ्चसङ्ख्यकमात्रत्वात् ताराणाञ्च असङ्ख्येयत्वात् कथं शराणा तारात्वमित्याशङ्क्य समर्थयते, तथा हि, पञ्चशरस्य नाम्नि मदनस्य "पञ्चशर" इति नामविषये, पञ्चशब्दः पूर्वपदत्वेन वर्त्तमानं पञ्च इति पदं, पञ्चास्यवत् सिंहवाचकपञ्चास्यशब्द इव, "सिंहो मृगेन्द्रः पञ्चास्यः" इति सिंहाभिधायिनि पञ्चास्यशब्दे सिंहस्य पञ्चसङ्ख्यकमुखाभावादपि पञ्चयति विस्तृतं भवतीति पञ्च विस्तृतमास्यं यस्य असौ पञ्चास्यः इति व्युत्पत्त्या सिंहस्य यथा विस्तृतमुखत्वं प्रतीयते तद्वदित्यर्थः, प्रपञ्चवाची खलु प्रकृष्टः पञ्चः विस्तारोऽस्य इति तद्वाची बहुत्व-वाचक एव, न तु सङ्ख्यावाचकः इत्यर्थः, ( "प्रपञ्चो विस्तारः" इति हलायुध. ) न तु पञ्चसङ्ख्यकाः शराः यस्येति व्युत्पत्त्या, परन्तु "पचि विस्तारवचने" इत्यस्मात् स्वार्थणिजन्ताद्धातोः पचाद्यचि पञ्चाः विस्तृताः, असङ्ख्येया इति यावत्, शराः यस्य स इति व्युत्पत्त्या, पञ्चशरपदेन कामस्यापि बहुशरत्वं प्रतीयते इति शराणां तारात्वं युज्यते एवेति भावः॥ १९॥

नभ इति।—नक्तं रात्रौ, विरहेण प्रत्यहं सङ्घटित-प्रिय-वियोगेन, आकुलस्य पीडितस्य, नभोनद्याः आकाशसरितः मन्दाकिन्याः, कूले तटे, कुलायः नीडं यस्य तादृशस्य, चक्री-कुलस्य चक्रवाकीसमूहस्य, दृशोः नेत्रयोः, सन्ति विद्यमानानि, उद्गत्य तत्रैव स्थितिमन्तीत्यर्थः, अपाम् अश्रुजलानां, पृषन्ति बिन्दवः एव, ताराः तारकाः, वर्णपरिमाणाभ्यां सादृश्यादिति भावः, तथा ताभ्यां दृग्भ्यां, सङ्क्रमणम् अधःक्षरणं येषां तादृशानि, पृषन्ति चक्रीकुलानामश्रुबिन्दवः एव, धाराः

अमूनि मन्ये सुरनिर्झरिण्या यादांसि गोधा मकरः कुलीरः ।
तत्पूरखेलत्सुरभीतिदूरमग्नान्यधः स्पष्टमितः प्रतीमः ॥ २१ ॥
स्मरस्य कम्बुः किमयं चकास्ति दिवि त्रिलोकीजयवादनीयः ? ।
कस्यापरस्याऽडमयः प्रसूनैर्वादित्रसृष्टिर्घटते भटस्य ? ॥ २२ ॥

वृष्टिजलपरम्पराः, तद्रूपेणेत्यर्थः, पतन्ति क्षरन्ति, भुवि इति शेषः, विरहासहिष्णुतयेति भावः ॥ २० ॥

अमूनीति ।—हे प्रिये ! गाधाः गोधाकाराः ताराः, गोधाकारं ध्रुवनक्षत्रमण्डलमिति यावत्, गोधा ज्येष्ठा वा, तदाख्यजलजन्तुविशेषश्च, मकरः मकरराशिसम्बन्धिन्यः ताराः, तदाख्यजलजन्तुश्च, कुलीरः कर्कटः, तद्राशिसम्बन्धिन्यः ताराः इत्यर्थः, तदाख्यजलजन्तुश्च, अमूनि प्रत्यक्षदृश्यानि एतानि, सुरनिर्झरिण्याः देवनद्याः, आकाशस्थितायाः मन्दाकिन्याः इत्यर्थः, यादांसि जलजन्तवः एव, मन्ये इति विवेचयामि, अहमिति शेषः, आकारादिसाम्यादिति भावः । ननु एतानि खलु प्रायेण जलोपरि एव विद्यन्ते, ततश्च उपरिवर्त्तमानैरेव द्रष्टुं शक्यन्ते, न त्वधःस्थितैः जलव्यवधानात्, तत् कथमधःस्थितस्य तव मननं सम्भवतीति चेत् तत्राह—तस्याः सुरनिर्झरिण्याः, पूरे जलप्रवाहे, खेलन्तः क्रीडन्तः, ये सुराः देवाः, तेभ्यः भीत्या भयेन, दूरं तलपर्य्यन्तं, मग्नानि प्रविष्टानि, तानीति शेषः, इतः अस्मात् भूलोकरूपात्, अधः अधोदेशात् अपि, स्पष्टं स्फुटमेव, प्रतीमः जानीमः, दर्शनेनेति शेषः । अधोभागे स्थिताः अपि वयं जलतलगामित्वादेव गोधादियादांसि व्यक्तं पश्यामः, अतो मननं युज्यत एवेति भावः ॥ २१ ॥

स्मरस्येति ।—हे प्रिये ! त्रिलोकीजये त्रिजगद्विजयकाले, वादनीयः वादनार्हः, अयं प्रत्यक्षदृश्यः विशाखानक्षत्ररूपः,

किं योगिनीयं रजनी रतीशं
याऽजीजिवत् पद्ममम्मुहच्च ?।
योगर्द्धिमस्याः महतीमलग्न-
मिदं वदत्यम्बरचुम्बि कम्बु॥ २३॥

स्मरस्य कन्दर्पस्य, कम्बुः शङ्खः, दिवि आकाशे, चकास्ति दीप्यते किम्? उच्चतरदेशे वादितं हि वाद्यं बहुदूरादपि आकर्ण्यते इति गगने स्थापितः लोकत्रयविजयवादनार्हः कामस्यैव कम्बुः किमित्यर्थः। स्मरकम्ब्वनुमाने हेतुमाह, अपरस्य अन्यस्य, कामेतरस्येत्यर्थः, कस्य भटस्य योद्धृपुरुषस्य, उडमयैः तारारूपैः, प्रसूनैः पुष्पैः, वादित्रसृष्टिः वाद्यनिर्माणं, घटते सम्भवति? न कस्यापीत्यर्थः; स्मरस्यैव धनुषः बाणस्य च पुष्परूपत्वदर्शनात् तदीयस्य वाद्यस्यापि पुष्परूपत्वं युज्यते एव, ततश्च ताराकुसुमरूपः कामशङ्खः एवाय गगनं शोभते, न तु अन्यत् किञ्चिदिति भावः॥ २२॥

किमिति।—इयम् उपस्थिता, रजनी विभावरी, योगिनी योगबललब्धाष्टैश्वर्य्यसम्पन्ना काचित् तापसी, किम्? अथच स्त्रीपुंसयोगवती काचित् कुट्टनी किम्? कथमीदृश-मनुमीयते? इत्याह, या इयं रजनी योगिनी, रतीशं रतिपतिं कामम्, अजीजिवत् जीवितवती, दिवाभागे निर्व्यापारत्वेन कामस्य मृतप्रायत्वात् रात्रौ च निजसन्निधेः सव्यापारत्वेन सजीवं चक्रे इत्यर्थः, तथा पद्मं कमलम्, अमूमुहच्च मोहितवती च, समकोचयच्चेत्यर्थः; दिवा पद्मस्य विकशितत्वात् रात्रौ च मुद्रितत्वात् मुद्रणस्य च मोहरूपत्वादित्याशयः; [ उभयत्र णौ चाङि उपधाह्रस्वः ] रात्रौ च स्त्रीपुंसयोगे कामः आवि-र्भवति पद्मानि च सङ्कुचन्ति इति द्रष्टव्यम्; तथा हि, अम्बर-

प्रबोधकालेऽहनि बाधितानि
तारा: खपुष्पाणि निदर्शयन्ती।
निशाऽऽह शून्याध्वनि योगिनीयं
मृषा जगत् दृष्टमपि स्फुटाभम्॥ २४॥

शुभ्रि आकाशवासि, अत एव अलग्न निराधारं, कस्मिन्नपि वस्तुनि न अवस्थितम इत्यर्थ:, अथवा अलग्नं तारामात्रात्मकत्वात् अराशिभूतमित्यर्थ:, इदं विशाखानक्षत्रात्मकं प्रत्यक्षतो दृश्यमानं, कम्बु शङ्ख:, ("शङ्ख: स्यात् कम्बुरस्त्रियाम्" इत्यमर: ) अस्या: रात्रियोगिन्या:, महतीम् उत्कृष्टां, योगर्द्धिं समाधिजन्यैश्वर्य्यं, वदति प्रकटयति, योगशक्तिं विना निराधारं वस्तु कथं स्थापयितुमर्हतीति प्रकाशयतीति भाव:; अन्या अपि योगिनी मृतमपि जीवयति जीवितञ्च मोहयति इति लोके दृश्यते। दिवा दर्शनाभावात् इदानीं दृश्यमानं शङ्खाकारं विशाखानक्षत्रं रात्रिजातेति कथयतीति निष्कर्ष:॥ २३॥

प्रबोधेति।—हे प्रिये! प्रबोधस्य जागरणस्य, सम्यग्ज्ञानोत्पत्तेश्च, काले समये, कालरूपे इत्यर्थ:, अहनि दिवा, बाधितानि आच्छन्नानि, सूर्य्यप्रभया अभिभूततया अदृश्यानीत्यर्थ:, भ्रान्तिकारणनाशात् निरूपपत्तीनि च, स्वाधिकरणे निषेधप्रतियोगीनि इति यावत्, असम्भवादभावग्रस्तानि इत्यर्थो वा, तारा: नक्षत्ररूपाणि, खपुष्पाणि गगनकुसुमानि, निदर्शयन्ती अत्यर्थं प्रकाशयन्ती, स्पष्टं दर्शनविषयीकुर्वती इत्यर्थ:, दृष्टान्तीकुर्वती च, इयम एषा, निशा रजनी, रात्रिरूपेत्यर्थ:, योगिनी बौद्धदर्शनरहस्याभिज्ञा काचित् प्रव्रजिता, शून्याध्वनि बौद्धपरिगृहीतमार्गे, शून्यवादिबौद्धमते इत्यर्थ:, स्फुटाभं सुस्पष्ट, दृष्टम् अपि अवलोकितमपि, प्रत्यक्षेण

एषः स्मरेणाङ्कमयः सपत्रा-
कृतो भवद्भ्रूयुगधन्वना यः ।
मुखे तवेन्दौ लसता स तारा-
पुष्पालिबाणानुगतो गतोऽयम् ॥ २५ ॥

प्रतीयमानम् अपि इत्यर्थः, जगत् स्थावरजङ्गमात्मकं सकलं विश्वं, मृषा असत्यम, आह ब्रूते, एकत्र—तमसाऽऽवृतत्वात्, अन्यत्र—युक्त्या निराकृतत्वादिति भावः। आकाशकुसुमानि यथा भ्रान्तिविजृम्भितान्येव, भ्रान्त्यपनोदने तु नैव विद्यन्ते, तथा घटपटाद्यात्मकं जगदसदपि भ्रमज्ञानकाले सत्त्वेन प्रतीयते, तत्त्वज्ञानोदयात भ्रान्त्यपनोदने तु असद्रूपेणैव स्फुरति इति जगतो मिथ्यात्वमेवेति शून्यवादिबौद्धसिद्धान्तः इति ज्ञेयम्। बौद्धादिदर्शने हि ज्ञानस्यैव बहिः घटाद्याकारत्वात् ज्ञानातिरिक्तं सर्वं मिथ्येति सिद्धान्तः, अतः तज्ज्ञा योगिन्यपि प्रपञ्चो मिथ्येति दर्शयति, तथेयमपि रात्रिः अहरदृश्यान्यपि पुष्पतुल्यानि नक्षत्राणि निजयोगात् गगने दर्शयतीति निष्कर्षः ॥ २४ ॥

एष इति।—हे प्रिये! तव भवत्याः, मुखे वदने एव, इन्दौ चन्द्रे, आह्लादकत्वादिगुणयोगादिति भावः, लसता प्रकाशमानेन, तथा भवत्या. तव, भ्रूयुगम् एव भ्रूद्वयमेव, धनुः कार्मुकं यस्य तादृशेन, स्मरेण कामेन, अङ्कमयः कलङ्करूपः, यः एषः मृगः, सपत्राकृतः पत्रयुक्तशरघातेन नितरां व्यथितः, [ "सपत्रनिष्पत्रादतिव्यथने" इति डाच् ] सपत्रस्य बाणस्य अपरपार्श्वे निर्गमनं यथा भवति तथा विद्धः इत्यर्थः, सः त्वन्मुखेन्दुकलङ्कभूतः, अयं यो गगने दृश्यते इति अङ्गुल्या निर्दिष्टः मृगशिरोनक्षत्ररूपः एषः मृगः, तारापुष्पालिः आर्द्रा-

लोकाश्रयो मण्डपमादिसृष्टि
ब्रह्माण्डमाभात्यनुकाष्ठमस्य ।
स्वकान्तिरिङ्गत्करवाल्लिमन्ति
घुणव्रणद्वारनिभानि भानि ॥ २६ ॥

नक्षत्ररूपकुसुमपङ्क्तिः, सैव बाणः कामशरः, तेन अनुगतः अनुसृतः, तेनैव संसक्तदेहः सन्नित्यर्थः, गतः प्राप्तः, मृगशिरोनक्षत्ररूपतामिति शेषः, मृगशिरोनक्षत्ररूपेण आकाशे अवस्थित इत्यर्थः, इति मन्ये इति शेषः । अन्योऽपि मृगो बाणविद्धः तत्सहित एव पलाय्य अदर्शनं गच्छति । चन्द्रे मृगेण भाव्यं, स चात्र नास्ति, सचाप कामश्च मुखे लसति, गगने च मृगशिरोनक्षत्रं मृगाख्यबाणाकारपुष्पतुल्यतारानुगतं दृश्यते, तर्हि कामेन विद्धान्तगतपञ्चपार्श्ववहिर्निर्गतबाणसहितः पलाय्य गतः सः एव अयं मृगः दृश्यते किम् ? इति प्रतीयमानोत्प्रेक्षा । एतेन भैमीमुखस्य निष्कलङ्कत्वं सूचितमिति ॥ २५ ॥

लोकेति ।—हे प्रिये ! आदिसृष्टि आदौ सर्वस्मात् अपि पूर्वं, सृष्टिर्निर्माणं यस्य तत् तादृशं चिरकालनिर्मितं, पुराणञ्च, लोकानां त्रयाणाम् अपि भुवनानां जनानाञ्च, आश्रयः आधारः, अवस्थितिस्थानमित्यर्थः, ब्रह्माण्डं भुवनकोषः एव, मण्डपम् उक्तविशेषणविशिष्टगृहविशेष, यद्वा—ब्रह्माण्डं मण्डपमिव, ( "मण्डपोऽस्त्री जनाश्रयः" इत्यमरः ) आभाति शोभते, अस्य ब्रह्माण्डमण्डपस्य, ब्रह्माण्डस्य मण्डपस्य च इति वा, काष्ठायां काष्ठायामिति अनुकाष्ठं दिशि दिशि, एतत्सम्बन्धिनीषु सर्वासु दिक्षु इत्यर्थः, [ वीप्सायामव्ययीभावः ] अन्यत्र—अनुकाष्ठं काष्ठानि एतत्सम्बन्धीनि मण्डपघटकानि दारूणि, अनु लक्ष्यीकृत्य, [ विभक्त्यर्थे अव्ययीभावः ] भानि

शचीसपत्न्यां दिशि पश्य भैमि !
शक्रेभदानद्रवनिर्झरस्य।
पोप्लूयते वासरसेतुनाशात्
उच्छृङ्खलः पूर इवान्धकारः॥ २७॥

नक्षत्राणि, स्वकान्तयः स्वेषां नक्षत्राणां, कान्तयः प्रभाः, रेणूत्कराः घुणोत्कीर्णकाष्ठचूर्णराशयः इव, तेषां वान्ति: उद्गारः एषामस्तीति तद्वान्तिमन्ति, घुणव्रणः घुणाख्यकीटनिर्मितः क्षतविशेषः, तत्कृतच्छिद्रमित्यर्थः, तस्य द्वारं मुखं, तन्निभानि तत्तुल्यानि, घुणोत्कीर्णदारुरजोयुक्तानि दारुच्छिद्रमुखानि इवेत्यर्थः, दृश्यन्ते इति शेषः; जनाश्रयापरनामा मण्डपः अपि अतिजीर्णः यदा भवति तदा तदीयकाष्ठेषु घुणाः पतन्ति, घुणोत्कीर्णगलद्रजोयुक्तानि वृत्तानि घुणकृतच्छिद्रमुखानि यथा दृश्यन्ते, तद्वत् भानि अपि दृश्यन्ते इति निष्कर्षः॥ २६॥

इदानीं सर्वदिग्व्यापितमोवर्णनं प्राच्यादिक्रमेणोपक्रमते, शचीति।—हे भैमि ! अन्धकारः तिमिरं, शच्याः इन्द्राण्याः, सपत्न्या समानपतिकायां, दिशि आशायां, प्राच्यामित्यर्थः, वासरः दिवसः, सेतुरिव आलिरिव, जलरोधकापायविशेष इवेत्यर्थः, अन्धकाराक्रमणनिरोधकदिवालोकरूपमर्यादा इति यावत्, तस्य ध्वंसात् नाशात्, अपगमाद्धेतोरित्यर्थः, उच्छृङ्खलः निरर्गलः, सर्वविधबाधाविहीनः सन् इत्यर्थ, शक्रेभस्य इन्द्र-हस्तिनः, ऐरावतस्येत्यर्थः, दानद्रवः मदोदकं, तस्य निर्झरः स्रवणं तस्य, पूरः प्रवाहः इव, कृष्णवर्णमदोदकराशिरिवेत्यर्थः, पोप्लूयते भृशं प्लवते, प्राचीं प्रति अत्यर्थं प्रसरति इत्यर्थः, [ प्लुङ् सर्पणे इत्यस्मात् भृशार्थे यङ् द्विर्वचनञ्च ] पश्य अवलोकय, त्वमिति शेषः॥ २७॥

रामालिरोमावलिदिग्विगाहि
ध्वान्तायते वाहनमन्तकस्य।
यद्वीक्ष्य दूरादिव बिभ्यतः स्वान्
अश्वान् गृहीत्वाऽपसृतो विवस्वान्॥ २८॥
पक्वं महाकालफलं किलासीत्
प्रत्यग्गिरेः सानुनि भानुबिम्बम्।

दक्षिणदिग्व्यापि तमो वर्णयति, रामेति।—रामस्य दाशरथेः श्रीरामचन्द्रस्य, आलिः सेतुः, सेतुबन्धः इत्यर्थः, सा एव रोमावलिः लोमसमूहः यस्याः सा तादृशी, सेतुघटकप्रस्तराणां कृष्णवर्णत्वेन तत्साम्यादिति भावः ("सेतुरालौ स्त्रियां पुमान्" इत्यमरः) या दिक् दक्षिणा दिगित्यर्थः, तस्या विगाहि सञ्चरणशीलम, अन्तकस्य यमस्य, वाहनं गमनसाधनं, महिषः इत्यर्थः, ध्वान्तायते अन्धकारवदाचरतीव; अन्तकस्य दक्षिणदिक्पतितया तद्वाहनमहिषस्यापि तत्रैव सञ्चरणशीलत्वात् कृष्णवर्णत्वाच्चेति भावः, ("उपमानात् आचारे कर्त्तुः क्यङ्" इति क्यङन्तात् तङ्) दूरात् विप्रकृष्टप्रदेशादेव, यत् यमवाहनं महिषमित्यर्थः, वीक्ष्य अवलोक्य, बिभ्यतः सभयान्, अश्वमहिषयोः सहजवैरवशादेव भीतान् इति भावः, स्वान् स्वकीयान्, अश्वान् वाहनभूतान् सप्त घोटकान्, गृहीत्वा आदाय, विवस्वान् सूर्य्यः, अपसृतः इव पलायितः इव, तस्या दिश इति शेषः। अत्र अन्तकपदेन तद्वाहनस्यापि दारुणत्वं सूचितम्, अत एव ततः अश्वानां भयं युक्तमेवेति द्रष्टव्यम्॥ २८॥

प्रतीचीव्यापि तमो वर्णयति, पक्वमिति।—प्रत्यग्गिरेः पश्चिमदिशि वर्त्तमानस्य पर्वतस्य, अस्ताचलस्येत्यर्थः, सानुनि प्रस्थदेशे, समतलप्रदेशे इत्यर्थः, भानुबिम्बं सूर्य्यमण्डलं, पक्वं

भिन्नस्य तस्यैव दृषन्निपातात्
बीजानि जानामितमां तमांसि ॥ २८ ॥

कालवशात् परिणतं, परिणतत्वात् रक्तवर्णमित्यर्थः, महाकालस्य "माकाल" इति प्रसिद्धस्य किम्पाकस्य, ("महाकालो महादेवे किम्पाके प्रमथान्तरे" इति मेदिनी) फलं शस्यम्, आसीत् अवर्त्तत, किल एवम् अहं सम्भावयामीत्यर्थः, अस्तगमन-काले रक्तवर्णतामास्यादिति भावः, तथा तमांसि पश्चिमदिशि स्थितान्धकारान्, दृषदि शिलायाम्, अस्ताचलस्यैव प्रस्तरोपरी-त्यर्थः, निपातात् पतनात्, उच्चतरदेशात् अधोदेशे पतन-जनिताभिघातात् हेतोः,भिन्नस्य विदीर्णस्य,अतिपक्वतया अति-श्लथत्वात् पतनमात्रमेव बहुधा भग्नस्येत्यर्थः, तस्यैव भानुबिम्ब-रूपस्य महाकालफलस्यैव, बीजानि अङ्कुरकारणानि, अभ्यन्तर-स्थितातीवकृष्णवर्णक्षुद्रक्षुद्रकठिनवस्तुविशेषानित्यर्थः, जानामि-तमां नितरां मन्ये, अहमिति शेषः, दिनरूपकालस्य परिणत-त्वेन आसन्नास्तमयसम्बन्धात् रक्तवर्णं महतः कालस्य फल-भूतञ्च भानुबिम्बं महाकालफलमिव, तथा कृष्णत्वसादृश्यात् तमांसि च विदीर्णस्य तस्य कृष्णतमानि बीजानि इव प्रसरन्ति इति भावः। अतीव पक्वं फलान्तरमपि उच्चप्रदेशात् पाषाणादौ पतितं सत् सर्वथा भग्नं भवतीति लोके दृश्यते। दाडिमवत् वर्त्तुलं पक्वावस्थायामतिकृष्णवर्णबीजं रक्तवर्ण-महाकालफलं गृहोपसर्गनिवारणार्थं गृहद्वारे बुद्धैर्बध्यते इति लोकाचारो दृश्यते। अन्यदिगपेक्षया प्रतीच्यां सायंसमये सूर्यस्य सत्त्वात् सन्ध्यासम्बन्धिनः प्रकाशस्य च आसन्नत्वात् अल्पान्धकारसूचनार्थं तमसां बीजत्वेन निरूपणम् ॥ २८ ॥

पत्युर्गिरीणामयशः सुमेरु-
प्रदक्षिणाद्भास्वदनादृतस्य ।
दिशस्तमश्चैत्ररथान्यनाम-
पत्रच्छटाया मृगनाभिशोभि ॥ ३० ॥
ऊर्द्धं धृतं व्योम यदुष्णरश्मेः
दिवा सहस्रेण करैरिवासीत् ।

---

उदीचीव्यापि तमो वर्णयति, पत्युरिति ।—चैत्ररथं कुबेरोद्यानम्, ("अस्योद्यानं चैत्ररथम्" इत्यमरः) तत् एव अन्यनाम नामान्तरं यस्याः सा तादृशी, पत्रच्छटा पत्रावली यस्याः तादृश्याः चैत्ररथाख्यकुबेरोपवनरूपपत्रावलीविशिष्टायाः, दिशः उत्तरस्या आशायाः, मृगनाभिः कस्तूरी, तत्पत्रावलीरचनासाधनीभूता इति भावः, तद्वत् शोभते राजते इति तत् तादृश, मृगनाभिवत् कृष्णवर्णमिति भावः, तमः अन्धकारः,सुमेरोः देवभूमेः सुवर्णाचलस्य, प्रदक्षिणात् प्रदक्षिणीकरणाद्धेतोः, भास्वता सूर्य्येण, अनादृतस्य अवज्ञातस्य, गिरीणां पत्युः पर्वतराजस्य हिमाचलस्य, अयशः अकीर्त्तिरिव, सूर्य्यकर्त्तृकानादरणहेतुकनिन्दा इवेत्यर्थः, हिमाद्रिः यद्यपि गिरीणां पतिः, तथाऽपि सूर्य्येण अनादृतत्वात् हीनः एव, मेरुरेव महान् इत्येवंरूपः तिरस्कार इवेति यावत्, वर्त्तते इति शेषः, यशसि धवलतायाः कविसमयप्रसिद्धत्वेन अयशसः कृष्णवर्णत्वं सुतरामेव लभ्यते, तमसश्च कृष्णवर्णत्वात् उभयोः साम्यमिति भावः ॥ ३० ॥

ऊर्द्धदिग्व्यापि तमो वर्णयति, ऊर्द्धमिति ।—यत् व्योम आकाशं, तमालश्यामलमिति भावः, दिवा अहनि, उष्णरश्मेः सूर्य्यस्य, सहस्रेण सहस्रसङ्ख्यकैः, करैः किरणैः, हस्तैश्च, ऊर्द्धम् अत्युच्चप्रदेशे, धृतम् इव अवलम्बितमिव, आसीत्

पतत्तदेवांशुमता विनेदं
नेदिष्ठतामेति कुतस्तमिस्रम् ? ॥ ३१ ॥
ऊर्द्धार्पितन्युब्जकटाहकल्पे
यत् व्योम्नि दीपेन दिनाधिपेन ।
न्यधायि तत् भूमभिलद्गुरुत्वं
भूमौ तमःकज्जलमस्खलत् किम् ? ॥ ३२ ॥

अवर्त्तत, इदानीं सायंसमये, अंशुमता सूर्य्येण, विना कृते, सूर्य्यास्तगमनात् धारणकर्त्तुरभावादित्यर्थः, तत् एव पूर्वोक्त-रूपमेव, इदं व्योम, पतत् स्खलत्, अधः आगच्छत् सदित्यर्थः, नेदिष्ठताम् अतिशयेन नैकट्यम्, । "अन्तिकवाढयोः" इति नेदादेशः ] एति आगच्छति, तमिस्रम् अन्धकारः, कुतः ? कुत्र ? तमिस्रं नाम किमपि वस्तु कुत्रापि नास्ति, परन्तु अतिकृष्णवर्णं निकटीभवत् गगनम् एव निशायां तमिस्र-रूपेण प्रतिभातीत्यर्थः। केनचित् कराभ्याम् ऊर्द्धं धृतं वस्त्वन्तरमपि धारणकर्त्तुरभावे अधः पतति एव इति दृश्यते ॥ ३१ ॥

अधोदिग्व्यापि तमो वर्णयति। ऊर्द्धेति।—ऊर्द्धम् उपरि-भागे, सूर्य्यरूपदीपस्येति भावः, अर्पितः स्थापितः, विधिनेति भावः, न्युब्जः अधोमुखः, कज्जलपातनार्थमिति भावः, यः कटाहः कर्परं, तत्कल्पे तत्तुल्ये, आकाशस्य तथैव दृश्यमानत्वादिति भावः, [ "कटाहः कर्परे तथा" इति निघण्टुः । ईषदसमाप्तौ कल्पप्-प्रत्ययः।] व्योम्नि गगने, तदात्मकाधिकरणे इत्यर्थः, दिना-धिपेन सूर्य्येण, सूर्य्यरूपेणेत्यर्थः, दीपेन प्रदीपेन करणेन, यत् तमःकज्जलं तिमिररूपमञ्जनं, न्यधायि न्यस्तम्, उत्पादितमिति यावत्, तत् उत्पन्नं तादृशं तमःकज्जलं, भूम्ना क्रमसञ्जातस्य

ध्वान्तैणनाभ्या शितिनाऽम्बरेण
दिशः शरैः सूनशरस्य तारैः ।
मन्दाक्षलक्ष्या निशि मामनिन्द्यौ
सेर्ष्या भवाऽऽयान्त्यभिसारिकाभाः ॥ ३३ ॥

---

तस्यैव बाहुल्येन, मिलत् एकीभवत् सत्, क्रमश उपचयेन पतनाख्यकर्मकारणं गुरुत्वं यस्य तादृशं गुरूभूतं सदित्यर्थः, भूमौ पृथिव्याम्, अस्खलत्; किम्? अपतत् किम्? अतिभारेण हेतुना भूमौ पतितं किम्? इत्यर्थः, गुरुत्वेनैव पतनस्य युक्तत्वात कज्जलमेव भूमौ पतितम्, अपि तु तमो नाम न किञ्चिदस्तीति भावः। कज्जलम् अपि कर्परे धृतं क्रमेण बहु भवत् गुरुत्वात् अधः पततीति लोके दृश्यते ॥ ३२ ॥

सर्वदिग्व्यापि तमो वर्णयति, ध्वान्तेति।—हे प्रिये! ध्वान्तम् अन्धकार इव, एणनाभिः कस्तूरी, घृष्टकस्तूरीकल्पिताङ्गरागविशेष इत्यर्थः तया, अन्यत्र—ध्वान्तम् एणनाभिरिव तया उपलक्षिताः, तथा शितिना नीलेन, अम्बरेण वस्त्रेण, गगनेन च उपलक्षिताः, यद्वा—ध्वान्तैणनाभ्या करणेन नीलेन गगनेन उपलक्षिताः, तथा सूनशरस्य पुष्पबाणस्य कामस्य, तारैः उज्ज्वलैः, शरैः बाणैः, ताडिता इति शेषः, अन्यत्र—सूनशरस्य शरैः पुष्पमयैर्बाणैरिव, तारैः नक्षत्रैः उपलक्षिताः, तथा मन्दाक्षस्य लज्जायाः, लक्ष्याः विषयीभूताः, सलज्जा इत्यर्थः, अन्यत्र—मन्दाक्षैः अल्पदृष्टिशक्तिविशिष्टैरपि नरैः, लक्ष्याः दर्शनीयाः, प्रगाढान्धकारे सर्वासामेव दिशामेकीभूततया बहुलीभवनादिवेति भावः, अथवा—मन्दाक्षैः कुञ्चितनयनैः नरैः, लक्ष्याः दर्शनीयाः, प्रकाशाभावात् सूक्ष्मद्रव्यदर्शनकाले नयनाकुञ्चनस्य स्वाभाविकत्वादिति भावः, अत एव अभिसारिकाभाः

भास्वन्मयीं मीलयतो दृशं द्राक्
मिथो मिलद्द्वाञ्चलमादिपुंस:।
आचक्ष्महे तन्वि! तमांसि पक्ष्म
श्यामत्वलक्ष्मीविजितेन्दुलक्ष्म ॥ ३४ ॥

कान्तमुद्दिश्य सङ्केतस्थानप्रस्थितनायिकातुल्या:, ("कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका" इत्यमर:) दिश: आशा:, अनिन्दौ चन्द्ररहितायाम, अनुदितचन्द्रत्वात् अन्धकारायामिति यावत्, निशि रात्रौ, सा नलम्, आयान्ति आगच्छन्ति, अभिसारिका यथा कस्तूरीकृताङ्गरागा नीलवसना: प्रच्छन्नधृतपुष्पा: कामबाणपीडिता: सलज्जा: सत्य: कामुकं प्रति समायान्ति, तथा दिशोऽपि इत्यर्थ:, अत एव हे प्रिये! मेर्ष्या ईर्ष्यायुक्ता, भव वर्त्तस्व, त्वमिति शेष:, भर्त्तुर्नायिकाऽन्तरसंयोगसम्भावनयेति भाव:। अन्याऽपि अभिसारिका शुभ्रायां रात्रौ शुभ्रवस्त्रावृता:, कृष्णायाञ्च रात्रौ कृष्णवस्त्रावृता: कान्तसन्निधिं समायान्तीति प्रसिद्धमेव ॥ ३३ ॥

भास्वदिति।—तन्वि। हे कृशाङ्गि! भास्वन्मयीं रविरूपां, दृशं नेत्रं, दक्षिणनयनमिति यावत्, द्राक् शीघ्रं, मीलयत: मुद्रयत:, सूर्य्यस्य अस्ताचलप्रेरणव्याजेन इति भाव', आदिपुंस: श्रीविष्णो', मिथ: अन्योऽन्यं, मिलन्तौ संयुक्तीभवन्तौ, द्वौ अपि उभावपि, अञ्चलौ प्रान्तदेशौ, ऊर्द्धाध:पुटद्वयमित्यर्थ: यस्य तादृशं, निमीलनेन अन्योऽन्यसलग्नपुटत्वात् निविडरोमकमिति यावत्, अत एव श्यामत्वलक्ष्म्या कृष्णवर्णशोभया, विजितं नितरां पराभूतम, इन्दुलक्ष्म चन्द्रस्थिताङ्कं, चन्द्रमण्डलस्थ-मृगात्मककृष्णवर्णचिह्नमित्यर्थ: येन तादृशं, पक्ष्म नेत्रलोमानि, [जात्येकवचनम्] नेत्रसम्बन्ध्यूर्द्धाध:पुटे पुनर्घनीभूतरोमाणि

विवस्वताऽनायिषतेव मिश्राः
स्वगोसहस्रेण समं जनानाम् ।
गावोऽपि नेत्रापरनामधेया-
स्तेनेदमान्ध्यं खलु नान्धकारैः ॥ १५ ॥

ध्वान्तस्य वामोरु ! विचारणायां
वैशेषिकं चारु मतं मतं मे ।

---

एवेत्यर्थः, तमांसि अन्धकारान्, आचक्ष्महे ब्रूमः, वयमिति शेषः, न तु तदतिरिक्तानि तमांसि नाम कानिचित् द्रव्याणि सन्तीति भावः ॥ १४ ॥

विवस्वतेति ।—विवस्वता सूर्य्येण, नेत्रं नयनमिति, अपरम् अन्यत्, नामधेयं नाम,पर्य्यायमिति यावत् यासां ताः चक्षुरिति-नामान्तरविशिष्टाः इत्यर्थः, जनानां लोकानां, गावः अपि गोरितिपर्य्यायकचक्षूंषि अपि, स्वस्य आत्मनः, गवा किरणानां, सहस्रेण दशशतेन, ( "स्वर्गेषु पशुवाग्वज्र-दिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्यमरः ) समं सह, मिश्राः संयुक्ताः, कृत्वेति शेषः, अनायिषतेव नीता इव, अस्ताचल-गमनकाले इति भावः, तेन खलु तेनैव हेतुना, इदं वर्त्तमानम्, आन्ध्यम् अन्धता, प्रकाशाभावात् नेत्रापगमाच्च रूपाग्रहणमिति यावत्, जायते इति शेषः, अन्धकारैः तिमिरैः, न नैव, इदम् आन्ध्यं जायते इति शेषः, तमोवशात् किमपि न दृश्यते इति न, परन्तु सूर्य्येण लोकानां नेत्रहरणपूर्वकास्तगमनादिति भावः । अन्येनापि गोपालेन स्वगोसहस्रेण मिश्रिताः परेषामपि गावो नीयन्ते इति ॥ १५ ॥

ध्वान्तस्येति ।—वामोरु ! हे अतिसुन्दरोरु ! [ "वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे" इति विश्वः । "संहितशफ—"

औलूकमाहुः खलु दर्शनं तत्
क्षमं तमस्तत्त्वनिरूपणाय ॥ ३६ ॥

---

इत्यादिनोक्ति नदौत्वात् ह्रस्वः ] ध्वान्तस्य तमसः, विचारणायां स्वरूपनिरूपणे विषये, वैशेषिकं षट्पदार्थसाधर्म्यवैधर्म्य-निरूपणात्मक-काणाददर्शनसम्बन्धि, मतम् "आलोकसामान्याभाव एव तमः" इत्यभिमतमेव, चारु सदुपपत्तिकं, युक्तिसङ्गततया मनोज्ञमित्यर्थः, इति मे मम, मतं सम्मतम् ; खलु यस्मात् कारणात्, तत् प्रसिद्धं वैशेषिकम्, उलूकेन उलूकापरनाम्ना कणादेन प्रोक्तं, ["तेन प्रोक्तम्"इत्यण् ] पक्षे—उलूकस्य पेचकस्य इदमिति । "तस्येदम्" इति अण् ] औलूकं काणादं पेचकीयञ्च, दर्शनं शास्त्रं दृष्टिश्च, आहुः वदन्ति, सम्प्रदायविदः इति शेषः, ( "उलूके तु वायसारातिपेचकौ" इत्यमरः ) अत एव तमसः अन्धकारस्य, तत्त्वनिरूपणाय अनारोपितस्वरूपनिर्णयाय, क्षमं समर्थम् ; तथा च वैशेषिकदर्शनरचयितुः कणादस्यैव उलूकवृत्त्या कणान् अत्तीति उलूक इति नामान्तरमासीत्,पेचकस्यापि उलूक इति नामान्तरम् ; तत्र दिवाऽन्धः पेचको रात्रौ अन्धकारेऽपि दर्शनक्षमः, इत्यालोच्य कणादः योगप्रभावेण उलूकरूपं धृत्वा निशि स्वयं स्वचक्षुषैव अन्धकारस्य स्वरूपमनुभूय यत् निरूपितवान् तत् सत्यमेव भवितुमर्हति,तच्च पूर्वोक्तमालोभाव रूपमिति भाव. । उलूकस्य घूकस्य सम्बन्धि, दृश्यते अनेनेति दर्शनं, चारु सदुपपत्तिक न त्वन्यत् इति मे मत सम्मतम् ; खलु यस्मात् कारणात् तत् दर्शनं वैशेषिकं शास्त्रम् औलूकदर्शनं, ततश्च तदपि तमस्तत्त्वनिरूपणाय समर्थ मति युक्तमित्यर्थः इति शब्दच्छलम् । वैशेषिकदर्शने च किमिदं तमः भावरूपम् ? अभावरूपं वा ? इति सन्देहे "भासाम् अभाव एव तमः" इति

ग्लानिस्पृशः स्पर्शनिषेधभूमेः
सेयं त्रिशङ्कोरिव सम्पदस्य।
न किञ्चिदन्यत् प्रति कौशिकीये
दृशौ विहाय प्रियमातनोति ॥ ३७ ॥

सूत्राविरोधेन व्योमशिवाचार्य्यादयः षट्पदार्थवैधर्म्येण अभाव-रूपमेव तमः न्यरूपयन्। श्रीधराचार्य्यास्तु "आरोपितं भूरूप-मेव तमः" इति निर्वर्ण्य भाभावे सत्येव तमःप्रतीतेः "भाभाव एव तमः" इत्युक्तमिति सूत्रविरोधं पर्य्यहार्षुः। एतत् असहमानाः श्रीमदुदयनाचार्य्यादयः पुनः भासाम् अभाव एव तम-स्त्वेन निरणैषुः। यस्मात् तत् औलूकं दर्शनं वैशेषिकशास्त्रं तम-स्तत्त्वनिरूपणाय क्षममाहुः इति वाऽन्वयः। महति अन्धकारे सत्यपि घटादिपदार्थं को वा पश्यतीति ध्वान्तविचारणायां क्रियमाणाया घूकनेत्रमेव चारु सर्वेभ्योऽपि अधिकमिति मे मतं पुनः पुनः सम्मतमित्यर्थः। उलूकनेत्रमेव महान्धकारे घटादि विलोकयितुं समर्थम्, अन्यदीयनेत्राणां तु आन्ध्यमेव जातमिति भावः। यतो वैशेषिकं घटादान् विशेषान् वेत्ति तादृशं, महान्धकारे घूकनेत्रमेव घटादीन् भेदेन जानाति न तु अन्यदीयं नेत्रं, तस्मात् तदेव चारु इत्यर्थः। तत्र दृढसम्मत्यर्थम उत्तरार्द्धम् ॥ ३६ ॥

ग्लानीति।—हे प्रिये! ग्लानिस्पृशः मालिन्ययुक्तस्य, चण्डालतां गतत्वेन विषण्णस्य च, तथा स्पर्शनिषेधस्य अस्पृश्य-तायाः, भूमेः स्थानस्य, एकत्र—आलोकाभावरूपतया अभाव-रूपत्वात्, अन्यत्र—चण्डालत्वादेव अस्पृश्यस्येत्यर्थः, अस्य तमसः, त्रिशङ्कोः तदाख्यस्य राज्ञः इव, सा प्रसिद्धा, इयं प्रत्यक्षेण गृह्यमाणा, सम्पत् बाहुल्येन विस्तारलाभः, राज्य-

मूर्द्धाभिषिक्तः खलु यो ग्रहाणां
तद्भासमास्कन्दित-ऋक्षशोभम्।
दिवाऽन्धकारं स्फुटलब्धरूपम्
आलोकताऽऽलोकमुलूकलोकः॥ १८॥

---

समृद्धिश्च, कौशिकस्य पेचकस्य विश्वामित्रस्य च इमे इति कौशिकीये औलूके वैश्वामित्रे च, ["वृद्धाच्छः" इति छ-प्रत्ययः।] दृशौ नेत्रे, विहाय त्यक्त्वा, अन्यत् अपरं, किञ्चित् किमपि वस्तु, प्रति लक्ष्यीकृत्य, अपीति शेषः, प्रियं प्रीतिप्रद-भावं, न आतनोति न विस्तारयति, किन्तु तदीये एव नेत्रे लक्ष्यीकृत्य प्रीतिं करोतीत्यर्थः; अन्यत् प्रति किञ्चित अल्पमपि प्रियं न आतनोति इति वा अर्थः। त्रिशङ्कोः सम्पत् यथा विश्वामित्रस्यैव नेत्रयोः प्रीतिमुत्पादयति, नान्यस्य, तथा अन्धकारस्य समृद्धिरपि उलूकनेत्रयोरेव प्रीतिमुत्पादयतीति भावः। एतदुपाख्यानं रामायणादौ प्रसिद्धम्॥ १७॥

उलूकस्वभाववर्णनामुखेन अन्धकारस्वरूपमेव विवृणोति, मूर्द्धेति।—यः रविः, ग्रहाणां नवसङ्ख्यकानां ग्रहाणां मध्ये, खलु निश्चितं, मूर्द्धाभिषिक्तः राजा, तेजश्च औत्कर्ष्यादिति भावः, उलूकानां पेचकानां, लोकः सङ्घः, तस्य रवेः, भया दीप्त्या, समास्कन्दिता अवष्टभ्य नितरां पराभूता, ऋक्षशोभा नक्षत्र-कान्तिः यस्मिन् तत्तादृशं, तथा स्फुटं व्यक्तं, लब्धानि प्राप्तानि, अन्यप्राणिभिः नयनैः दृष्टानीत्यर्थः, रूपाणि घटपटादि-स्वरूपाणि यस्मिन् तादृशमपि, दिवा कर्मीभूतं दिनम्, अन्धकारं तमोमयमेव, आलोकत अपश्यत्, दिने तस्य दर्शनाशक्तेः दिनम् अन्धकाररूपत्वेनेव मेने इत्यर्थः, तथा स्फुटं व्यक्तं, लब्धानि प्राप्तानि, निजनयनैः गृहीतानीत्यर्थः, रूपाणि घटपटादि-

दिने मम द्वेषिणि कोट्टगेषां
प्रचार इत्याकलनाय चारी: ।

स्वरूपाणि यत्र तादृशम्, अन्धकारं नैशं तम एव, आलोकं प्रकाशम्, आलोकतयेत्यर्थ:, आलोकत, दर्शनसहकारिप्रकाश-रूपत्वेनैव मेने इत्यर्थ:, प्राणिना स्वभाववैचित्र्यादिति भाव: । अन्धकारं स्फुटलब्धरूपमित्यावृत्त्या योज्य, तेन तमसा विपरीत-दृश: एव भवन्तीति व्यज्यते । एवंविधम् अन्धकारञ्च स्फुटम् अतिप्रसिद्धं शुक्लभास्वरात्मकं लब्धं रूपं येन तादृशम् आलोकमेव अपश्यत् । कृष्णरूपमपि तम: शुक्लभास्वरालोकत्वेन अपश्यदिति विरुद्धमित्यर्थ: । अथच य: ग्रहराज: सूर्य्य: आक्रान्तनक्षत्रलक्ष्मीकां तद्भासं सूर्य्यदीप्तिमिव अयम् उलूक-लोक: दिवा दिने अन्धकारम् अपश्यत्, रात्रौ चान्धकारम् आलोकम् अपश्यत्, दिने सूर्य्यालोक एव तमो रात्रौ च तम एव सूर्य्यालोक इति ददर्श इत्यर्थ: । स्फुटमुपलब्धानि घटादिरूपाणि यस्यामन्यजनेन सा स्फुटलब्धरूपा, स्फुटं सञ्जात: स्वरूप-लाभश्च येन तत् स्फुटलब्धरूपं, तत: द्वन्द्वसमासे उभयविशेषण-त्वेन अन्धकारस्य नपुंसकत्वात् नपुंसकैकशेषैकवद्भावेन वा व्याख्येयम्, ("अन्धकारोऽस्त्रियाम्" इत्यमर: ) सूर्य्यदीप्त्या असमास्कन्दिता अपराभूता नक्षत्रशोभा नक्षत्रलक्ष्मी: यत्र तम्, अन्धकारविशेषणं वा । रात्रौ सूर्य्यदीप्ते: अभावात् अतिरस्कृत-नक्षत्रशोभम् इत्यर्थ: । सूर्य्यदीप्ते: एव समास्कन्दनसामर्थ्यात् तमसैव रात्रौ यत् तिरस्करणं तेनैव नक्षत्रशोभा यस्मिन् इति वा, इत्यादि व्याख्यानानि ज्ञातव्यानि । लक्ष्मीमिति पाठे नद्यृत्वेऽपि समासान्तविधे: अनित्यत्वात् कबभाव: ॥ ३८ ॥

अन्धकारस्यैव अंशश्छाया इति दर्शयितुमाह, दिने इति ।

छाया विधाय प्रतिवस्तुलग्नाः
प्राविशयत् प्रष्टुमिवान्धकारः ॥ १८ ॥
ध्वान्तस्य तेन क्रियमाणयेत्थं
द्विषः शशी वर्णनयाऽथ हृष्टः ।

—मम मे अन्धकारस्य, द्वेषिणि वैरिणि, विनाशकत्वादिति भावः, दिने अहनि विषये, एषां दिनबोधकालोकादिवस्तूनां, कीदृक् कीदृशः, प्रचारः विहरणं, स्नेहादिव्यवहारश्च, इति एतत्, आकलनाय सामस्त्येन ज्ञानार्थम्, अन्धकारः तिमिरं, प्रतिवस्तुलग्नाः पदार्थमात्रसम्बद्धाः, छायाः अनातपान् एव, चारीः गूढार्थवेदिकाः चारनारीः, [ पुंयोगात् ङीष् ] विधाय कृत्वा, ताभ्यः चारपदं दत्त्वा दिनं प्रति सम्प्रेष्य इत्यर्थः, प्रष्टुमिव जिज्ञासितुमिव, प्रत्यावृत्तानां तासां समीपे आलोकादीनां प्रचारवृत्तान्तमिति भावः, प्राविशयत् प्रवेशमकारयत्, दिनबोधककालमध्ये इति शेषः ; नृपतिर्यथा शत्रुपक्षीयाणां प्रचारज्ञानार्थं सर्वत्रैव प्रवेष्टुं समर्थान् स्त्रीचारान् प्रेरयति तद्वदिति सरलार्थः। दिवा प्रतिपदार्थसम्बद्धाः छायाः एव रात्रौ समागत्य मिलिताः निजस्वामिनम् अन्धकारं प्राविशन्। रात्रौ हि प्रकाशाभावे छाया अन्धकारेण सह एकीभवतीति तत्सम्बन्धादेव महान्धकारः प्रतीयते इति भावः। एतेन छायाऽपि तमः एवेति वर्णितम्। अन्योऽपि रात्रौ लोकस्थितिं ज्ञातुकामः स्त्रीणां सर्वत्र प्रवेष्टुं शक्यत्वात् चारनारीः सम्प्रेष्य तत्तत्यवृत्तान्तं विचार्य्य समागतास्ताः प्रष्टुमात्मसविधं प्रवेशयति। छायाः एव चारीः प्रतिवस्तुलग्नाः विधायेति वा ; चारपदं दत्त्वा यद्दिनं प्रत्येव प्रेषयामास, अत एव ताः दिने प्रतिवस्तुलग्नाः दृश्यन्ते इति वा ॥ १८ ॥

उद्यन्नुपाश्लोकि जपाऽरुणश्रीः
नराधिपेनानुनयेच्छयेव ॥ ४० ॥
पश्चावृतोऽप्येष निमिषमद्रेः
अधित्यकाभूमितिरस्करिण्या।
प्रवर्षति प्रेयसि! चन्द्रिकाभिः
चकोरचञ्चूचुलुकप्रमिन्दुः ॥ ४१ ॥

इदानीं चन्द्रोदयं वर्णयितुमुपक्रमते, ध्वान्तस्येति।—अथ अनन्तरं, पूर्वोक्तश्लोकोच्चारणात् परमेवेत्यर्थः, नराधिपेन नृपतिना, तेन नलेन, इत्थम् एवम्प्रकारेण, क्रियमाणया विधीयमानया, द्विषः शत्रुभूतस्य, ध्वान्तस्य अन्धकारस्य, वर्णनया विवरणेन हेतुना, रुष्टः क्रुद्धः इव, अत एव जपावत् जवाकुसुम इव, अरुणा आरक्ता, श्रीः कान्तिः यस्य सः तादृशः, उद्यन् उदयं प्राप्नुवन्, शशी चन्द्रः, अनुनयेच्छया इव तस्य प्रसादनवाञ्छया इव, उपाश्लोकि श्लोकैः स्तोतुम् आरम्भि, [ "सत्या—" इति णिजन्तात् कर्मणि चिण् ]। अन्योऽपि वैरि-वर्णनया रुष्टः सन् अरुणो भवति, तत्परिहारार्थमुदितः सन् वर्णकेन प्रसादनार्थं स्तूयते इति प्रतीयमानोत्प्रेक्षा। इव-शब्दस्य उभयत्र योजना वा ॥ ४० ॥

पश्चेति।—प्रेयसि! हे प्रियतमे! अद्रेः उदयाचलस्य, अधित्यकाभूम्या ऊर्द्ध्वप्रदेशेन, तत्स्वरूपयैव इत्यर्थः, तिरस्करिण्या जवनिकया, निमिषम् एकवारं चक्षुर्निमीलनकालं, तन्मात्रम् अत्यल्पकालमित्यर्थः, आवृतोऽपि अन्तर्हितोऽपि, सम्पूर्णा-नुदितोऽपीत्यर्थः, एषः उद्यन्, इन्दुः चन्द्रः, चन्द्रिकाभिः निज-ज्योत्स्नाभिः, चकोराणां तदाख्यपक्षिणां, चन्द्रिकास्रवदमृत प्राशिनां पक्षिविशेषाणामित्यर्थः, चञ्चूः त्रोटय एव, चुलुका

ध्वान्ते द्रुमान्तानभिसारिकास्त्वं
शङ्कस्व सङ्केतनिकेतमाप्ताः ।
छायाच्छलादुज्झितनीलचेला
ज्योत्स्नाऽनुकूलैश्चलिता दुकूलैः ॥ ४२ ॥

आभुग्नपाणयः तान् पूरयित्वेति तद्यथा तथा, [ चुलुकप्रमिति "वर्ष प्रमाणे—" इत्यादिना चुलुकपूर्वस्य पूरेर्णमुल् ऊकार-लोपश्च ] प्रवर्षति प्रकर्षेण वर्षति, सुधाम् इति शेषः, यावता चकोरचञ्चूपूरणं भवति तावत्प्रमाणं वर्षतीत्यर्थः, इति पश्य अवलोकय, त्वमिति शेषः ; प्रथमचन्द्रिकाभिरेव चकोराणाम् आनन्द करोति किं पुनः उदितः सन्निति भावः । अन्योऽपि सुजनः दूरस्थोऽपि अन्येषामुपकरोति इति तात्पर्य्यम् ॥ ४१ ॥

ध्वान्ते इति ।—हे प्रिये ! त्वं भवती, ध्वान्ते अन्धकारे सति, चन्द्रोदयात् पूर्वमिति भावः, द्रुमान्तान् तरुनिकटदेशान् एव, वृक्षाधोभागस्थभूमीरेवेत्यर्थः, सङ्केतनिकेतं सम्भोगार्थं कान्तनिर्दिष्टाभिसरणस्थानम्, आप्ताः प्राप्ताः, अभिसारिकाः गूढनायिकाः, शङ्कस्व सम्भावय, तथा छायाच्छलात् अनातप-व्याजात्, इदानीं चन्द्रोदये सति वृक्षाधोभागवर्त्तिच्छाया-च्छलादित्यर्थः, उज्झितं परित्यक्तं, नीलं कृष्णवर्णं, पूर्वधृतं तमोऽनुकूलमिति भावः, चेलं वस्त्रं याभिः तादृश्यः सत्यः, ज्योत्स्नाऽनुकूलैः चन्द्रिकाऽनुगुणैः, सवर्णत्वात् ज्योत्स्नायां गोपनार्हैः धवलतरैरिति भावः, दुकूलैः वस्त्रैः उपलक्षिताः सत्यः, चलिताः प्रस्थिताः, सम्भोगं कृत्वा स्वगृहं प्रति पुनः प्रत्यावृत्ताः इत्यर्थः, इति त्वं शङ्कस्व इत्यन्वयः । तमसि नील-वसनं परिहितं केनापि न ज्ञातव्यम् इति बुद्ध्या नीलं वस्त्रं परिधाय प्राक् सङ्केतस्थानम् आगताः, इदानीं चन्द्रोदये

त्वदास्यलक्ष्मीमुकुरं चकोरैः
स्वकौमुदीमादयमानमिन्दुम्।
दृशा निशीन्दीवरचारुभासा
पिबोरु रम्भातरुपीवरोरु ! ॥ ४३ ॥

---

पुनः नीलवस्त्रपरिधाने केनापि ज्ञायते चेदिति भीत्या तत् तत्रैव वृक्षतले विहाय सवर्णत्वात् ज्योत्स्नायां धार्य्यं श्वेतं दुकूलं परिधाय परावृत्ताः केनापि न ज्ञाताः इति तात्पर्य्यम्। नीलचोलाः इति पाठे—चोलः कुर्पासः। एष एव अभिसारिकाणां स्वभावो यत् ता आत्मगोपनाय कृष्णपक्षे नीलं शुक्लपक्षे च शुभ्रं वस्त्रं परिधाय अभिसरन्तीति ॥ ४२ ॥

त्वदिति।—रम्भातरुपीवरोरु ! रम्भातरुवत् कदलीवृक्षवत्, पीवरौ पीनौ, ऊरू सक्थिनी यस्याः तत्सम्बुद्धिः; हे कदलीकाण्डस्थूलोरुशालिनि ! त्वं निशायां रात्रौ, यत् इन्दीवरं नीलोत्पलं, तद्वत् चारुः मनोज्ञा, भाः कान्तिः यस्याः तादृशया, निशायामेव इन्दीवराणां विकाशप्राप्तेः विकाशितत्वसूचनार्थमेव निशीति पदमुपात्तं कविनेति बोध्यम्; दृशा चक्षुषा, तव भवत्याः, आस्यलक्ष्म्याः मुखशोभायाः, मुकुरं दर्पणम् इव, तदवलोकनार्थमिति भावः, तथा चकोरैः तदाख्यपक्षिभिः प्रयोज्यैः स्वकौमुदीं निजज्योत्स्नाम्, आदयमानं पाययमानं, निजकौमुदीं चकोरान् दयया सेवयमानमित्यर्थः, [ चकोरैः इत्यत्र "गतिबुद्धौ—" इति कर्मत्वप्राप्तावपि "आदिखाद्योर्न" इति प्रतिषेधात् कर्त्तरि तृतीया। आदयमानमित्यत्र निगरणार्थत्वात् परस्मैपदप्राप्तावपि "अदेः प्रतिषेधो वक्तव्यः" इति निषेधात् "णिचश्च" इति तङ् ] इन्दुं चन्द्रम्, उरु महत्, साग्रहं यथा तथेत्यर्थः, पिब साग्रहेणावलोकयेत्यर्थः, तेन च त्वं

असंशयं सागरभागुदस्थात्
पृथ्वीधरादेव मथः पुराऽयम्।
अमुष्य यस्मादधुनाऽपि सिन्धौ
स्थितस्य शैलादुदयं प्रतीमः॥ ४४॥

प्रीता भवसि, तव नेत्रोत्पलञ्च हर्षेण विकाशितं भवेदिति भावः। उदिते चन्द्रे चकोराः सानन्दा जाताः, नीलोत्पलानि च विकसितानीति तात्पर्य्यम्। एतेन इन्दोः परोपकारित्वं सूचितम्। विकसितेन्दीवरतुल्यया दृशा पिब इत्यनेन चन्द्रोदये हि इन्दीवरं विकसति त्वं चैवम्भूतया दृशा यदा चन्द्रम् अवलोकयिष्यसि तदा जनः त्वद्दृशं चन्द्रावलोकनविकसितमिन्दीवरमेवैतत् इति ज्ञास्यति दिवा सङ्कोचात् असादृश्यादिति सूचितम्॥ ४३॥

असंशयमिति।—पुरा पूर्वं, समुद्रमथनात् प्रागित्यर्थः, सागरभाक् समुद्रगर्भस्थः, अयं चन्द्रः, मथः मन्थनदण्डभूतात्, पृथ्वीधरात् पर्वतात्, मन्दराद्रेरेवेत्यर्थः, उदस्थात् उत्पन्नः, इति असंशयं निश्चितं, पुराणादौ यत् एवं श्रूयते तत् सत्यमेवेत्यर्थः; पुरा प्रथमसम्भवावसरे उदस्थात् तस्मादेव समुत्थितः इति वा; तत्र हेतुमाह—यस्मात् हेतोः, अधुनाऽपि इदानीमपि, सिन्धौ समुद्रे, स्थितस्य अस्तगमनानन्तरं प्रविष्टस्य, सागरगर्भस्थस्यापि इत्यर्थः, अमुष्य चन्द्रस्य, शैलात् उदयाचलात् एव, उदयम उत्पत्तिं, प्रतीमः जानीमः, पश्याम इत्यर्थः। प्रत्यहं सागरस्थस्याप्यस्य अचलोत्पत्तिशीलत्वरूपलिङ्गदर्शनात् समुद्रमथने प्रथमसम्भवावसरेऽप्ययम् अचलादेवोत्पन्नः इति निश्चिनुमः, स्वभावस्य अपरिवर्त्तनीयत्वादिति भावः। उदयाचलशिखरं चन्द्रोऽतिक्रामतीति तात्पर्य्यम्॥ ४४॥

निजानुजेनातिथितामुपेतः
प्राचीपतेर्वाहनवारणेन ।
सिन्दूरसान्द्रे किमकारि मूर्द्ध्नि
तेनारुणश्रीरयमुज्जिहीते ? ॥ ४५ ॥
यत् प्रीतिमद्भिर्वदनैः स्वसाम्यात्
अचुम्बि नाकाधिपनायिकानाम् ।
ततस्तदीयाधरयावयोगात्
उदेति बिम्बारुणबिम्ब एषः ॥ ४६ ॥

निजेति ।—निजानुजेन स्वकीयेन कनीयसा भ्रात्रा, एकस्मादेव सिन्धोः अस्मात् चन्द्रात् पश्चात् उत्पन्नतया इति भावः, प्राचीपतेः पूर्वदिगधीश्वरस्य इन्द्रस्य, वाहनवारणेन वाहनभूतेन गजेन, प्राच्यां स्थितेन ऐरावतेनेत्यर्थः, अतिथिताम् आतिथ्यम्, उपेतः प्राप्तः, अतिथिरूपेण ऐरावतगृहं समागत इत्यर्थः, प्राच्याम् उदितत्वात् इति भावः, अयं चन्द्रः, अग्रज इति भावः, सिन्दूरेण नागसम्भवरक्तवर्णचूर्णविशेषेण, सान्द्रे घने, बहुलतया लिप्ते इत्यर्थः, मूर्द्ध्नि मस्तके, अकारि ? कृतः किम् ? अग्रजत्वेन गौरवात् नमस्कारपूर्वं शिरसि आरोपितः किमित्यर्थः ; तेन सान्द्रसिन्दूरशिरसि स्थापनात् लग्नसिन्दूरत्वेन हेतुना, अरुणश्रीः आरक्तशोभः सन्, उज्जिहीते उद्गच्छति, किम् ? इति शेषः । उदयन् चन्द्रः सिन्दूररक्तः दृश्यते इत्यर्थः ॥ ४५ ॥

उद्यच्चन्द्रबिम्बस्य अरुणवर्णत्वे कारणान्तरमाह, यदिति । —यत् यस्मात्, एषः चन्द्रः, स्वर्गविधम् आगतः इति भावः, स्वसाम्यात् सौन्दर्य्यादिगुणयोगेन निजनिजसादृश्यात्, प्रीतिमद्भिः हर्षयुक्तैः, नाकाधिपस्य स्वर्गाधीश्वरस्य इन्द्रस्य,

विलोमिताङ्कोत्किरणात् दुरूह-
दृगादिना दृश्यविलोचनादि।
विधिर्विधत्ते विधुना वधूनां
किमाननं काञ्चनसञ्चकेन ? ॥ ४७ ॥

नायिकानां प्रणयिनीनाम, अप्सरसामित्यर्थ:, वदनै: मुखै:, अचुम्बि चुम्बित:, तत: तस्मात् हेतो:, तस्मात चुम्बनात् वा, तदीयानां देवेन्द्रनायिकानाम्, अधरेषु ओष्ठेषु, यो यावः अलक्तक:, प्रसाधनार्थं निहित इति भाव:, तस्य योगात् सम्बन्धात् हेतो:, इवेति शेष:, बिम्बवत् पक्कबिम्बीफलवत्, अरुणं रक्तवर्णं, बिम्बं मण्डलं यस्य स तादृश: सन्, उदेति उद्गच्छति। अन्योऽपि समान: स्वसविधम् आगत: सख्या प्रीत्या चुम्ब्यते इति लोकाचार:। मुखैरिति बहुवचनेन तत्र प्रदेशे ताभि: सर्वाभिरेव युगपदेव चुम्बनेन बहुलयावक-योगात् सकलस्य अपि चन्द्रबिम्बस्य रक्तत्वं युक्तमिति सूचितम् ॥ ४६ ॥

विलोमितेति।—विधि: विधाता, विलोमित: पराङ्मुख: इव कृत:, स्वप्रभया आच्छादित: इवेत्यर्थ:, अङ्क: कलङ्क:, कृष्णवर्ण-मृगचिह्नमिति यावत् येन तादृशात्, उत्किरणात् उत्कृष्टात् अतिशयेन स्निग्धोज्ज्वलात् मयूखात् हेतो:, दुरूह: दुस्तर्क्य:, दृगादि: नेत्राद्यवयव: यस्य तादृशेन, अथच, विलोमितानां विपरीतीकृतानाम्, अङ्कानां नेत्रादिनिर्माणार्थं निम्नोन्नतांश-चिह्नस्थानानाम्, उत्किरणं सङ्घट्टनं तस्मात् हेतो:, दुरूह-दृगादिना विपरीतभावेन सङ्घटनात् दुर्लक्ष्यनेत्रकर्णनासिका-द्यवयवेन, विधुना चन्द्रेण, उद्गच्छचन्द्ररूपेणेत्यर्थ:, काञ्चनस्य सुवर्णस्य, सञ्चकेन बिम्बकेन, "छाँच्" इति वङ्गभाषया "ढसा"

अनेन वेधा विपरीतरूप-
विनिर्मिताङ्कोत्किरणाङ्ककेन ।
त्वदाननं दृश्यदृगाद्यलक्ष्य-
दृगादिनैवाक्रत सञ्चकेन ॥ ४८ ॥

इति महाराष्ट्रीयभाषया प्रसिद्धेन प्रतिरूपकविशेषेणेत्यर्थः, दृश्याः भावात् द्रष्टमर्हाः, तादृगुत्किरणाभावात् सुस्पष्टं दृष्टि-गोचरीभूता इत्यर्थः,विलोचनादयः नेत्रनासाकर्णाद्यवयवाः यस्य तादृशं, बधूनां कामिनीनाम्, आननं मुखं, सुन्दरं मुखमिति यावत्, [ आननमिति जात्येकवचनम् ] विधत्ते ? रचयति ? किमिति शेषः । ब्रह्मा हि स्त्रीमुखम् उदङ्कचन्द्ररूपेण स्वर्णस्य सञ्चकेन निर्ममे, सञ्चके हि निष्पाद्यस्य वस्तुनः निम्नोन्नतभागाः विपरीताः एव उत्कीर्य्यन्ते, तेन च नेत्राद्यवयवाः दुर्ज्ञेयाः भवन्ति,तन्निर्मितमुखादौ च सुज्ञेयाः भवन्ति,तस्मात् एवं तर्क्यते यत् उदङ्कचन्द्रः बधूमुखनिर्माणार्थम् अत्युत्तमसुवर्णसञ्चक एव, तेनैव तत्र किञ्चिदारुण्यं दृश्यते, यतः उत्तमं सुवर्णम् आरक्तवर्णं भवति इति भावः ॥ ४७ ॥

उक्तमेवार्थं भङ्ग्यन्तरेणाह, अनेनेति ।—हे प्रिये ! वेधाः स्रष्टा, विपरीतरूपं विलोमितं यथा तथा, विनिर्मितं विरचितम्, अङ्कोत्किरणं नेत्राद्यवयवनिर्माणार्थं निम्नोन्नताश्चिह्न-स्थानानां सङ्घटनं यत्र तादृशम्, अङ्कम् अवयवो यस्य तेन, यद्वा —विपरीतरूपं यथा तथा विनिर्मितः अङ्कः कलङ्कः, कलङ्कित-पृष्ठमित्यर्थः, यस्य स चासौ उत्किरणाः अतिस्निग्धोज्ज्वलमयूखाः एव, अङ्कानि अवयवा यस्य स चेति तादृशेन, तथा अलक्ष्याः उत्किरणाङ्कत्वेनैव लक्षयितुमशक्याः, दृगादयः चक्षुराद्यवयवाः यस्य तादृशेन, अनेन चन्द्रेण, चन्द्ररूपेणेत्यर्थः, सञ्चकेन,

अस्याः सुराधीशदिशः पुराऽऽसीत् यदम्बरं पीतमिदं रजन्या।
चन्द्रांशुचूर्णव्यतिचुम्बितेन तेनाधुना नूनमलोहितायि॥ ४९॥

"छ्वांच्" इत्याख्येन मुखादिनिर्माणसाधनद्रव्यविशेषेण, दृश्यं सुन्दरम्, अथच सुस्पष्टदर्शनयोग्यम्, उल्किरणाभावादिति भावः, दृगादि नेत्राद्यवयवो यस्य तादृशं, त्वदाननं तव मुखम्, अकृत निर्ममौ, नो चेत् त्वदाननं कथं स्निग्धत्वाह्लादकत्वादयश्चन्द्रधर्मा दृश्यन्ते इति भावः। त्वदाननमेव कृतं, न तु अन्याननम् इति वा, अयमेव अत्र श्लोके विशेषः। अयं श्लोकः क्षेपकः॥४८॥

अस्या इति।—हे प्रिये! अस्याः दृश्यमानायाः,सुराधीशस्य देवेन्द्रस्य, दिशः आशायाः, पूर्वस्या इत्यर्थः, यत् इदम् ऊर्द्ध्वे दृश्यमानम्, अम्बरं गगनं वस्त्रञ्च, ("अम्बरं व्योम्नि वाससि" इत्यमरः) पुरा चन्द्रोदयात् पूर्वं, रजन्या रात्र्या, नैशान्धकारेणेत्यर्थः, हरिद्रया च, ("रजनी नीलिकालाक्षा-हरिद्रा-यामिनीषु च" इति विश्वः) पीतं कवलितं, तमोव्याप्तत्वात् अदृश्यमिति यावत्, रञ्जनेन पीतवर्णञ्च, आसीत् अवर्त्तत, अधुना इदानीं चन्द्रोदये, तेन अम्बरेण, चन्द्रांशूनाम् इन्दुकिरणानां,चूर्णैः क्षोदैः,श्लक्ष्णसूक्ष्मतेजोलेशैरित्यर्थः,सुधाऽपराख्यलेपविशेषैश्च, चन्द्रांशुवत् शुभ्रतरेण चूर्णसंज्ञकताम्बूलोपकरणैश्च इति वा, व्यतिचुम्बितेन अतितरां स्पृष्टेन सता, नूनं निश्चितमेव, अलोहितायि आरक्तीभूतम्। ["लोहितादिडाज्भ्यः" इति क्यषन्ताद्भावे चिण्।] यत् पीतमम्बरं तमसा पूर्वं नीलमभूत् तदेव इदानीम् उद्यच्चन्द्रलोहितकरसंस्पर्शात् रक्तं जातमित्यर्थः। हरिद्रया पीतवर्णं वस्त्रं चूर्णेन युक्तं सत् रक्तं भवति इति प्रत्यक्षमेव। देवेन्द्रस्त्रियाश्च अम्बराणां विचित्रवर्णत्वं युक्तमेव॥ ४९॥

तानीव गत्वा पितृलोकमेनमरञ्जयन् यानि स जामदग्न्यः।
छित्त्वा शिरोऽस्राणि सहस्रबाहोर्विस्राणि विश्राणितवान्
पितृभ्यः॥ ५० ॥

अकर्णनासस्तपते मुखं ते पश्यन्न सीतास्यमिवाभिरामम्।
रक्तोस्रवर्षी वत लक्ष्मणाभिभूतः शशी शूर्पणखामुखाभः ?॥५१॥

तानीति।—हे प्रिये! सः अतिवीरत्वेन प्रसिद्धः, जामदग्न्यः परशुरामः, सहस्रबाहोः कार्त्तवीर्य्यार्जुनस्य, शिरः मूर्द्धानं, छित्त्वा कर्त्तित्वा, विस्राणि आमगन्धीनि, ("विस्रं स्यादामगन्धि यत्" इत्यमरः) यानि अस्राणि रक्तानि, पितृभ्यः जमदग्न्यादिभ्यः, विश्राणितवान् दत्तवान्, तर्पणक्रियायामिति भावः, यैः रक्तैः प्रतिज्ञात पितृतर्पणं कृतवान् इत्यर्थः, तानि अस्राणि, पितृलोकं मृतपूर्व्वंशीयानामावासस्थानं, चन्द्रलोकमिति यावत्, गत्वा प्राप्य, मन्त्रप्रभावादिति भावः, एनं चन्द्रं, पितृलोकाधीशमिति यावत्, अरञ्जयन् इव रक्तवर्णं चक्रुः इव। "चन्द्रो वै पितृलोकः" इति श्रुतेः चन्द्रस्य पितृलोकवास्तव्यत्वात् चन्द्रो रक्तवर्णो दृश्यते इति भावः। परशुरामः पितृघातिनं सहस्रबाहुमर्जुनं हत्वा तदीयैः रक्तैः पितृतर्पणं कृतवान् इति इतिहासः॥ ५० ॥

अकर्णेति।—हे प्रिये! न विद्यते कर्णनासं कर्णौ नासिका च स्वभावादेव यस्य सः अकर्णनासः कर्णनासाविहीनः, तथा रक्ताः आरक्ताः, उदयकालस्वभावादिति भावः, उस्राः किरणाः, ("किरणोस्रमयूखांशु—" इत्यमरः) तान् वर्षतीति तादृशः, रक्तः शोणः चासौ उस्रवर्षी च तादृशः इति वा, तथा लक्ष्मणा कलङ्केन, कृष्णवर्णमृगचिह्नेनेत्यर्थः, ("कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणम्" इत्यमरः)

आदत्त दीप्रं मणिमम्बरस्य दत्त्वा यदस्मै खलु सायधूर्त्तः।
रज्यत्तुषारद्युतिकूटहेम तत् पाण्डु जातं रजतं क्षणेन ॥५२॥

---

अभिभूतः आक्रान्त, अत एव सूर्पणखायाः तन्नाम्न्या रावण-भगिन्याः, मुखवत् वदनवत्, आभा सादृश्यं यस्य सः तादृशः, अतीव कुत्सितदर्शन इति भावः, शशी चन्द्रः, सीतायाः जनक-दुहितायाः, आस्य मुखम् इव,अभिरामं मनोहरं, कर्णनासादि-युक्तत्वेन सम्पूर्णसर्वाङ्गत्वात् सुदर्शनमित्यर्थः, ते तव, मुखं वदनं, पश्यन् विलोकयन्,अपीति शेषः, न त्रपते ? न लज्जते ? वत चित्रं, सजातीयमुत्कृष्टं वस्तु वोच्य हीनस्य लज्जा अवश्यमेव भवितुमर्हति, अयन्तु एषु लज्जाकारणेषु सत्सु अपि न लज्जते, यतस्तथात्वेऽपि आत्मानं प्रकाशयति लोक-समक्षमित्येतच्चित्रम् इत्यर्थः। सूर्पणखामुखमपि लक्ष्मणेन अभिभूतम्, अत एव छिन्नत्वात् कर्णनासारहितं, रक्तं रक्तवर्णम् असवर्षि रुधिरवर्षि च यदपि, ("रुधिरेऽसृग्लोहितास्र—" इत्यमरः) सीतामुख पश्यन् अपि रामम् अभि लक्षीकृत्य वर्त्त-मानम अत एव न विद्यते भीः भयं यस्य तत् अभि भयरहितञ्च, न लज्जते ? तदनन्तरमपि प्रौढित्वादप्रकटनात्। अभिशब्दस्य आवृत्तिः कार्य्या। लक्ष्मशब्दो नान्तः, पक्षे ण-कारान्तः ॥५१॥

आदत्तेति।—हे प्रिये ! साय सायङ्काल एव, धूर्त्तः शठः, [ षजन्तसोधातोरव साय-शब्दः सायं-शब्दसमर्थनार्थः ] अस्मै अम्बराय, यत् रज्यन् उदयकाले रक्तीभवन्, तुषारद्युतिः चन्द्रः एव, रज्यत् रञ्जनद्रव्यविशेषलेपवशात् रक्तवर्णीभवत्, कूटहेम कृत्रिमं सुवर्णं, दत्त्वा प्रदाय, मूल्यरूपेणेति भावः, दीप्रं प्रभा-प्रदीप्तम्, अम्बरस्य आकाशस्य, मणिं महामूल्यं किमपि रत्नं, सूर्य्यञ्च, आदत्त जग्राह, तत् तुषारद्युतिरूपं कृत्रिमं हेम,

बालेन नक्तं-समयेन मुक्तं रौप्यं लसड्डिम्बमिवेन्दुबिम्बम् ।
भ्रमिक्रमादुज्झितपट्टसूत्रनेत्रावृतिं मुञ्चति शोणिमानम् ॥५२॥

क्षणेन क्षणमात्रेणैव, रजतं खलु रूप्यम् इव, पाण्डु शुभ्रं, जातं सम्पन्नं, रञ्जकलेपापगमात् रौप्यत्वेन परिणतमित्यर्थः। धूर्त्तो हि रूप्यं लेपादिभिः रञ्जयित्वा सुवर्णीकृत्य सरलप्रकृतिकं जनं वञ्चयति, तद्विनिमयेन वस्त्रान्तरस्थमपि प्रसरद्धौमिकं रत्नञ्च गृह्णातीति प्रत्यक्षीक्रियते लोकैः। उदयानन्तरमतिक्रान्त-कियत्कालत्वाद्रक्तिमानं परित्यज्य चन्द्रो रूप्यवत् धवलो जात इति भावः ॥ ५२ ॥

बालेनेति।—हे प्रिये! बालेन शिशुना, धनिककुमारेणेवे-त्यर्थः, अन्यत्र—बालेन अचिरप्रादुर्भूतेन, प्रदोषरूपेणेत्यर्थः, नक्तं-समयेन रात्रिकालेन, मुक्तं निक्षिप्तं, क्रीड़ायै भ्रामणार्थं करात् सवेगं भूमौ पातितमित्यर्थः, अन्यत्र—परित्यक्तं, सन्ध्याकालापगमादिति भावः, रौप्यस्य रजतस्य इदमिति रौप्यं रजतमयं, [ रौप्यमिति सम्बन्धे विकारे वा अण् ] लसत् दीप्य-मानं, डिम्बं बालक्रीडासाधनं डिम्बाकारं "लाटिम्" इति गौड़-देशभाषायां महाराष्ट्रभाषायां कान्यकुब्जभाषायाञ्च "भवरा" इति प्रसिद्धं भ्रमरकम् इव, इन्दुबिम्बं चन्द्रमण्डलं, [ कर्त्तृ ] भ्रमिक्रमात् भूमौ चक्राकारेण घूर्णनपारम्पर्य्यात्, अन्यत्र —अविरतभ्रमणप्रसङ्गेन क्रमशः आकाशस्य ऊर्द्धदेशे गमनात्, उज्झिता परित्यक्ता, पट्टसूत्रस्य रक्तवर्णपट्टतन्तोः, नेत्र डोरकं, ( "नेत्रं मन्यगुणे वस्त्रे" इत्यभिधानात् नेत्रशब्दो यद्यपि मन्थ-वेष्टनगुणे मुख्यः तथाऽपि अत्र गुणमात्रपरः ) तेन आवृतिः वेष्टनं, तड्डिम्बस्येति शेषः, अन्यत्र—उज्झिता पट्टसूत्रनेत्रवत् रक्तवर्णपट्टसूत्रग्रथितजालिकावत्, आवृतिः चन्द्रावरणं येन

तारात्तरैर्यामसिते कठिन्या
निशाऽलिखत व्योम्नि तमःप्रशस्तिम्।
विलुप्य तामल्पयतोऽरुणोऽपि
जातः करे पाण्डुरिमा हिमांशोः॥ ५४॥

तादृशं, शोणिमानं रक्तिमानं, मुञ्चति त्यजति। शिशुक्रीड़ा-साधनं हि भ्रमरकं दरिद्राणां काष्ठमयं भवति, ईश्वराणां च समृद्धातिशयात् राजतं भवति, तच्च घूर्णनक्रमेण पट्टसूत्रवलित-डोरकस्रंसनात् तत्सम्बन्धजातं रक्तिमानं यथा मुञ्चति तथेदं चन्द्रबिम्बमपीत्यर्थः। इदानीं चन्द्रो धवलो जातः इति भावः। नेत्रावृतेरिति पाठे भ्रमिक्रमात् हेतोः उज्झिता पट्टसूत्रनेत्रा-वृतिः यत्र तादृशात् भ्रमिक्रमात् हेतोः इति वा॥ ५३॥

तारेति।—निशा रात्रिः, असिते श्यामे, व्योम्नि गगने, व्योमवत् कस्याञ्चित् कज्जलादिलिप्तश्यामलपट्टिकायामिति भावः, कठिन्या शुभ्रखटिकया, ताराऽक्षरैः शुभ्रैः अक्षरैः इव नक्षत्ररूपैः अक्षरैः, यां तमःप्रशस्तिम् अन्धकारस्य प्रशंसा-वर्णनात्मकश्लोकादिलिपिम्, अलिखत् लिखितवती, इवेति शेषः, ताराक्षरैः उपलक्षिता तमःप्रशस्तिं रात्रिः कठिन्या अलिखदिति वा, तां तमःप्रशस्तिं, विलुप्य प्रोञ्छ्य, करेणेति शेषः, अल्पयतः स्वल्पां कुर्वतः, परिमेय-ताराक्षरं कुर्वतः इति यावत्, हिमांशोः चन्द्रस्य, अरुणोऽपि रक्तवर्णोऽपि, उदयकालिके इति भावः, करे किरणे, अन्यत्र—पाणौ, पाण्डुरिमा धवलता, जातः उत्पन्नः, करेण धवलखटिकालिखिताक्षरप्रोञ्छनेन करस्यापि तत्खटिकाचूर्णसंसर्गजनितधावल्यादिति भावः। प्रवृद्धकिरणे हि चन्द्रे नक्षत्राणि अल्पानि दृश्यन्ते इति, तथा खटिकालिखिताक्षराणि मार्जयतश्चारक्तोऽपि करः खटिका-

सितो यदाऽत्रैष तदाऽन्यदेशे चकास्ति रज्यच्छविरुज्जिहानः।
तदित्थमेतस्य निधेः कलानां को वेद वा रागविरागतत्त्वम्? ॥५५॥

सङ्गात् धवलो भवतीति च दृश्यते। तमसि नक्षत्राणि बहूनि उज्ज्वलतराणि च दृष्टानि, अधुना तु चन्द्रे उदिते तत्प्रभया तानि अल्पानि निष्प्रभाणि च जातानि, रात्रेः किञ्चिदाधिक्यात् चन्द्रश्च धवलो जातः इति तात्पर्य्यम् ॥ ५४ ॥

सित इति।—हे प्रिये! एषः चन्द्रः, यदा यस्मिन् काले, अत्र अस्मिन् प्रदेशे, सितः धवलः, सन्ध्यारागापगमेन रात्रेराधिक्यादिति भावः, चकास्ति दीप्यते, तदा तस्मिन् एव काले, अन्यदेशे देशान्तरे, इतः सुदूरपश्चिमप्रदेशे इत्यर्थः, उज्जिहानः उदयन्, रज्यच्छविः रक्तकान्तिः, चकास्ति इत्यनेनान्वयः, तत्र तदैव प्रथमोदयात् उदयकालिकारुण्येनेति भावः, एवम् अत्र उदयन् रक्तः इतः पूर्वदेशे च श्वेतः इत्यपि सामर्थ्यात् लभ्यं, तत् तस्मात्, एतद्देशस्थं प्रति इदानीं सितो दृश्यते देशान्तरस्थं प्रति तु इदानीमेव उदयन् रक्तो दृश्यते यस्मात् तस्मादित्यर्थः, एतस्य दृश्यमानस्य, कलाना निधेः पूर्णस्य चन्द्रस्य, चतुःषष्टिकलाविद्याभिज्ञस्य जनस्य च, रागविरागयोः लोहितत्व-शुभ्रत्वयोः अनुरागाननुरागयोश्च, इत्थम् ईदृशम्, उक्तप्रकारमित्यर्थः, तत्त्वं याथार्थ्यं, को वा का नाम जनः, वेद? जानाति? अपि तु कोऽपि निश्चेतुं न शक्नोतीत्यर्थः। उदयास्तमययोरतात्त्विकत्वात् व्यवहितस्य यत्र यदा प्रथमदर्शनं तदा तत्रोदयः इति दूरस्थस्य रक्तत्वप्रत्ययः, क्रमसामीप्यात् तु धावल्यप्रत्ययः इति तत्त्वम्। चतुःषष्टिकलाभिज्ञस्यापि अनुरागाननुरागयोः याथार्थ्यं कुत्र अनुरक्तः कुत्र वा नेति कोऽपि न ज्ञातुं शक्नोति इति च तत्त्वम् ॥ ५५ ॥

काश्मीरजै रश्मिभिरौपसन्ध्यैर्मृष्टं धृतध्वान्तकुरङ्गनाभि ।
चन्द्रांशुना चन्दनचारुणाऽङ्गं क्रमात् समालम्भि दिगङ्गनाभिः
॥ ५६ ॥

विधिस्तुषारर्त्तुदिनानि कर्त्तं कर्त्तं विनिर्माति तदन्तभित्तैः ।
ज्योत्स्नीर्न चेत् तत्प्रतिमा इमा वा कथं कथं तानि च
वामनानि ? ॥ ५७ ॥

काश्मीरजैरिति ।—दिग्भिः दिग्रूपाभिरेव, अङ्गनाभिः कामिनीभिः, सन्ध्यायाः समीपम् उपसन्ध्यं तत्र जातैः औपसन्ध्यैः आसन्नसन्ध्याकालत्वात् अरुणैरित्यर्थः, [ सामीप्येऽव्ययीभावात् भवार्थे अण् ] रश्मिभिः किरणैः, किरणरूपैरित्यर्थः, काश्मीरजैः कुङ्कुमैः, मृष्टं लिप्तं, पूर्वं कृतोद्वर्त्तनमित्यर्थः, ततः सन्ध्यायाम् अपगतायां धृता गृहीता, गात्रे लिप्ता इत्यर्थः, ध्वान्तम् अन्धकारः, ध्वान्तरूपा इत्यर्थः, कुरङ्गनाभिः मृगनाभिः, कस्तूरीत्यर्थः यत्र तादृशम्, अङ्गं शरीरं, क्रमात् क्रमशः, कस्तूरीलेपनानन्तरमित्यर्थः, चन्द्रांशुना इन्दुकिरणेन, इन्दुकिरणरूपेणेत्यर्थः, चन्दनेषु श्वेतचन्दनेषु मध्ये, यत् चारु उत्तमं चन्दनं तेन, समालम्भि अलेपि । अन्याः अपि अङ्गनाः कुङ्कुमादिक्रमेण अङ्गम् अनुलिम्पन्ति । चन्दनधवलैः चन्द्रकरैः सर्वाः अपि दिशः वितमस्काः कृताः इति भावः ॥ ५६ ॥

विधिरिति ।—विधिः स्रष्टा, तुषारर्त्तोः शिशिरर्त्तोः, दिनानि दिवसान्, कर्त्तं कर्त्तं छित्त्वा छित्त्वा, [ कृती छेदने इत्यस्मादाभीक्ष्ण्ये णमुल् द्विर्वचनञ्च ] तुषारकालिकदिनानामत्यल्पत्वादिति भावः, तेषां दिनानाम्, अन्तभित्तैः मध्यवर्त्तिभिः सारभूतैः शकलैः, मध्यस्थितैः शुभ्रैरंशैरित्यर्थः, ( "भित्तं शकलखण्डे वा पुंस्यर्द्धोऽर्द्धं समेंऽशके" इत्यमरः )

इत्युक्तिशेषे स वचं बभाषे सूक्तिश्रुतासक्तिनिवद्धमौनाम्।
मुखाभ्यसूयानुशयादिवेन्दौ कथं तव प्रेयसि! मूकमुद्रा? ॥५८॥

अन्तर्भिन्नैरिति पाठे—अन्तः मध्यस्थितैः, भिन्नैः दारितैः, कर्त्तितैरित्यर्थः, अशैरिति शेषः, ("दारिते भिन्नभेदितौ" इत्यमरः) ज्योत्स्नीः चन्द्रिकामयीः निशाः, [ज्योतिर्विद्यते अस्याः इत्यर्थे "ज्योत्स्नातमिस्रा—" इति निपातितात् ज्योत्स्नाशब्दादण्-प्रकरणे "ज्योत्स्नादिभ्यः उपसङ्ख्यानम्" इत्यस्त्यर्थे अणि ङीप्] ("रात्रिर्ज्योत्स्नी चन्द्रिकयाऽन्विता" इत्यमरः) विनिर्माति विरचयति, न चेत् एवं न अङ्गीक्रियते यदि, तदा इमाः ज्योत्स्नाः रात्रयः, तत्प्रतिमाः तैः दिनैः तुल्याः, शीतलत्वप्रकाशवत्त्वाभ्यां तुषारर्त्तुदिनसदृश्यः इत्यर्थः, कथं केन हेतुना, जाताः? इति शेषः, कथं वा केन वा हेतुना, तानि च तुषारर्त्तुदिनानि च, वामनानि ह्रस्वानि, स्वल्पपरिमाणानि इत्यर्थः, जातानि? इति शेषः, दिन-वामनता-रात्रिदीर्घताऽन्यथानुपपत्तेः शिशिरर्त्तौ दिनापेक्षया च ज्योत्स्नीनाम् अतितमां शीतलत्वप्रकाशवत्त्वानुपपत्तेश्च शिशिरर्त्तुदिनानि छित्त्वैव तत्सारभूतैश्च शकलैः चन्द्रिकान्विताः रात्रयो ब्रह्मणा निर्मिताः, नो चेत् शिशिरर्त्तुदिनानामल्पत्वं ज्योत्स्नाया रात्रेश्च शीतत्व-प्रकाशवत्त्वं कथं सम्भाव्यते? इति भावः। चन्द्रचन्द्रिकया रात्रिः शीतला धवलतरा च कृता इति तात्पर्य्यम् ॥ ५७ ॥

इतीति—सः नलः, इति उक्तरूपायाः, उक्तेः चन्द्र-वर्णनायाः, शेषे अवसाने, सूक्तीनां प्रसादादिगुणयुक्तानां प्रियोक्तिशोभनवचनानां, श्रुते श्रवणे विषये, आसक्त्या अनु-रागातिशयात् तदेकताननतया, निबद्धम् अवलम्बितं, मौनं

शृङ्गारभृङ्गारसुधाकरेण वर्णस्रजाऽनूपय कर्णकूपौ।
त्वच्चारुवाणीरसवेणितीरे तृणानुकारः खलु कोपकारः॥ ५९॥

तूष्णीम्भावः यया तादृशीं तूष्णीम्भावम् आश्रितां, वधूं भार्य्यां भैमीं, बभाषे कथयामास। किं बभाषे? इत्याह, हे प्रेयसि! मुखस्य वदनस्य, तवैवेति शेषः, या अभ्यसूया स्पर्द्धा, चन्द्रकृता तव वदनानुकरणरूपप्रतियोगितेत्यर्थः, तया अनुशयादिव दीर्घद्वेषादिव, चन्द्रं प्रति विरागादिवेत्यर्थः, ("अथानुशयो दीर्घद्वेषानुतापयोः" इत्यमरः) इन्दौ चन्द्रे विषये, तव भवत्याः, इयम् एषा, मूकस्य वचनाक्षमस्य इव, मुद्रा वाङ्निरोधरीतिः, का? किम्? इत्यर्थः; त्वमपि किमिति न चन्द्रं वर्णयसि? इति भावः। स्वस्पर्द्धाकारिणः हि वर्णने अन्येन क्रियमाणे अन्योऽपि कोपात् तूष्णीं तिष्ठति नानुमोदते स्वयञ्च न तं वर्णयति, तथा त्वन्मुखस्पर्द्धाकरणे सञ्जातकोपादिवेन्दुं न वर्णयसि नानुमोदसे च किमिति प्रश्नः। त्वमपि किञ्चित् वर्णय इति वक्तुराशयः। नलसूक्तिश्रवणादरकृतं मौनं कोपादिवेत्युत्प्रेक्षितम्॥ ५८॥

शृङ्गारेति।—हे प्रिये! शृङ्गारस्य उज्ज्वलरसस्य, भृङ्गारः स्वनामख्यात आधारविशेषः, तद्रूपञ्च तत् सुधायाः पीयूषस्य, आकरः खनिः, तद्रूपञ्चेति तेन, तादृशेन निजमुखेनेत्यर्थः, उच्चारितयेति शेषः, वर्णस्रजा अक्षरमालिकया, चन्द्रवर्णनात्मिकया पीयूषप्रवाहतुल्यया स्वमुखोच्चारितया कर्णरसायनवर्णपरम्परया इत्यर्थः, कर्णकूपौ श्रवणविवरौ, ममेति शेषः, अनूपय अनूपे जलपूर्णौ, जलपूर्णाविव पीयूषपूर्णौ कुरु, त्वमिति शेषः, [अनूपशब्दात् "तत्करोति—" इति णिचि लोट्। "जलप्रायमनूपं स्यात्" इत्यमरः] वर्णस्रजः सरसत्वात् कर्ण-

अत्रैव वाणीमधुना तवापि श्रोतुं समीहे मधुनः सनाभिम् ।
इति प्रियप्रेरितया तयाऽथ प्रस्तोतुमारम्भि शशिप्रशस्तिः ॥६०॥
पूरं विधुर्वर्द्धयितुं पयोधेः शङ्केऽयमेणाङ्कमणिं कियन्ति ।

---

कूपयोः जलपूर्णत्वकरणं युक्तम्; अथ च शृङ्गारसम्बन्धिसुवर्ण-भृङ्गाररूपस्य भवन्मुखस्य सम्बन्धि यत् पीयूषं तस्य आकरेण खनिभूतया सरसया वर्णस्रजा कर्णकूपौ अनूपय। ननु किमर्थं ते मद्गानश्रवणे एष आग्रहः? इत्याह, कोषकारः इक्षु-विशेष, ("कोषकाराद्या इक्षुविशेषाः" इति क्षीरस्वामी) तव भवत्याः, चारुतायाः वक्रोक्त्यादिरूपायाः श्रवणतर्पकवाचः, ये रसाः शृङ्गारादयः, ते एव रसाः जलानि,"वेणितीरे" इति शब्द-सामर्थ्यात् जलत्वरूपणं बोध्यम्; तेषां वेणिः प्रवाह ,तस्याः तीरे तटदेशे, यत् तृणं समुत्पन्नदर्भादिकं, तस्य अनुकारः तत्सदृशः, खलु निश्चये, अतिस्वादुरसोऽपि इक्षुविशेषो यतः त्वदीयसरस-वाणीरसवेणितीरतृणम् अनुकरोति एव, न तु सर्वथा तत्समो जातः, अत एव त्वद्वाणीश्रवणे ममायमाग्रहः इति निष्कर्षः। चन्द्रं वर्णयेति भावः ॥ ५९ ॥

अत्रैवेति।—हे प्रिये ! अधुना सम्प्रति, अत्रैव चन्द्रवर्णन-विषये एव, मधुनः क्षौद्रस्य, सनाभिं तुल्यां, तवापि भवत्या अपि, वाणीं वाचं, चन्द्रवर्णनामित्यर्थः, श्रोतुम् आकर्णयितुं, समीहे इच्छामि, अहमिति शेषः, इति इत्थं, प्रियेण नलेन, प्रेरितया चालितया, अनुप्राणितयेत्यर्थः, तया भैम्या, अथ नलप्रेरणानन्तरं, शशिनः चन्द्रस्य, प्रशस्तिः माहात्म्यं, प्रस्तोतुं कीर्त्तयितुम्, आरम्भि आरब्धा ॥ ६० ॥

दमयन्तीकृतं चन्द्रवर्णनमारभते, पूरमिति।—हे प्रिय ! अयम् एषः, विधुः चन्द्रः, पयोधेः समुद्रस्य, पूरं जलप्रवाहं,

पयांसि दोग्धि प्रियविप्रयोगात् सशोककोकीनयने कियन्ति
॥६१॥

ज्योत्स्नामयं रात्रिकलिन्दकन्यापूरानुकारेऽपसृतेऽन्धकारे ।
परिस्फुरन्निर्मलदीप्तिदीपं व्यक्तायते सैकतमन्तरीपम् ॥ ६२ ॥

---

वर्द्धयितुं वृद्धिं कारयितुम्, आगन्तुकजलान्तरेणेति भावः, एणाङ्कमणिं चन्द्रकान्तमणिं, कियन्ति कियत्परिमाणानि, तथा प्रियस्य भर्त्तुः चक्रवाकस्य, विप्रयोगात् विरहात्, रात्रौ चक्रवाकदम्पत्योः विरहस्य अवश्यम्भावित्वादिति भावः, सशोकायाः समन्युकायाः, शोकविह्वलाया इत्यर्थः, कोक्याः चक्रवाक्याः, नयने नेत्रे अपि, कियन्ति कियत्परिमाणानि, पयांसि जलानि, दोग्धि दोहनं करोति, तस्मात् ताभ्याञ्च सकाशात् दोहनं कृत्वा गृह्णातीत्यर्थः,[ दुहिर्द्विकर्मा ] शङ्के इति मन्ये, अहमिति शेषः, नो चेत् समुद्रपूरवर्द्धनार्थमियन्ति जलानि विधुना कुतो लभ्यन्ते ? इति भावः। उदिते चन्द्रे सागरपूरो वृद्धिं प्राप्नोति, चन्द्रकिरणसम्पर्कात् चन्द्रकान्ताः स्रवन्ति, चक्रवाकविच्छेदात् चक्रवाकी च भृशं रोदितीति भावः ॥६१॥

ज्योत्स्नेति ।—हे प्राणेश ! रात्रिरेव रजनिरेव, तामसी निशेवेति यावत्, कलिन्दकन्या यमुना, कृष्णवर्णसादृश्यादिति भावः, तस्याः पूरः जलप्रवाहः, अतिनीलवर्ण इति भावः, तदनुकारे तत्सदृशे, तद्वत् अतिकृष्णवर्णे इत्यर्थः, अन्धकारे तिमिरे, अपसृते अपगते सति, कालस्वभावेन उच्छ्वासह्रासात् जलप्रवाहे नदीगर्भे निपतिते, चन्द्रोदयेन ज्योत्स्नाप्रकाशात् अन्धकारे विनष्टे चेति भावः, परिस्फुरन्ती दीप्यमाना, निर्मला विशदा,दीप्तिः प्रभा यस्य तादृशः ; परिस्फुरन् प्रकाशमानश्चासौ, निर्मलदीप्तिः धवलद्युतिश्च तादृशः इति वा, चन्द्रः इत्यर्थः, स

हासत्विषैवाखिलकैरवाणां विश्वं विशङ्केऽजनि दुग्धमुग्धम् ।
यतो दिवा बद्धमुखेषु तेषु स्थितेऽपि चन्द्रे न तथा चकास्ति ॥६३॥

एव दीप: आलोकवर्त्ति: यत्र तादृशं, ज्योत्स्नामयं चन्द्रिकारूपं, सैकतं बालुकामयं, [ "सिकताशर्कराभ्याञ्च" इत्यस्यर्थेऽण् ] अन्तरीपं द्वीपं, रात्रियमुनाया: एव जलमध्यस्थितमव्यक्तं तटभागमित्यर्थ:, व्यक्तायते व्यक्तमिव भवति, स्फुटमिव प्रकटं दृश्यते इत्यर्थ: । [ व्यक्तमिव आचरतीत्यर्थे "कर्त्तु: क्यङ्" इति क्यङ् ] । पुराक्षरेऽस्फुटमपि इदानीं स्फुटी-भवतीति निष्कर्ष: । चन्द्रचन्द्रिकया सकलं धवलीकृतम् इति भाव: ॥ ६२ ॥

हासेति ।—अखिलकैरवाणां सकलकुमुदानां, हास: विकाश: एव हास: हास्यं, तस्य त्विषा एव दीप्त्या एव, न तु चन्द्रेणेति भाव:, विश्वं सकलं जगत्, दुग्धवत् चीरवत्, मुग्धं सुन्दरं, धावल्येन शैत्येन चेति भाव:, ( "मुग्ध: सुन्दरमूढयो:" इत्यमर: ) अजनि जातम्, इति विशङ्के विशेषेण मन्ये, अहमिति शेष:, यत: यस्मात् हेतो:, दिवा दिवसे, तेषु अखिलकैरवेषु, बद्धमुखेषु मुद्रिताननेषु, सङ्कुचिताग्रेषु च, अविकस्वरेषु च सत्सु इत्यर्थ:, चन्द्रे विधौ, स्थिते विद्यमाने अपि, आकाशे चन्द्रस्य वर्त्तमानत्वेऽपीत्यर्थ:, तथा तादृशं, रात्रौ इव शीतलतया धवल-तया चेत्यर्थ:, न चकास्ति न शोभते, विश्वमिति शेष:, सकल-कुमुदविकासाभावादिति भाव:, तस्मात् इदं जगत् कुमुद-हासत्विषा एव शीतलं धवलञ्च कृतं, न तु चन्द्रेण इति निष्कर्ष: । दिवा ताम्रांशुरविकरसम्पर्कात् न धावल्यं न वा शैत्यं प्रकाशते, इदानीं रात्र्यागमनात्तु कुमुदवत् दुग्धवच्च शीतला धवला च चन्द्रिका विराजते इत्याशय: ॥ ६३ ॥

मृत्युञ्जयस्यैष वसन् जटायां न क्षीयते तद्भयदूरमृत्युः।
न वर्द्धते च स्वसुधाससजीवस्रङ्मुण्डराहुद्भवभीरतीव ॥ ६४ ॥

मृत्युञ्जयस्येति।—मृत्युञ्जयस्य मृत्युं जितवतः शिवस्य, ["संज्ञायां भृतॄवृजि—" इति खश्। "अरुर्द्विष—"इति मुम्] जटायां लग्नकेशे, वसन् तिष्ठन्, एषः चन्द्रः, षोडशांशभूतः इति भावः, तस्मात् मृत्युञ्जयादेव सकाशात्, भयेन भीत्या, दूरः दूरे पलायितः, मृत्युः मरणहेतुः देवता यस्य सः तादृशः सन्, न क्षीयते न क्षीणोभवति, कलामात्रस्वरूपेणैव तत्र सदा वसन् ततोऽपि न्यूनपरिमाणो न भवतीत्यर्थः; अथ च न क्षीयते न म्रियते, मृत्युञ्जय-जटाजूटनिवासात् मृत्युना स्पृष्टुमपि न शक्यते तस्मान्न म्रियतेऽयमित्यर्थः। तर्हि तत्र वसन् वर्द्धते किं नेत्याशङ्क्याह —अतीव नितरां, स्वस्य आत्मनः, सुधया अमृतेन, आसाः प्राप्ताः, जीवाः जीवनानि यैः तानि तादृशानि, यानि स्रजः गलभूषणीभूतशिरःकपालमालायाः, मुण्डानि शिरःकपालानि, तानि एव राहवः स्वर्भानवः, राहोः सजीवमुण्डमात्रात्मक-त्वात् सैंहिकेयस्वरूपाः इत्यर्थः, तेभ्यः उद्भवा समुत्पन्ना, भीः भयं यस्य स तादृशः सन्, न वर्द्धते च न उपचितोऽपि भवति, सजीवमुण्डेषु बहवो राहव एवेते इति धिया भिया न वर्द्धते इत्यर्थः। भीतो हि सौख्याभावात् क्षीणतर एव भवतीति लोके बहुधा दृश्यते। यतः पूर्णस्य चन्द्रस्य राहोः सकाशात् भयम् अतः कारणात् भूयान्न क्षीयते न च वर्द्धते इत्येककल एव तिष्ठति शिवशिरसि चन्द्रः इति भावः। एतेन चन्द्रस्य षोड़शी कला तथा शिवशिरसि वर्त्तमानत्वात् अस्य माहात्म्य-मपि वर्णितम् ॥ ६४ ॥

त्विषं चकोराय सुधां सुराय कलामपि स्वावयवं हराय।
ददज्जयत्येष समस्तमस्य कल्पद्रुमभ्रातुरथाल्पमेतत् ॥ ६५ ॥
अङ्केणनाभिर्विषकृष्णकण्ठः सुधाऽऽमशुभ्रैः कटभस्मपाण्डुः।
अङ्कवपीन्दौर्निजमौलिधानात् मृडः कलामर्हति षोड़शीं न ॥ ६६॥

त्विषमिति।—एषः चन्द्रः,चकोराय स्वनामख्यात-ज्योत्स्ना-पायिविहङ्गविशेषाय, स्वावयवं निजांशभूतां, त्विषं प्रभां, चन्द्रिकामिति यावत्, तथा सुराय अमराय, अग्न्यादिदेवेभ्यः इति यावत्, [ चकोराय सुरायेति जात्येकवचनम् ] स्वावयवं सुधां पीयूषं, तथा हराय शङ्कराय, स्वावयवं कलामपि षोड़श-भागैकभागञ्च, ददत् वितरन् सन्, जयति सर्वोत्कर्षेण वर्त्तते, उक्तरूपेण सर्वस्ववितरणादेवेति भावः,अथ तथाऽपि, कल्पद्रुमस्य कल्पवृक्षस्य, भ्रातुः सोदरस्य, द्वयोरपि क्षीरसमुद्रोत्पन्नत्वात् इति भावः, अस्य चन्द्रस्य, एतत् चकोरादिभ्यः त्विड़ादिदानात् परोपकारकरणादिरूपमित्यर्थः, समस्तं सकलमनुष्ठानम्, अल्पमेव स्वल्पमेव, अपर्य्याप्तमेवेत्यर्थः, कल्पद्रुमभ्रातुः सर्वस्व-दानस्यैवौचित्यात् एतत् समस्तम् अतिचमत्कारि न भवति,यतः कल्पद्रुमः मनःकल्पितं सर्वमेव सर्वेभ्यो ददाति, अयन्तु न तथेत्यल्पमेवेति भावः ॥ ६५ ॥

अङ्केति।—विषकृष्णकण्ठः विषेण गरलभक्षणेन, कृष्णः नीलवर्णः, कण्ठः गलदेशो यस्य स तादृशः हलाहलपानेन नीलकण्ठः, तथा कटभस्मना कटस्य शवस्य, भस्मना भूत्या, चिताभस्मना, ( "शपथे च क्रियाकारे किलिञ्जशवयोः कट." इति त्रिकाण्डशेषः ) पाण्डुः शुभ्रं, कटभस्मपाण्डुः चिताभस्म-लेपनेन शुभ्रदेहः, मृड़ः शिवः, अङ्केणनाभेः अङ्कः लाञ्छनभूतः, एणः हरिणः, नाभौ मध्यभागे यस्य तादृशस्य, अथ च अङ्करूपा

कलङ्करूपा, अङ्के क्रोडे इति वा, एणनाभिः कस्तूरी यस्य तादृशस्य, तथा सुधाऽऽप्तशुद्धेः सुधया अमृतेन, आप्ता लब्धा, शुद्धिः धावल्यं पवित्रत्वञ्च येन तादृशस्य, इन्दोः चन्द्रस्य, षोडशीं कलाम् अमानाम्नीं नित्यकलाम्, अथ च षोड़शभागैकभागं, निजमौलौ स्वशिरसि, धानात् धारणात्, अर्हन् प्राप्नुवन्नपि, अथ च पूजयन् अपि, न अर्हति न प्राप्नोति, न पूजयति च, षोड़शीं कलामिति शेषः, इति विरोधः ; उत्कर्षविषये मृड़ः इन्दोः षोड़शीमपि कलां नार्हतीति तत्परिहारः ; परिहारपक्षे च हेतुः, जीवनान्तकं विषं मृड़स्य कण्ठे, जीवनदायिनो मृगनाभिश्च इन्दोरङ्के, तथा अशुद्धं शवभस्म मृडस्याङ्गलेपः, पवित्रममृतञ्च इन्दोरङ्गेष्विति । निजशिरसि धारणादेव तस्याः प्राप्तिः पूजा च सम्भावनीया, अतितरां पूज्यते स्वशिरसि धार्य्यते च । तथा च एतस्य षोड़शीं कलां मृड़ः प्राप्नुवन्, पूजयन्, अपि च तां न प्राप्नोतीति विरोधः, शिवस्य विषकृष्णकण्ठत्वात् चिताभस्मलेपनेन शुभ्रत्वाच्च मृगाङ्कशोभितस्य कस्तूरीभूषितस्य वा तथा अमृतधवलस्य चन्द्रस्य अल्पमपि साम्यं सः न प्राप्नोति इति विरोधपरिहारः । किञ्च चन्द्रात् अधिकः चेत् शिवोऽभविष्यत् तर्हि तदीयकलां मौलौ न अधारयिष्यत्, सा तु मौलौ धृता तेन, तस्माच्चन्द्र एव शिवादधिक इत्यर्थः । मृगनाभिसुधादिशुभस्य विषचिता-भस्माद्यशुभस्य च महदन्तरमिति भावः । षोडशीमपि कलां नार्हतीत्यनेन पूर्णचन्द्रं नार्हतीति किं वाच्यम् इत्यपि सूचितम् । हरस्य अपकर्षे विषं चिताभस्म च हेतुः । चन्द्रोत्कर्षे मृगमदः अमृतञ्च ॥ ६६ ॥

पुष्पेति ।—सितासितश्रीः सिता सर्वत्र शुभ्रवर्णा, असिता

स्मरारिणा मूर्द्धनि यद्धृतोऽपि तनोति तत्तौष्टिकपौष्टिकानि ॥६७॥
मृगस्य लोभात् खलु सिंहिकायाः सूनुर्मृगाङ्कं कवलीकरोति।
स्वस्यापि दानादमुमङ्कसुतं नोज्झत्यमुदा तेन च मुच्यतेऽसौ ॥६८॥

मध्यभागे कलङ्करूपकृष्णवर्णा च, श्रीः कान्तिर्यस्य स तादृशः उपान्तधवल-मध्यश्यामलकान्तिः, द्विजेन्द्रः चन्द्रः, पुष्पायुधस्य कामस्य, अर्द्धदग्धैः अर्द्धप्लुष्टैः, स्मररिपोस्तृतीयनयनानलेनेति भावः, अस्थिभिः कीकशैः, अस्थिसमूहद्वारेत्यर्थः, अघटि निर्मितः, इवेति ब्रह्मणा इति च शेषः; तत्र सितभागः अदग्धास्थिभागेन असितभागश्च दग्धास्थिभागेन निर्मित इति भावः; स्मरास्थिभिरिव निर्मितः इत्यत्र हेतुमाह—यत् यस्मात्, स्मरारिणा कामान्तकेन हरेण, मूर्द्धनि शिरसि, धृतः अपि स्थापितोऽपि, अथ च कृतसम्मानः अपि, तस्य पुष्पायुधस्य स्मरस्यैव, तौष्टिकं हर्षकरञ्च, तत् पौष्टिकम् अभिवर्द्धनञ्च तत् तानि तौष्टिक-पौष्टिकानि यूनां हर्षजनकावयवपुष्टीः, ["प्रयोजनम्" इति ठक्] तनोति विस्तारयति, विदधातीति यावत्, शुक्लपक्षे इति शेषः; कामारिणा पूज्यमानोऽपि कामहितमेव यस्मात् करोति, तस्मात् तदस्थिभिरिव घटितः इति मन्ये इत्यर्थः। एतादृक्कामोद्दीपकं किमपि नास्तीति भावः। अस्थिभिरिवेति प्रतीयमानोत्प्रेक्षा। अन्याश्रितोऽपि तदीयशत्रुहितं यः करोति स तदस्थिभिर्घटित इवेति लौकिकी उक्तिरत्र स्मर्त्तव्या ॥६७॥

मृगस्येति।—सिंहिकायाः तन्नाम्न्याः कश्यपभार्य्यायाः, सिंहभार्य्यायाश्च, सूनुः सुतः राहुः, सिंहश्च, मृगस्य हरिणस्य, अङ्कभूतस्य,तत्प्रदेशस्थस्य च क्रोडस्थस्य चेति वा भावः, लोभात् खलु लोलुपतायाः एव, ग्रासाभिलाषादेवेत्यर्थः, मृगाङ्कं चन्द्रं, मृगाः पशवः,अङ्कं चिह्नं यत्र तादृशं मृगावस्थितिप्रदेशमित्यर्थञ्च,

सुधाभुजो यत् परिपीय तुच्छमेतं वितन्वन्ति तदर्हमेव।
पुरा निपीयास्य पिताऽपि सिन्धुरकारि तुच्छः कलशोद्भवेन॥६९॥

मृगः अङ्के क्रोडे यस्य तादृशं क्रोडावस्थितमृगं जनमित्यर्थो वा, कवलीकरोति ग्रसते, आक्रम्य स्वाधीनं करोति इत्यर्थश्च, आक्रामति चेत्यर्थो वा; कथमन्यथा अकारणमेव तेजःस्वरूपं चन्द्रं ग्रसते इति भावः। अथ कवलीकृतश्चेत् तर्हि किमर्थं पुनर्मुञ्चतीत्यत आह—अङ्कसुप्तम् अङ्के क्रोड़े, मध्यावयवे इत्यर्थः, सुप्त सुप्तवत् लीनतया अवस्थितम, अथ च अङ्के उत्सङ्गे, सुप्त विश्वासात् सुखेन निद्रितम्, अमुं मृगं, स्वस्य आत्मनः, स्वदेहस्य चेत्यर्थः, दानात् समर्पणादपि, खण्डनाच्चापि, सिंहस्य दन्तैः स्वदेहस्य खण्डनादपीत्यर्थः, [ दो अवखण्डने इत्यस्मात् ल्युट् ] न औज्झत् न अत्यजत्, शरणागतरक्षणप्रवृत्तेरेवेति भावः, तेन च आत्मत्यागादपि शरणागतरक्षणप्रवृत्तिदर्शनेन हेतुना, मुदा हर्षेण, असौ मृगाङ्कः, मुच्यते त्यज्यते इव, राहुणेति शेषः। अन्योऽपि शरणागतं मृगं जिघांसोः सिंहात् रक्षितुम् आत्मानमपि ददानो हि तेन पुरुषेण सिंहात् मुच्यते, अत एव स्वस्यापि दानात् अङ्कसुप्तम् अमुं यतो न अमुञ्चत् तेन हेतुना अयं राहुणा विमुच्यते इति निष्कर्षः॥ ६८॥

सुधेति।—सुधाभुजः देवाः, एतं चन्द्रं, परिपीय साकल्येन पीत्वा, कृष्णपक्षे क्रमश इति भावः, यत् तुच्छं रिक्तं, वितन्वति कुर्वन्ति, अमावस्यायामिति भावः, तत् अर्हम् उचितमेव, यतः पुरा पूर्वकाले, अस्य चन्द्रस्य, पिता जनकः, सिन्धुरपि समुद्रोऽपि, कलशोद्भवेन कुम्भसम्भवेन मुनिना अगस्त्येन, निपीय निःशेषेण पीत्वा, तुच्छः रिक्तः, अकारि कृतः, तस्मात् परकर्तृकपानेनास्य तुच्छत्वं कुलक्रमागतम् इति

चतुर्दिगन्तीं परिपूरयन्ती ज्योत्स्नेव कृत्स्ना सुरसिन्धुबन्धुः ।
क्षीरोदपूरोदरवासनाशवैरस्यमेतस्य निरस्यतीयम् ॥ ७० ॥
पुत्री विधोस्ताण्डविकाऽस्तु सिन्धोराख्या चकोरस्य दृशोर्वयस्या ।
तथाऽपि सेयं कुमुदस्य काऽपि ब्रवीति नामैव हि कौमुदीति ॥ ७१ ॥

---

भावः । एतस्य पूर्वेऽपि परोपकारनिरताः, तस्मात् अयमपि तथैव इति तात्पर्य्यम् । कलशात् उत्पन्नेनापि सागरस्य पानम् इत्याश्चर्य्यम् ॥ ६९ ॥

चतुरिति ।—चतुर्णां दिगन्तानां समाहारः तां चतुर्दिगन्तीं चतुर्दिक्प्रान्तान्,[ समाहारे द्विगोर्ङीप् ] परिपूरयन्ती सामस्त्येन व्याप्नुवती, एकत्र—आलोकविस्तारेण, अन्यत्र—जलविस्तारेणेति भावः, तथा सुरसिन्धोः मन्दाकिन्याः, बन्धुः सदृशी, श्वैत्यात् इति भावः, ज्योत्स्नायां क्षीरोदबुद्ध्युत्पादात् क्षीरोदस्य च सरित्पतित्वात् पतित्वेन केलिसहचरश्च, कृत्स्ना समग्रा, इयं परिदृश्यमाना एषा, ज्योत्स्नेव कौमुदी एव, एतस्य चन्द्रस्य, क्षीरोदस्य क्षीरसागरस्य, पितुरिति भावः, पूरोदरे प्रवाहमध्ये, यो वासः स्थितिः, तस्य नाशात् वियोगात्, बहुकालं यावत् आकाशे अवस्थानेन क्षीरोदवासपरित्यागात् हेतोरित्यर्थः,वैरस्यं दौर्मनस्यं, क्षीरसागरविरहजनितं दुःखमित्यर्थः, निरस्यति दूरीकरोति, असौ चन्द्रः चन्द्रिकायामेव क्षीरसागरबुद्ध्या पितृवियोगदुःखं परित्यजति इत्यर्थः । सकलदिगन्तव्यापिधवलचन्द्रिकामध्यवर्त्ती चन्द्रः क्षीरसागरमध्यस्थः इव शोभते इति भावः । गङ्गावत् दुग्धवच्च इयं कौमुदी इति तात्पर्य्यम् ॥ ७० ॥

पुत्रीति ।—सा अतीव रम्यदर्शना, इयम् एषा ज्योत्स्ना, विधोः चन्द्रस्य, पुत्री तनया, चन्द्रोदयेन तस्या उत्पन्नत्वादिति भावः, अस्तु भवतु, सिन्धोः समुद्रस्य, ताण्डविका नृत्यकारिका,

ज्योत्स्नापयःक्ष्मातटवास्तुवस्तुच्छायाच्छलच्छिद्रधरा धरायाम्।
शुभ्रांशुशुभ्रांशकराः कलङ्कनीलप्रभामिश्रविभा विभान्ति ॥७२॥

पौत्रीत्वेन आनन्दवर्द्धनादिति भावः, [ अर्शाद्यजन्तान्मतुबन्ताद्वा ताण्डवशब्दात् "तत्करोति—" इति ण्यन्तात् ठक् ] अस्तु, चन्द्रिकया हि सिन्धुः उल्लसति, यतः सा तस्य नप्त्री भवतीति भावः, यद्वा—इयं विधोः पुत्री सिन्धोः ताण्डविका अस्तु, तथा चकोरस्य तदाख्यचन्द्रिकापायिपक्षिविशेषस्य, आश्या पेया, [ "इक् कृष्यादिभ्यः" इति इकि अशिमर्हतीति दण्डादित्वात् यत्। "आस्या" इति च पाठः ] अस्तु, दृशोः नयनयोः, वयस्या सखी, सकललोकलोचनस्य हर्षोत्पादकतया इति भावः, अस्तु, तथाऽपि कुमुदस्य कैरवस्य, काऽपि अनिर्वचनीया, अनिर्वचनीयानन्ददायिनीत्यर्थः, भवतीति शेषः, पूर्वनिर्दिष्टसर्वापेक्षया कुमुदस्यैव निरतिशयानन्दकारित्वात् केनापि अनिर्वचनीयेन सम्बन्धेन सम्बन्धिनी भवतीति मन्ये इत्यर्थः ; हि यस्मात्, कौमुदी कुमुदसम्बन्धिनी, इति एवं, नाम संज्ञा एव, [ कर्त्तृ ] ब्रवीति कथयति, सर्वेषां तत्र तत्तत्सम्बन्धसम्भवेऽपि कुमुदानाम् इयं"तस्येदमिति"सम्बन्धेऽणि कौमुदीति यौगिकार्थेनैव कुमुदानामेव प्रीत्यतिशयजननात् कमपि विशिष्टं सम्बन्धं स्पष्टं सूचयति इत्यर्थः। कौमुदीति नामैव हि स्पष्टं ब्रवीतीति च। चन्द्रिकया सर्वेषामपि आनन्दः कृतः, कुमुदानान्तु विशेषतः इति भावः। अत्र कार्य्येण कारणानुमानम् ॥ ७१ ॥

ज्योत्स्नेति।—ज्योत्स्ना कौमुदी एव, पयः दुग्धं यस्मिन् तादृशं, यत् क्ष्मातटं धरातलं, दुग्धधवलचन्द्रिकाधवलीकृतभूतलमित्यर्थः, तदेव वास्तु वसतिगृहं येषां तानि तादृशानि, वस्तूनि द्रव्याणि, अङ्गुलीतुल्यसूक्ष्मनलाख्यवृक्षादिपदार्थाः इति

कियान् यथाऽनेन वियद्विभागस्तमोनिरासाद्विशदीकृतोऽयम् ।
अद्भिस्तथा लावणसैन्धवीभिरुद्भासिताभिः क्षितिरप्यकारि ॥७३॥

यावत्, तेषां छाया प्रतिबिम्बमेव, छलं व्याजः येषां तादृशानि, छिद्राणि प्रकाशेन रिक्तत्वात् बिलानि, पदार्थप्रतिच्छायारूपाणि इति यावत्, अन्यत्र—अङ्गुलीरन्ध्राणीत्यर्थः, तानि धरन्ति गृह्णन्तीति तादृशाः, इवेति शेष. कलङ्कस्य मृगरूपस्य अङ्कस्य, नीलीभिः कृष्णवर्णाभिः, प्रभाभिः कान्तिभिः, मिश्रा मिलिता, विभा कान्तिः येषा ते तादृशाः कलङ्कनीलकान्तिच्छुरिताः, अन्यत्र—कलङ्कवत् चन्द्रस्थमृगरूपाङ्कवत्, यः नीलः नीलकान्तमणिः, तत्खचितमङ्गुरीयकमिति यावत्, तस्य प्रभाभिः दीप्तिभिः, मिश्रा एकीभूता, विभा कान्तिर्येषा ते तादृशाः, शुभ्रांशोः चन्द्रस्य, शुभ्रांशा धवलभागाश्च, ते कराः किरणाश्च, अन्यत्र—हस्ताश्च, धरायां भूम्या, विभान्ति शोभन्ते, चन्द्रिकाधवलिताः पदार्थाः चन्द्ररश्मयः एव, वृक्षादिप्रतिच्छायाः चन्द्रकलङ्कनीलरश्मयः एवेति, धरायामपि निपतिताः चन्द्रकिरणाः नीलधवलाः एव शोभन्ते इत्यर्थः । अन्यस्य कराः हस्ताः कलङ्कवत् नीलस्य नीलमणेः प्रभया मिश्रकान्तयः नीलमणियुक्ताङ्गुलीयकप्रभामिश्राः विभान्ति । "शुभ्रांशुशुभ्राशु" इति पाठेऽपि "अंशुर्लेशे रवे रश्मौ" इत्यभिधानात् अंशुशब्दस्य लेशवाचित्वात् सः एव अर्थः । ज्योत्स्ना एव पयः जलं तस्य क्ष्मा भूमिः तस्याः तटं तदेव वास्तु निवासस्थानं येषां तेषां वस्तूनां छायाव्याजेन छिद्राणि धरन्ति इति वा ॥ ७२ ॥

कियानिति ।—अनेन चन्द्रेण, उदितमात्रेणेति भावः, तमोनिरासात् अन्धकारदूरीकरणात् हेतोः, कियान् किञ्चिन्मात्रः, अयम् एषः, पूर्वदिक्स्थित इत्यर्थः, वियद्विभागः

गुणौ पयोधेर्निजकारणस्य न ह्रासवृद्धी कथमेतु चन्द्रः ?
चिरेण सोऽयं भजते तु यत् ते न नित्यमम्भोधिरिवात्र चित्रम्
॥ ७४ ॥

---

आकाशदेशः, यथा यादृक्, विशदीकृतः शुभ्रीकृतः, तथा तादृगेव, उल्लासिताभिः उच्छ्वसिताभिः, चन्द्रकिरणैः वृद्धिं प्रापिताभिरित्यर्थः, लावणसैन्धवीभिः लवणोदधिसम्बन्धिनीभिः, [लवणसिन्धोः इमाः "तस्येदम्" इत्यणि "हृद्भग—"इति उभयपदवृद्धिः] अद्भिः जलैः, कृष्णवर्णैरिति भावः, कियान् अयं वियद्विभागः पश्चिमाकाशदेश इति यावत्, शितिः श्यामः अपि, अकारि कृत इव । अप्रौढप्रभे चन्द्रे पूर्वाकाशदेशः तिमिरनिरासात् धवलो भवति, ततो निरस्तस्य च तमसः प्रतीच्यां घनीभूतत्वात् पश्चिमाकाशदेशः श्यामलो भवतीति तत्र एवम् उच्छ्वसितनीलवर्णसमुद्रोदककृतत्वोत्प्रेक्षा । समुद्रजलञ्च नीलं, पूर्वाकाशदेशः एव नीलैः समुद्रजलैः पुनर्नीलोऽपि अकारि इति वा ॥ ७३ ॥

गुणाविति ।—चन्द्रः विधुः, निजकारणस्य स्वोत्पत्तिस्थानस्य, जनकस्येति यावत्, पयोधेः सागरस्य, ह्रासवृद्धी ह्रासवृद्धिरूपौ, गुणौ धर्मौ, कथं केन हेतुना, न एतु ? न प्राप्नोतु ? अपि तु कार्य्यगुणानां कारणगुणपूर्वकत्वनियमात् अवश्यमेव चन्द्रः अपचयोपचयौ एत्वेवेत्यर्थः, अत्र तु न किञ्चिदपि चित्रम् इति भावः ; तर्हि कुत्र चित्रमित्याशङ्क्याह—सः पूर्वोक्तरूपः ह्रासवृद्धिभाक्, अयम् एषः चन्द्रः, यत् चिरेण बहुना कालेन, पक्षान्तपरिमितेन समयेनेत्यर्थः, ते ह्रासवृद्धी, भजते प्राप्नोति, तु पुनः, अम्भोधिः इव समुद्र इव, नित्यं प्रत्यहं, न, भजते इति शेषः, अत्र अस्मिन् विषये, चित्रम् आश्चर्य्यम् । समुद्रः यथा

आदर्शदृश्यत्वमपि श्रितोऽयमादर्शदृश्यां न बिभर्त्ति मूर्त्तिम्।
त्रिनेत्रभूरप्ययमत्रिनेत्रादुत्पादमासादयति स्म चित्रम्॥ ७५॥

---

हानि-वृद्धी भजते, चन्द्रः तत्पुत्रोऽपि तथा न इत्येवाश्चर्य्यं, यतः कारणगुणस्य कार्य्यसञ्चारनियमेन चन्द्रस्यापि समुद्रवत् नित्यहानि-वृद्धिप्राप्तेरौचित्यात् इति भावः॥ ७४॥

आदर्शेति।—अयं चन्द्रः, आदर्शवत् दर्पणवत्, दृश्यत्वं स्वच्छत्व रमणीयत्वादिगुणेन दर्शनीयत्वं, श्रितोऽपि भजमानः सन्नपि, आदर्शदृश्याम् आदर्शे दर्शनार्हां, मूर्त्तिं रूपं, न बिभर्त्ति न धारयति, इति विरोधात् चित्रम् आश्चर्य्यम्; यो हि आदर्शवत् दृश्यो भवति, सः एव आदर्शवत् दृश्यां मूर्त्तिं न बिभर्त्ति तद्वत् दृश्यो न भवतीति विरोधात् आश्चर्य्यम् इत्यर्थः; अथच दर्पणवत् दृश्यत्वं श्रितोऽपि आदर्शं दर्शम् अभिव्याप्य, दृश्यां दर्शनीयाम्, अमावास्यायां दर्शनयोग्यामित्यर्थः, मूर्त्तिं न बिभर्त्ति, इदानीं पूर्णत्वेन दृश्यमानोऽपि दर्शे लेशेनापि न दृश्यते इति, यद्वा—आ इति स्मरणार्थकमव्ययम् असमस्तपदम्, एवञ्च आ स्मरामीत्यर्थः, दर्शे अमावस्यायां, दृश्यां मूर्त्तिं न बिभर्त्ति, सूर्य्या चन्द्रमसोरुपर्य्यधोभावेन एकराशिस्थानात् सूर्य्यप्रभया चन्द्रस्य तिरोहितत्वादिति वा विरोधपरिहारः। दर्पणवत् दृश्यत्वं श्रितोऽपि आदर्शं दर्शं मर्य्यादीकृत्य कृष्णचतुर्दशीम् अभिव्याप्य दृश्यां मूर्त्तिं न बिभर्त्ति? अपि तु तावत्पर्य्यन्तं दृश्यो भवत्येव इति वा। तथा अयं चन्द्र, त्रिनेत्रात् भवति यः तादृशः त्रिनेत्रभूः त्रिनेत्रात् उत्पन्नोऽपि सन्, न त्रिनेत्रः अत्रिनेत्रः तस्मात् त्रिनेत्रव्यतिरिक्तात्, उत्पादम् उत्पत्तिम्, आसादयति स्म प्राप, इत्यपि विरोधात् चित्रम् आश्चर्य्यं, त्रिनेत्रात् उत्पन्नो-

इज्येव देवव्रजभोज्यऋद्धिः शुद्धा सुधादीधितिमण्डलीयम्।
हिंसां यथा सैव तथाऽङ्कमेषा कलङ्कमेकं मलिनं बिभर्त्ति॥ ७६॥

ऽपि त्रिनेत्रात् उत्पन्नो न भवतीति आश्चर्य्यम् इत्यर्थः, त्रिनेत्रादुत्पन्नोऽपि अत्रेः नेत्रात् उत्पत्तिम् आप इत्येतदपि विरुद्धम्, अथ च त्रिनेत्रः त्रिलोचनः शिवः, भूः वसतिस्थानं यस्य तादृशः, तथा अत्रेः अत्रिमुनेः, नेत्रात् लोचनात्, उत्पादम् आसादयति स्म इति विरोधपरिहारः। अनेन चन्द्रस्य सहजसौन्दर्य्यम्, आश्चर्य्यमाहात्म्यं, कुलस्य माहात्म्यञ्च वर्णितम्। चन्द्रस्य अत्रिनेत्रसमुद्भवत्वं पुराणप्रसिद्धम्॥ ७५॥

इज्येति।—इज्या इव अश्वमेधादि यागः इव, [“व्रजयजोः” इति क्यप्] देवानाम् अमराणां, व्रजैः समूहैः, भोज्या पेया, ऋद्धिः समृद्धिः, अमृतरूपसम्पदित्यर्थः, हविःसम्पदित्यर्थश्च यस्याः सा तादृशी, तथा शुद्धा धवला पवित्रा च, इयं पुरतो दृश्यमाना एषा, सुधादीधितेः अमृतकरस्य चन्द्रस्य, मण्डली बिम्बं, शोभते इति शेषः; इज्या अपि देवव्रजभोज्यचरुपुरोडाशादिसमृद्धियुक्ता पवित्रा च भवति; किञ्च, सा इज्या, पूर्वोक्त गुणविशिष्टा सती अपि इति भावः, यथा यादृक्, हिंसामेव पशुहिंसात्मकमेव, एकम् एकमात्रं, मलिनं पातकहेतुभूततया गर्हितमित्यर्थः, अङ्कं कर्मसाधनीभूतमंशविशेषं, बिभर्त्ति धारयति, तथा तादृक्, एषा सुधादीधितिमण्डली अपि, कलङ्कं मृगलाञ्छनरूपम्, एकम् एकमात्रमेव, मलिनं मलाक्तं, कृष्णवर्णमित्यर्थः, अङ्कम् अवयवं, मध्यदेशे मृगरूपकृष्णवर्णचिह्नावस्थानादिति भावः, बिभर्त्ति, सर्वलोकान्नहेतुभूते परमपवित्रे च यागे यथा हिंसामात्रमेव मालिन्यं, तथा परोपकारशीलायाः सर्वात्मना शुद्धायाः अपि चन्द्रमण्डल्या दैवात् एकमङ्कं मलिनं

एकः पिपासुः प्रवहानिलस्य च्युतो रथाद्वाहनरङ्कुरेषः।
अस्त्यम्बरेऽनम्बुनि लेलिहास्यः पिबन्नमुष्यामृतविन्दुवृन्दम् ॥७७॥

जातम् इत्यर्थः। मुधाऽङ्कमिति पाठे कलङ्करूपं मलिनमेकमङ्कं मुधा वृथैव बिभर्त्ति, शुद्धायाः मालिन्ययोगस्य अनौचित्यादिति भावः। शुद्धस्यापि श्रौतधर्मस्य साङ्ख्यैः दोषारोपणात् मालिन्यं मुधा एव। इज्येव सर्वलोकहितकरत्वात् पवित्रत्वाच्च इयं सर्वथैवादरणीया इति भावः ॥ ७६ ॥

एक इति।—पिपासुः तृष्णाक्रान्तः, अत एव प्रवहानिलस्य सप्तवायुस्कन्धमध्यवर्त्तिनः प्रवहाख्यस्य मृगवाहनस्य गगनचारिणः वायोः, रथात् स्यन्दनात्, च्युतः पतितः, पिपासानिवारणार्थं जलानुसन्धानायेति भावः, एषः चन्द्रमण्डले दृश्यमानः अयम्, एकः कश्चित्, वाहनरङ्कुः प्रवहानिलस्य वाहनभूतः मृगः, इवेति शेषः, वायोर्मृगवाहनत्वप्रसिद्धेरिति भावः, अनम्बुनि निर्जले, अम्बरे आकाशे, अमुष्य चन्द्रस्य, अमृतविन्दुवृन्दं पीयूषकणासमूहं, पिबन् पानविषयीकुर्वन्, लेलिहास्यः लेलिह नितरां पौनःपुन्येन वा स्वादनकारि, आस्यं मुखं यस्य स तादृशः सन्,पुनः पुनः सृक्कण्यौ जिह्वया लिहन् सन् इत्यर्थः, [ नितरां पुनःपुनर्वा लेढि इत्यर्थे यङि पचाद्यचि "यङोऽचि च" इति यङो लुक् ] अस्ति विद्यते, कुत्रापि जलाप्राप्त्या अनन्योपायत्वादिति भावः। तृष्णाक्रान्तः रथं परित्यज्य पतितः निर्जलेऽपि गगने चन्द्रामृतविन्दुम् आस्वादयन् वायुवाहनमृगः एव अयं, न तु तत्त्वतः क्वचित् कलङ्कीभूतो मृगः नामेति निष्कर्षः। अस्तीति वर्त्तमानप्रत्ययेन अमृतास्वादनेन चन्द्रं परित्यज्य गन्तुम् अशक्तः अधुनाऽपि वर्त्तते इति सूचितम्। एवमन्योऽपि तृष्णाक्रान्तो निर्जले देशे प्रस्रवणादेः पतज्जलविन्दुवृन्दं

अस्मिन् शिशौ न स्थित एव रङ्कुर्यूनि प्रियाभिर्विहितोपदाऽयम् ।
आरण्यसन्देश इवौषधीभिरङ्के स शङ्के विधुना न्यधायि ॥७८॥

---

पिबन् अनुपशान्तपिपासः लेलिहास्यः सन् तत्रैव चिरं तिष्ठति । षष्ठ वायुस्कन्धाः तथा प्रवहानिले राशिचक्रं राशिचक्रे च चन्द्र-मण्डलं तिष्ठतीत्यादि सर्वं पुराणादौ द्रष्टव्यम् ॥ ७७ ॥

अस्मिन्निति ।—शिशौ बाले, एककलात्मके इति यावत्, अस्मिन् चन्द्रे, रङ्कुः मृगः, न स्थितः एव न आसीत् एव, तस्या दशायाम् अदर्शनादिति भावः, किन्तु यूनि तरुणे, पूर्णावयवे इत्यर्थः, अत एव उपभोगसमर्थे अस्मिन् चन्द्रमसोपि इति भावः, प्रियाभिः प्रणयिनीभिः, चन्द्रस्य ओषधिपतित्वादिति भावः, ओषधीभिः आरण्यलतादिभिः, दीर्घकालं पतिविरहितत्वादुत्कण्ठिताभिरित्याशयः, अरण्ये भवः इति आरण्यः वनविषयकः, [ आरण्येति भवार्थेऽण् ] सन्दिश्यते प्रस्थाप्यते इति सन्देशः विरहासहिष्णुतारूपं वाचिकमित्यर्थः यस्मिन् स तादृशः, ( "सन्देशवाक् वाचिकं स्यात्" इत्यमरः ) अरण्यभवानां सन्देशरूपा वा, वयं भर्तृप्रिया निर्जने वने मृगैः सह वसामः त्वं तु स्वर्गे विजयी सुखेन वर्त्तसे इति गूढार्थोप-लम्भसूचिका इति यावत्, अयम् एषः, कलङ्कात्मकतया परिदृश्य-मानः रङ्कुरित्यर्थः, उपदा इव उपायनमिव, विहिता प्रेषिता ; अनन्तरं विधुना चन्द्रेण, सः प्रेयसीसन्देशरूपः रङ्कुः, अङ्के मध्ये, अथच उत्सङ्गे, न्यधायि स्थापितः, प्रियाप्रेमभरेणेति भावः, इति शङ्के मन्ये, अहमिति शेषः । अन्याऽपि प्रिया तरुणं प्रियं प्रति कञ्चित् सन्देशम् उपदारूपेण प्रेषयति, स च तं हृदयादौ धारयतीति लोके दृश्यते । ओषध्य हि वनवासिन्यः तदनु-रूपम् एव सन्देशं मृगं स्वप्रिये चन्द्रे प्रेषितवत्यः । आरण्य-

अस्यैव सेवार्थमुपागतानामास्वादयन् पल्लवमोषधीनाम्
धयन्नमुष्यैव सुधाजलानि सुखं वसत्येष कलङ्करङ्कुः ॥ ७९ ॥
रुद्रेषुविद्रावितमार्त्तमारात्तारामृगं व्योमनि वीक्ष्य बिभ्यत्।
मन्येऽयमन्यः शरणं विवेश मत्वेशचूडामणिमिन्दुमेणः ॥ ८० ॥

सन्देशः इव अयम् उपदा प्रहिता इति वा। यदेति पाठे, यदा प्रभृति प्रेषितः तदा प्रभृति तारुण्यदशायां चन्द्रेण अयम् अङ्के न्यधायि, न तु तत्पूर्वमिति भावः ॥ ७८ ॥

अस्येति।—एषः परिदृश्यमानः, कलङ्करङ्कुः लाञ्छनभूतो मृगः, अस्यैव चन्द्रस्यैव, पत्युरिति भाव, सेवार्थं परिचर्य्या-निमित्तम्, उपागतानाम् उपस्थितानां, विरहपीडितत्वेन मिलनसुखसम्भोगाशयेति भावः, ओषधीनां लताप्रभृतीनां, पल्लवं किशलयं, [जात्येकवचनम्] आस्वादयन् लिहन्, भक्षयन् इति यावत्, तथा अमुष्यैव चन्द्रस्यैव, सुधाजलानि पीयूषात्मकानि वारीणि, धयन् पिबंश्च सन्, सुखम् अक्लेशं यथा स्यात्तथा, अनायासलब्धवृत्तिरिवेति यावत्, वसति वर्त्तते, आहारलोभात् अत्रैव चिराय अतिष्ठदित्यर्थः, इत्यहं मन्य इति शेषः। अन्योऽपि मृगः जलकिशलययुते देशे सुखेन वसति कदाचित् अपि तत् स्थानं न त्यजति ॥ ७९ ॥

रुद्रेति।—व्योमनि नभोमण्डले, रुद्रस्य शङ्करस्य, इषुणा बाणेन, विद्रावितं ताडितम्, अत एव आर्त्तं पीडितं, तारा मृगशिरोनक्षत्ररूपं, मृगं हरिणम्, आरात् समीपे दूरे वा, वीक्ष्य दृष्ट्वा, अयं चन्द्रमण्डले दृश्यमानः, अन्यः अपरः, एणः मृगः, कलङ्कात्मक इति भावः, बिभ्यत् त्रस्यन् सन्, स्वस्यापि तादृश-प्रहारप्राप्तिशङ्कयेति भावः, इन्दुं चन्द्रम्, ईशस्य महेश्वरस्य, तस्यैव रुद्रस्येति यावत्, चूड़ामणिं शिरोरत्नं, मत्वा विविच्य, ईशशिरसि

पृष्ठेऽपि किं तिष्ठति नाथ! नाथ रङ्कुर्विधोरङ्क इवेति शङ्का।
तत्त्वाय तिष्ठस्व मुखे स्व एव यत् द्दैरथे पृष्ठमपश्यदस्य ॥ ८१ ॥

---

तस्यावस्थानं दृष्ट्वा ईशस्य प्रियपात्रं विविच्येति भावः, शरणं रक्षितारं, विवेश प्रविष्टवान्, शिवेन शिरसि स्थापितत्वात् अयं शिवस्य प्रियपात्रमेव, यद्येनं शरणं गच्छामि तदा रुद्रात् माम् अयं रक्षिष्यत्येव, इत्याशयेन अन्यः मृगः चन्द्रं रक्षकतया आश्रितवान् इत्यर्थः, इति मन्ये विवेचयामि, अहमिति शेषः। अन्योऽपि जनः सजातीयं कञ्चित् कस्माच्चित् भीतं दृष्ट्वा स्वयमपि भीतः सन् कमपि माननीयं जनं शरणं याति इति लोके दृश्यते। गत्वेत्यपि पाठः। पुरा किल चतुर्मुखो देवः स्वदुहितरं कामयमानो मृगरूपेण तां पलायमानां वीक्ष्य स्वयमपि मृगरूपेणान्वगच्छत्, दृष्ट्वा च तदनार्य्याचरणं क्रुद्धो हरः शरेण मृगरूपिणश्चतुर्मुखस्य शिरश्चिच्छेद, तच्च शिरो मृगशिरोनक्षत्ररूपेण शरश्च आर्द्रानक्षत्ररूपेण नभसि अवर्त्तत, कबन्धञ्च स्वयमेव हरो हस्ते दधार इति तारामृगस्य रुद्रेषुविद्रावणं काशीखण्डादौ ज्ञातव्यम्। अत एव शिवमहिम्नः स्तोत्रे "वसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः" इति, तथा शिवध्याने च "परशुमृगवराभीतिहस्तं प्रसन्नम्" इति च पाठो दृश्यते ॥ ८० ॥

पृष्ठे इति।—नाथ! हे स्वामिन्! रङ्कुः कलङ्कमृगः, विधोः चन्द्रस्य, अङ्के इव उत्सङ्गे यथा, तथा पृष्ठेऽपि पश्चाद्भागेऽपि, किं तिष्ठति? वर्त्तते किम्? अथ अथवा, न? तिष्ठति इत्यनेनान्वयः, इति एवं, शङ्का संशयः, तव चेत् वर्त्तते तर्हि इति शेषः, तत्त्वाय तत्त्व ज्ञातुं, याथार्थ्यज्ञानार्थमित्यर्थः, संशयनिराकरणायेति यावत्, [ क्रियार्थोपपदेति तादर्थ्यमात्रे वा चतुर्थी ] स्वे निजे, [ वैकल्पिकत्वात् स्मिन्नभावः ] मुखे वदने एव विषये, तिष्ठस्व

उत्तानमेवास्य वलक्षकुक्षि देवस्य युक्तिः शशमङ्कमाह।
तेनाधिकं देवगवेष्वपि स्यां श्रद्धालुरुत्तानगतौ श्रुतायाम् ॥८२॥

वर्त्तस्व, निजमुखमेव तत्त्वनिर्णयाय पृच्छ इत्यर्थः, [ स्येयाख्यायां तङ् ] यत् यस्मात्, द्वयोः रथयोरिदमिति द्वैरथं रथद्वयमारुह्य द्वयोरेव रथिनोः सम्मुखयुद्धं तस्मिन्, द्विरथसम्बन्धिनि द्वन्द्वयुद्धे इत्यर्थः, अस्य चन्द्रस्य, त्वन्मुखेन सह समानशोभाऽभिलाषिणः इति भावः, पृष्ठं पश्चाद्भागं, तत्र मुखात् पराजयेन पलायनकाले इति भाव', अपश्यत् अवैक्षत, तव मुखमिति शेषः, तस्मात् तत् स्वमुखमेव निर्णेतृत्वेन पृच्छ इति निष्कर्षः। त्वन्मुखं चन्द्रात् अपि अधिकमिति भङ्ग्या नलमुखवर्णनं कृतम् ॥ ८१ ॥

उत्तानमिति।—हे नाथ! युक्तिः अर्थापत्तिः अनुमानं वा, अस्य परिदृश्यमानस्य शशलाञ्छनस्य, देवस्य चन्द्रस्य, अङ्कं कलङ्करूपं, वलक्षकुक्षिं धवलोदरं, ("वलक्षो धवलोऽर्जुनः" इत्यमरः) शशं मध्यवर्त्तिनं मृगविशेषम्, उत्तानमेव आकाशाभिमुखे अवस्थितं मुखोरःस्थलादि-पुरोभागीयमङ्गं भूमिस्थपृष्ठाद्यङ्गञ्चैवेत्यर्थः, स्वर्गसम्मुखम् अस्मदादिदृश्यमान-पृष्ठभागमेवेति यावत्, आह ब्रूते, यद्ययं शशकः अस्मत्-सम्मुखोदरः अनुत्तानः अभविष्यत् तर्हि मध्यवर्त्तिशशकोदरस्य धवलत्वात् चन्द्रमध्यभागोऽपि धवलः अभविष्यत्, न च तथा दृश्यते, किन्तु मलिनः, तस्मात् उत्तानः एव शशकः चन्द्रेऽस्तीति युक्तिः कण्ठोक्त्येव स्पष्टं प्रकाशयतीत्यर्थः, तेन चन्द्रशशस्य अनुमितोत्तानत्वेनैव हेतुना, देवानां सुराणां, गावः धेनवः तेषु देवगवेष्वपि सुरभीप्रभृतिषु विषयेऽपि, [ "गोर-तद्धितलुकि" इति टच्। देवगवीष्विति पाठे टित्त्वात् ङीप् ] श्रुतायाम् "उत्ताना वै देवगवाश्चरन्ति" इति श्रुतितः

दूरस्थितैर्वस्तुनि रक्तनीले विलोक्यते केवलनीलिमा यत्।
शशस्य तिष्ठन्नपि पृष्ठलोम्नां तन्नः परोक्षः खलु रागभागः ॥८३॥
भङ्क्तुं प्रभुर्व्याकरणस्य दर्पं पदप्रयोगाध्वनि लोक एषः।

---

आकर्णितायाम्, उत्तानगतौ सुरलोकाभिमुखीनचरणतया गमने विषये, अधिकं पूर्वापेक्षया अतितरां, श्रद्धालुः आस्तिक्ययुक्ता, विश्वासवतीत्यर्थः, स्यां भवेयम्, अहमिति शेषः, चन्द्रशशस्य उत्तानभावेनावस्थानस्य अनुमानसिद्धत्वात् तद्दृष्टान्तेन "उत्ताना वै देवगवाः चरन्ति" इति श्रुतिः न्यायोपपन्नार्थतया सत्या एव इति अहम् इदानीम् अधिकं मन्ये इति निष्कर्षः ॥ ८२ ॥

उक्तरीत्योत्तानावस्थितौ सिद्धायामपि शशकस्य पृष्ठलोम्नां रक्तनीलोभयवर्णत्वात् कलङ्कस्यापि रक्तनीलोभयवर्णत्वमेव युज्यते, किन्तु तथा न भूत्वा केवलं नीलत्वेन प्रतीतिः कथमित्यत आह, दूरेति।—दूरस्थितैः विप्रकृष्टदेशवर्त्तिभिः, द्रष्टृभिरिति शेषः, रक्तनीले रक्तनीलोभयवर्णमिश्रिते, वस्तुनि पदार्थे, केवलनीलिमा त्यक्तरागभागनीलत्वमेव, यत् यस्मात्, विलोक्यते दृश्यते, तत् तस्मात् कारणात्, शशस्य उक्तमृगविशेषस्य, पृष्ठलोम्नां पृष्ठदेशवर्त्तिरोम्णां, तिष्ठन् अपि वर्त्तमानोऽपि, रागभागः रक्तांशः, नः अस्माकम्, अतिदूरस्थितानामिति भावः, खलु निश्चितं परोक्षः अप्रत्यक्षः, दृग्गोचरः न भवत्येव, परन्तु केवलं नीलिमैव दृश्यते इत्यर्थः। तिष्ठन् वर्त्तमानोऽपि परोक्ष इति विरोधाभासः; दूरस्थत्वान्न दृश्यते इति तत्परिहारः। खलु उत्प्रेक्षायां वा ॥ ८३ ॥

चन्द्रे वैचित्र्यवत् चन्द्रवाचकपदेऽपि वैचित्र्यं दर्शयितुमाह, भङ्क्तुमिति।—एषः शब्दव्यवहारपरः, लोकः जनः,

शशी यदस्यास्ति शशी ततोऽयमेवं मृगोऽस्यास्ति मृगीति
नोक्तः ॥ ८४ ॥

यावन्तमिन्दुं प्रतिपत् प्रसूते प्रासावि तावानयमश्विनाऽपि ।
तत्कालमौशेन धृतस्य मूर्द्ध्नि विधोरणीयस्त्वमिहास्ति लिङ्गम्
॥ ८५ ॥

पदानां सुप्तिङन्तशब्दानां, प्रयोगाध्वनि व्यवहारपद्धतिविषये, व्याकरणस्य प्रकृतिप्रत्ययविभागपूर्वकं शब्दव्युत्पादनकारिणः शास्त्रस्य, दर्पं गर्वं, मन्नियमाधीनः एव सकलशब्दप्रयोगः इति अभिमानमित्यर्थः, यद्वा—व्याकरणस्य लक्षणया वैयाकरणस्येत्यर्थः, दर्पं व्याकरणाधीनः एव सकलशब्दप्रयोगः इत्यहङ्कारं, भङ्क्तुं चूर्णयितुं, त्याजयितुमित्यर्थः, प्रभुः समर्थः, यत् यस्मात् हेतोः, शशः अस्यास्ति वर्त्तते, ततः तस्मात् हेतोः, अयं चन्द्रः, शशी शशीतिसञ्ज्ञकः, उक्तः लोकैर्नाति शेषः, एवम् अमुना एव प्रकारेण, मृगः अस्य अस्तीति व्युत्पत्त्या, मृगीति मृगीतिसंज्ञकः, न उक्तः न कथितः; शशोऽस्यास्तीति मतुवर्थे "अत इनिठनौ" इतीनि-प्रत्यये यथा अयं शशीत्युच्यते, तथा तेनैव सूत्रेण मृगोऽस्यास्तीत्यत्रापि इनेः प्राप्तौ सत्यामपि मृगीति नोक्तः,तस्मादतिव्याप्त्यादिदोषात् व्याकरणमूलः एव लोकप्रयोगः इति नियमः न युक्तः, किन्तु कृत्तद्धितसमासानामभिधानं नियामकमिति शास्त्रात् चन्द्रवाचकपदेऽपि वैचित्र्यमस्तीति भावः। लक्ष्यमुद्दिश्य लक्षणप्रवृत्तिः, न तु लक्षणमुद्दिश्य लक्ष्यप्रवृत्तिरिति, तस्मात् प्रयोगमूलं व्याकरणमिति व्याकरणात् लोक एव प्रयोगे बलीयानिति निष्कर्षः। अप्रस्तुतप्रशंसा ॥८४॥

अश्विना कियत्परिमाणश्चन्द्रः प्रसूत इति वर्णयितुमाह, यावन्तमिति।—प्रतिपत् शुक्ला प्रतिपत्तिथिः,यावन्तं यत्प्रमाणम्,

आरोप्यते चेदिह केतकत्वमिन्दौ दलाकारकलाकलापे ।
तत् संवदत्यङ्कमृगस्य नाभिकस्तूरिका सौरभवासनाभि: ॥८६॥

यम् एककलमात्रमिति यावत्, इन्दुं चन्द्रं, प्रसूते जनयति, प्रतिशुक्लपक्षं प्रकाशयतीत्यर्थ:, अब्धिना अपि क्षीरोदसमुद्रेणापि, तावान् तत्प्रमाण:, एककल: एवेति यावत्, न तु पूर्ण: इति भाव: ; अयं चन्द्र:, प्रासावि अजनि, प्रसूत इत्यर्थ:, ननु एतत् कथं ज्ञातमित्यत आह—इह एतस्मिन् विषये, एककलमात्रप्रसवे इत्यर्थ:, तत्कालं तस्मिन् काले, समुद्रात् उत्पत्ते: अवसरे एवेत्यर्थ:, ईशेन महादेवेन, मूर्ध्नि शिरसि, धृतस्य स्थापितस्य, विधो: चन्द्रस्य, अणीयस्त्व नितरां सूक्ष्मत्वम्, एककलत्वमेवेत्यर्थ:, लिङ्गं ज्ञापकम्, अनुमापको हेतुरित्यर्थ:, अस्ति वर्त्तते ; तथा च क्षीराब्धिना यदैव विधु: प्रसूत:, ईशेनापि तदैव स: परमसुन्दरदर्शनत्वेन अतीवादरणीयत्वात् मूर्ध्नि धृत:, किन्तु तदा समुद्रेण यदि सम्पूर्णोऽयम् अजनयिष्यत् तर्हि शिवेनापि तदानीमेव शिरसि तावानेव अधास्यत्, न तु तथा, ततश्च क्षीराब्धिना एककल एवासौ प्रसूत:, तस्मादेव च प्रतिपदाऽपि एककल: एव प्रसूयते, अत एव प्रतिपत्तिथौ उदितोऽप्ययं न दृश्यते इति भाव: ॥८५॥

आरोप्यते इति ।—दलाकार: केतकीपत्रसदृश:, धवलतया इति भाव:, कलानाम् अंशानां, कलाप: समूह: यस्य तादृशे, इह अस्मिन्, इन्दौ चन्द्रे, चेत् यदि, केतकत्वं केतकीकुसुमत्वम्, आरोप्यते अध्यस्यते, उपचर्य्यते इति यावत्, दलसादृश्यादिति भाव:, केतकदलवत शुभ्रकलाकलापत्वात् चन्द्र: केतकमेवेति यदि केनापि रूप्येत इति निष्कर्ष:, तर्हि अङ्कमृगस्य क्रोडस्थहरिणस्य, नाभौ नाभिदेशे, या कस्तूरिका मृगनाभि:,

**आसीत् यथाज्योतिषमेष गोलः शशी समन्त चिपिटस्ततोऽभूत्।**

[कर्त्री] मृगत्वेन इति भावः, तत् आरोपितं केतकत्वं कर्मीभूतं, सौरभस्य सद्गन्धस्य, वासनाभिः नासायां सञ्चारैः करणैरित्यर्थः, संवदति सादृश्यं गच्छतीत्यर्थः, कस्तूरिका-केतकीकुसुमयोस्तुल्यसौरभत्वात् चन्द्रे केतकत्वारोपो युज्यते एव इत्यनुमन्यते इति यावत्; यद्वा—तत् आरोपितं केतकत्वं कर्त्तृभूतम्, अङ्कमृगस्य नाभिकस्तूरिकायाः, सौरभस्य परिमलस्य, घ्राणतर्पणगन्धस्येत्यर्थः, वासनाभिः संस्कार-विशेषैः, कस्तूरिकासम्बन्धजनिततत्सदृशगन्धैः करणैरित्यर्थः, संवदति सादृश्यं गच्छति। नाभिरिति पाठे, अङ्कमृगस्य नाभिः कर्त्री कस्तूरिकासम्बन्धिनीभिः सौरभवासनाभिः संवदतीति वा। केतक्यां कस्तूरीपरिमलो वर्त्तते, चन्द्रे च कलङ्कमृगनाभिरूपा कस्तूरी वर्त्तते, तस्मात् चन्द्रे केतकत्वम् आरोपयितुं युक्तमित्यर्थः। तत् केतकत्वम् अङ्कमृगस्य नाभिकस्तूरिकायाः परिमलस्य वा[illegible]भिः सङ्क्रमणैः संवदति युक्त्या संवादं प्राप्नोति इति वा। [illegible]भिरिति पाठे, अति-प्रसिद्धाभिः वासनाभिः इत्यर्थः। सर्व[illegible]ककीकुसुमसदृशोऽयं चन्द्र इति निष्कर्षः॥ ८६॥

आसीदिति।—एषः पुरतो दृश्यमानः, शशी चन्द्रः, यथा-ज्योतिषं गर्गादिप्रणीतग्रहगणितशास्त्रानतिक्रमेण, ज्योतिष-शास्त्रानुसारेणेत्यर्थः, [ज्योतिः अधिकृत्य कृतो ग्रन्थः ज्योतिषम्, "अधिकृत्य कृते ग्रन्थे" इत्यण्, ततो याथार्थ्येऽव्ययीभावः] गोलः गोलाकारः, नारिकेलफलवत् वर्त्तुलोपरितनभागः एवेति यावत्, आसीत् पूर्वमवर्त्तत; ज्योतिःशास्त्रे त्रयोदशाङ्गुलः चन्द्रः षोड़शाङ्गुलसूर्य्यस्य अधोभागस्थः जलपूर्णकाचकूपिकाप्रायः

स्वर्भानुदंष्ट्रायुगयन्त्रकृष्टपीयूषपिण्याकदशावशेषः ॥ ८७ ॥
असावसाम्याद्वितनोः सखा नो कर्पूरमिन्दुः खलु तस्य मित्रम् ।

यथोदितः तथैव पूर्वम् आसीत् इत्युक्तत्वात्, तथा च गर्गः,—
"तयोदशाङ्गुलिविमितस्त्रिकाधिकः शशी रविश्चरति दिवीह वर्त्तुलः" इति ; तर्हि इदानीं कथमन्यथा दृश्यते इत्याशङ्क्याह—ततः अनन्तरं, कालक्रमेणेत्यर्थः, स्वर्भानोः राहोः, दंष्ट्रायुगम् ऊर्द्धाधोभागस्थितदन्तपङ्क्तिद्वयमेव, यन्त्रं निष्पीडनचक्रविशेषः, तेन कृष्ट निष्कृष्य गृहीतं, पीयूषम् अमृतं यस्य यस्मात् वा, सः चासौ पिण्याकश्च तिलकल्कश्च, तस्य दशा अवस्था, गृहीतरसनीरसतिलादिपिण्डीमात्ररूपः इति यावत्, अवशेषः अवशिष्टभागः यस्य स तादृश इव सन्, समक्षं जनसाधारणनयनगोचरे, चिपिटः चिपिटाकारः, उपरिभागे प्रायशः समाकार इत्यर्थः, अभूत् अजायत, सर्वैरेव जनैः इदानीमपि समाकारः प्रत्यक्षेण अनुभूयते एवेत्यर्थः ॥ ८७ ॥

असाविति।—असाम्यात् असादृश्यात्, वितनुत्व-सतनुत्वरूपवैषम्यभावादित्यर्थः, असौ चन्द्रः, वितनोः अनङ्गस्य, सखा सुहृत्, नो न, भवितुमर्हतीति शेषः ; "विवाहमैत्रीवैराणि भवन्ति समशीलयोः" इति, तथा "समैर्विरोधो मैत्री च न च पुष्टविपुष्टयोः" इति शास्त्राच्च अनयोः साङ्गानङ्गयोः सादृश्याभावात् मैत्री न सङ्गच्छते इति भावः ; तर्हि अनयोः लोकप्रसिद्धा मैत्री कथम्? इत्यत आह—किन्तु कर्पूरं कर्पूरापरनामा, ("अथ कर्पूरमस्त्रियाम्। घनसारश्चन्द्रसंज्ञः" इत्यमरवचनात् कर्पूरशब्दो नपुंसकोऽपि) इन्दुः खलु चन्द्र एव, तस्य वितनोः अनङ्गस्य, मित्रं सखा, भवितुमर्हतीति शेषः, तावतैव लोकप्रसिद्धिविरोधाभावः इति बोध्यम् ; तत्र हेतुमाह—

दग्धौ हि तौ द्वावपि पूर्वरूपात् यद्वीर्य्यवत्तामधिकां दधाते ॥८८॥
स्थाने विधोर्वा मदनस्य सख्यं सः शम्भुनेत्रे ज्वलति प्रलीनः।
अयं लयं गच्छति दर्शभाजि भास्वन्मये चक्षुषि चादिपुंसः ॥८९॥

यत् यस्मात्, तौ कामकर्पूरौ, द्वावपि उभावपि, दग्धौ भस्मीभूतौ सन्तौ, पूर्वरूपात् अदग्धदशायाः, अधिकाम् उत्कृष्टां, वीर्य्यवत्तां सामर्थ्यं, गुणवत्ताञ्च, हि निश्चितं, दधाते बिभृतः ; पक्वो हि कर्पूरो यथा भेषजविषये वीर्य्यवत्तरो भवति, तथा कामोऽपि हर-कोपानले दाहानन्तरम् अधिकवीर्य्यशालितया अनुभूयते, तस्मात् कामकर्पूरयोः मैत्री युक्ता ; तदुक्तं, "कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने। नमोऽस्त्ववार्य्यवीर्य्याय तस्मै कुसुम-धन्वने॥" इति। एवञ्च "चन्द्रः कामसखा" इति लोक-प्रसिद्धौ चन्द्रशब्दः कर्पूरवाचकः, न तु मृगाङ्कापरसंज्ञकश्चन्द्र इति निष्कर्षः॥ ८८॥

स्थाने इति।—वा अथवा, विधोः चन्द्रस्य, मदनस्य कामस्य च, सख्य मैत्री, स्थाने युक्तमेव इत्यर्थः, यतः सः मदनः, ज्वलति दीप्यमाने, शम्भुनेत्रे शिवस्य वह्न्यात्मके तृतीयनयने, प्रलीनः प्रकर्षेण लीनः, एकतां गतः इत्यर्थः, प्रलयं प्राप्तः इति यावत्, विनष्टः इति निष्कर्षः, अयं विधुश्च, दर्शभाजि दर्शनं दर्शः, तद्भाजि तद्व्यापारयुक्ते, अथच अमावास्यां गते, दर्शः दर्शनमेव दर्शः अमावस्या, तद्भाजि तद्विशिष्टे इति वा, भास्वन्मये सूर्य्यरूपे, आदिपुंसः विष्णोः, चक्षुषि नेत्रे, लयम् एकतां, गच्छति प्राप्नोति ; सूर्य्येन्दुसङ्गमः इत्यपरनामके दर्शे हि सूर्य्याचन्द्रमसो-रेकराश्यवस्थाननियमस्य ज्योतिःशास्त्रोक्तत्वात् चन्द्रः सूर्य्यं गच्छति, अत एव सूर्य्यमयूखैश्चन्द्रस्यादर्शनादिति भावः। सूर्य्यो विष्णोः दक्षिणचक्षुः, तथा च हरिहरयोः नेत्रयोः द्वयोरपि

नेत्रारविन्दत्वमगान्मृगाङ्कः पुरा पुराणस्य यदैष पुंसः।
अस्याङ्क एवायमगात् तदानीं कनीनिकेन्दिन्दिरसुन्दरत्वम् ॥९०॥
देवेन तेनैष च काश्यपिश्च साम्यं समीक्ष्योभयपक्षभाजौ।
द्विजाधिराजौ हरिणाश्रितौ च युक्तं नियुक्तौ नयनक्रियायाम्
॥९१॥

चन्द्रकामयोः प्रक्षीणत्वेन साम्यात् दर्शे चन्द्रस्यापि अनङ्गतया च समानत्वात् उचितैव उभयोः मैत्री, तथा च कामस्य चन्द्रसखिताप्रसिद्धिर्मुख्यैवेति निष्कर्षः ॥ ८९ ॥

नेत्रेति।—पुरा पूर्वं, यदा यस्मिन् काले, एषः अयं, मृगाङ्कः चन्द्रः, पुराणस्य सनातनस्य, पुंसः पुरुषस्य, श्रीविष्णोरित्यर्थः, नेत्रारविन्दत्वं नयनकमलत्वम्, अगात् प्राप्तवान्, तदिच्छयैवेति भावः, तदानीं तस्मिन्नेव काले, अस्य विष्णुनेत्रारविन्दभूतस्य मृगाङ्कस्य, अयं परिदृश्यमानः एषः, अङ्कः कलङ्कः एव, कनीनिकायाः नेत्रतारकायाः, इन्दिन्दिरस्य भ्रमरस्य च, ("इन्दिन्दिरालिषट्चरणचञ्चरीकालिनो द्विरेफाः स्युः" इति हलायुधः) सुन्दरत्वं सौन्दर्य्यम, अगात् प्रापत्। अदादिति पाठे, अयं श्रीविष्णुः अस्य चन्द्रस्य अङ्के विषये कनीनिकेन्दिन्दिरसुन्दरत्वम् अदात्। नेत्रे हि कनीनिकया भाव्यम्, अरविन्दे च भ्रमरेण, तथा च अस्य नेत्रारविन्दरूपत्वात् अङ्कमेव उभयं श्रीविष्णुः कृतवान् इत्यर्थः, कनीनिकाभ्रमरकलङ्कानां समानकृष्णवर्णत्वादिति भावः। अङ्कः एव कनीनिका कर्त्री भ्रमरेण सुन्दरत्वमस्य अदात् इति वा ॥ ९० ॥

देवेनेति।—तेन देवेन श्रीविष्णुना, एष च चन्द्रश्च, काश्यपिश्च विनतायां कश्यपादुत्पन्नः गरुड़श्च एतौ द्वौ अपि, उभयपक्षौ शुक्लकृष्णौ द्वौ पक्षौ छदद्वयञ्च, भजेते आश्रयतः इति

येरन्वमायि ज्वलनस्तुषारे सरोजिनीदाहविकारहेतोः।
तद्दोषधूमोत्रतया हिमांशौ शङ्के कलङ्कोऽपि समर्थितस्तैः॥८२॥

---

तयोक्तौ, तथा द्विजानां ब्राह्मणानां पक्षिणाञ्च, अधिराजौ अधीश्वरौ, तथा हरिणेन अङ्कभूतमृगेण, आश्रितौ प्राप्तौ, हरिणा विष्णुना, आश्रितौ प्राप्तौ च, वाहनत्वेनेति भावः, साम्यं सादृश्यम्, उक्तप्रकारेण द्वयोरेव समत्वमित्यर्थः, समीक्ष्य अवलोक्य, इवेति शेषः, चन्द्रः शुक्लकृष्णौ उभयपक्षौ भजति गरुडस्तु द्वौ पक्षौ कृद्धौ भजति, तथा द्विजानां ब्राह्मणानां राजा चन्द्रः, गरुडस्तु पक्षिणां राजा, तथा हरिणेन कलङ्कमृगेण आश्रितः चन्द्रः, गरुडस्तु हरिणा विष्णुना वाहनार्थम् आश्रितः, एवम् अनयोः साम्यं समानधर्मकता समीक्ष्य एष चन्द्रः, काश्यपिः गरुडश्च [ "बाह्वादित्वादिञ्" ] तुल्यायां समायां, नयनक्रियायां कर्मणि नेत्रव्यापारे वाहनव्यापारे च, यत् नियुक्तौ व्यापारितौ, स्थापितौ इत्यर्थः, तत् युक्तम् उचितमेवेत्यर्थः; चावन्योन्यसमुच्चये। एवम् उभयोः साम्यात् समे एव व्यापारे नियुक्तौ इति यत् तत् उचितं कृतम् इति भावः॥ ८१॥

येरिति।—येः पण्डितैः, सरोजिन्याः पद्मिन्याः, दाहः तुषारकर्त्तृकमेव दग्धीकरणं, शिशिरर्त्तौ पद्मिनीनां क्षयोन्मुखतादर्शनादिति भावः, स एव विकारः विकृतिः, स्वरूपविपर्य्यय इत्यर्थः, स एव हेतुः कारणम, अनुमितौ इति भावः तस्मात् हेतोः, तुषारे हिमे, ज्वलनः अग्निः, अन्वमायि अनुमितः, तुषारः साग्निः भवितुम् अर्हति स्वसम्बन्धे पद्मिनीदाहकारित्वात् साग्निभूदेशवत् तप्तोदकवद्देति हिमे विषये वह्निः अनुमितः इत्यर्थः, तैः पण्डितैः, हिमांशौ तुषारमये चन्द्रे, कलङ्कोऽपि

स्वेदस्य धाराभिरिवापगाभिर्व्याप्ता जगद्भारपरिश्रमार्त्ता।
छायापदेशाद्वसुधा निमज्ज्य सुधाम्बुधावुज्झति खेदमत्र ॥ ९३ ॥

---

कृष्णवर्णचिह्नमपि, तदीयधूमौघतया अनुमानविषयीकृत-हिमस्याग्निसम्बन्धिधूमसमूहरूपत्वेन, समर्थितः सोपपत्तिकः कृतः, स्वानुमानं दृढीकृतमित्यर्थः, शङ्के इति मन्ये, अहमिति शेषः। वह्नौ हि धूमेन भाव्यं, चन्द्रस्य तुषारमयत्वात् उक्तरीत्या वह्निमान्, तथा च कलङ्कः धूमसमूहः एवेति तैः समर्थितम् इत्यहं सम्भावयामि इत्यर्थः ॥ ९२ ॥

स्वेदस्येति।—जगतां जागतिकवस्तुजातानां, भारेण भारवहनेन, यः परिश्रमः क्लेशः, तेन आर्त्ता नितरां पीड़िता, अत एव स्वेदस्य श्रमजन्यघर्मजलस्य, धाराभिः इव प्रवाहैरिव दृश्यमानाभिः, आपगाभिः नदीभिः, व्याप्ता समन्तात् पूरिता, वसुधा पृथिवी, छायापदेशात् कलङ्कात्मकस्वीयप्रतिबिम्बव्याजात्, एतेन कलङ्कमृगः भूच्छायेति मतं वर्णितम्; एवं रघुवंशेऽपि "छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः" इत्युक्तम्; सुधाम्बुधौ अमृतोदधिरूपे, अत्र चन्द्रे, निमज्ज्य अन्तः प्रविश्य, खेदं जगद्भारवहनजन्यपरिश्रमम्, उज्झति इव त्यजति इव, श्रमापनोदनार्थं विश्राम्यतीवेत्यर्थः। गुरुतरभारवहनक्लान्तो लोको यथा घर्मधारापरिप्लुतः सन् तडागादौ अवगाह्य तमपनुदति, तथा अतिविस्तीर्णेयं वसुधा जगद्भारवहनश्रमेण बहुनदीसमूहात्मकघर्मधाराप्लुता सती सुधाम्बुधिस्वरूपे अतिविशाले चन्द्रमण्डले निमज्ज्य क्लान्तिं दूरीकरोतीवेति निष्कर्षः। अमृतसमुद्रनिमज्जने हि खेदो गच्छत्येव, यस्याश्च तत्तन्नदीरूपः स्वेदः, तस्याः श्रमहरणे सुधासमुद्रः एव उचितः इति भावः ॥ ९३ ॥

ममानुमैवं बहुकालनीलीनिपातनीलः खलु हेमशैलः।
इन्दोर्जगच्छायमयेऽन्यथाऽङ्के पीतोऽपि भागः प्रतिबिम्बितः स्यात्
॥ ८४ ॥

---

ननु भूच्छायैव चेत् चन्द्रकलङ्कः, तदा हेमाचलस्य सुमेरोरपि छायापतनेन कियदंशस्य पीतवर्णता कथं न दृश्यते ? इत्याशंसायामाह, ममेति।—हेमशैलः स्वर्णाचलः सुमेरुः, खलु निश्चितं, बहुना कालेन दीर्घसमयातिक्रमेण हेतुना, सर्गम् आरभ्य अद्य यावत् अतिक्रान्तेन हेतुनेत्यर्थः, स्मरणातीतसमयेनेति यावत्, नीलीनिपातः श्यामिकालगनं, नीलवर्णपिच्छिलमलोत्पत्तिरित्यर्थः, तेन नीलः नीलवर्णः, बहुकालं व्याप्य एकेनैव भावेनावस्थानात् अव्यवहृतधातुपात्रवत् क्रमसञ्चितनीलमलसम्बन्धात् श्यामवर्णः इत्यर्थः, सञ्जातः इति शेषः, एवम् ईदृशी, मम मे, अनुमा अनुमानम्, एवम् अहं सम्भावयामि इत्यर्थः, अन्यथा यदि स्वर्णाचलः कालभूयस्त्वेन न नीलीभूतः किन्तु हेममयत्वात् पीतः एव स्यात् तर्हि, जगच्छायमये जगतः छाया जगच्छायं [“विभाषा सेना” इत्यादि पक्षे क्लीवत्वम्] तन्मये, जगत्प्रतिबिम्बभूते, भूच्छायात्मके इत्यर्थः, इन्दोः चन्द्रस्य, अङ्के कलङ्के, कलङ्करूपे अवयवे इत्यर्थः, पीतो भागोऽपि मेरोः गौरोऽशोऽपि, प्रतिबिम्बितः प्रतिफलितः, प्रतिच्छायारूपेण पतित इत्यर्थः, स्यात् भवेत्, प्रतिबिम्बितपीतांशोऽपि लोकानां दृष्टिविषयीभूतो भवेदित्यर्थः, तस्मात् स्वर्णाचलोऽपि नील एव जातस्तथा च सकलायाः अपि भूमेः नीलवर्णत्वात् तत्प्रतिबिम्बरूपः कलङ्कोऽपि नीलः एव युक्तः, अत एव तस्य छाया पृथक् न दृश्यते इति भावः॥ ८४॥

माऽवापदुन्निद्रसरोजपूजाश्रियं शशी पद्मनिमीलितेजाः।
अचिद्वयेनैव निजाङ्करङ्कोरलङ्कृतस्तामयमेति मन्ये ॥ ८५ ॥
य एष जागर्त्ति शशः शशाङ्के बुधो विधत्ते क इवात्र चित्रम्?।
अन्तः किलैतत्पितुरम्बुराशेरासीत् तुरङ्गोऽपि मतङ्गजोऽपि ॥८६॥

मेति।—पद्मनिमीलि कमलसङ्कोचकं, तेजः ज्योतिः यस्य सः तादृशः, शशी चन्द्रः, उन्निद्रैः विकसितैः, सरोजैः कमलैः, या पूजा अर्चना, समादर इति यावत्, तस्याः श्रियं तज्जनितां शोभां, मा अवापत् मा स्म लभत, स्वभावत एव पद्मनिमीलि-तेजस्कत्वादिति भावः, विकसितानामपि कमलानां पूजार्थं चन्द्र-सविधे क्रियमाणानां चन्द्रतेजसां सङ्कोचस्यैव सम्भवात् उन्निद्र-सरोजपूजाश्रियं प्रकारान्तरेण प्राप्नोतीत्याह—किन्तु, अयं चन्द्रः, निजाङ्करङ्कोः आत्मनः कलङ्कभूतस्य मृगस्य, अक्षिद्वयेनैव उन्निद्रकमलसदृशनेत्रयुगलेनैव, अलङ्कृतः शोभितः सन्, ताम् उन्निद्रसरोजपूजाश्रियम् एति प्राप्नोति, तन्नयनयोः उन्निद्रकमलरूपत्वात् इति भावः, मन्ये एवं सम्भावयामि, अहमिति शेषः। अयं चन्द्रः विकसितकमलाभ्यां पूजाम् इव अङ्कमृगनेत्राभ्यां शोभां प्राप्नोतीति भावः ॥ ८५ ॥

य इति।—यः एषः प्रत्यक्षदृश्यः, शशः मृगभेदः, शशाङ्के चन्द्रे, जागर्त्ति स्फुरति, अत्र विषये, कः इव बुधः को वा विद्वान् जनः, चित्रम् आश्चर्यं, पदार्थविशेषस्याभ्यन्तरे जीव-विशेषावस्थानदर्शनात् विस्मयमिति भावः, विधत्ते? धारयति? आश्चर्यान्वितो भवतीत्यर्थः, अपि तु न कोऽपि इति भावः, यतः एतस्य शशाङ्कस्य, पितुः जनकस्य, अम्बुराशेः समुद्रस्य, अन्तः मध्ये, तुरङ्गोऽपि शशापेक्षया वृहत् उच्चैःश्रवःसंज्ञकः अश्वोऽपि, तथा मतङ्गजोऽपि अश्वापेक्षयाऽपि विपुलकायः

गौरे प्रिये भातितमां तमिस्रा
ज्यौत्स्नी च नीले दयिता यदस्मिन्।
शोभाप्तिलोभादुभयोस्तयोर्वा
सितासितां मूर्त्तिमयं बिभर्त्ति ॥ ९७ ॥

वर्षातपानावरणं चिराय काष्ठीवमानम्बा समुत्थितेषु।

ऐरावताख्यो गजोऽपि, आसीत अवर्त्तत, किलेति पुराण-वार्त्तायाम; यदीयपितुर्मध्ये अश्वगजादिकं स्थातुमर्हति तस्य मध्ये शशमातसम्भवे किमाश्चर्य्यम् इति भावः॥ ९६ ॥

गौरे इति।—अस्मिन् इह लोके. यत् यस्मात्, तमिस्रा तिमिरा, कृष्णवर्णेत्यर्थः, दयिता प्रिया, तमिस्रा तमोबहुला, दयिता तामसी रात्रिश्चेत्यर्थः, गौरे शुक्लवर्णे, प्रिये दयिते विषये, तथा ज्योत्स्नी शुभ्रवर्णा, दयिता प्रिया, ज्यौत्स्नी चन्द्रिकायुक्ता धवला, दयिता प्रिया रात्रिश्च, नीले कृष्णवर्णे, प्रिये दयिते च, भातितमाम् अतिशयेन शोभते, तत् विरुद्धवर्णद्वयसम्मिश्रणे वैचित्र्यातिशयोदया-दिति भावः, तस्मात् हेतोः तयोः तमिस्राज्यौत्स्न्योः, उभयोः द्वयोः दयितयोः रात्र्योरेव विषये, शोभायाः सौन्दर्य्यस्य, आप्तेः प्राप्तेः, लोभाद्वा अभिलाषादिव, वा इवार्थे; तयोरेव पत्न्योः या शोभाप्राप्तिः तदभिलाषात् धवलश्यामल-सम्बन्धात् तमिस्राज्योत्स्न्योः शोभया भवितव्यम् इत्यर्थः, अयं चन्द्रः, सितासितां निष्कलङ्कांशे धवलां सकलङ्कांशे श्यामलाञ्च, मूर्त्तिं कायं, बिभर्त्ति धारयति, बिभर्त्ति इव इत्यन्वयो वा। नीलभागे ज्यौत्स्नीं प्रियां धारयितुं, धवले च तामसी-मिति यथासङ्ख्यम् ॥ ९७ ॥

वर्षेति।—चिराय सर्वकालं, पक्षे—बहुकालञ्च, वर्षासु

बालेषु ताराकवकेष्विहैकं विकस्वरीभूतमवैमि चन्द्रम् ॥ ९८ ॥
दिनावसाने तरणेरकस्मान्निमज्जनाद्विश्वविलोचनानि ।
अस्य प्रसादादुडुपस्य नक्तं तमोविपद्द्वीपवतीं तरन्ति ॥ ९९ ॥

---

वर्षर्त्तौ, तपे ग्रीष्मर्त्तौ च, पक्षे—वर्षेषु जलवृष्टिषु, आतपेषु रौद्र-सन्तापेषु च, अनावरणम् आच्छादनविहीनं, काष्ठौघं दिक्-समूहमेव काष्ठौघं दारुसमूहम्, आलम्ब्य आश्रित्य, समुत्थितेषु उत्पन्नेषु, बालेषु तनुषु, अविकसितेषु च, इह प्रत्यक्षदृश्येषु एषु, तारासु नक्षत्रेषु एव, कवकेषु छत्राकेषु मध्ये, चन्द्रं शशिनं, विकस्वरीभूतं विकसितं, चिरकालोत्पन्नत्वात् अतिवृहदा-कारमित्यर्थः, एकम् एकमङ्काकं कवकम्, अवैमि मन्ये। वर्षाकाले हि अनावृतेषु जलस्तिमितेषु पश्चादातपेषु च काष्ठेषु सूक्ष्मस्थूलानि छत्राकाणि भवन्ति इति लोके दृश्यते, तथा च तारा अल्पकवकानि भवन्ति, चन्द्रस्तु स्थूलकवकः अत्र वर्णेन आकारेण च तुल्यत्वादिति भावः। इत्युत्प्रेक्षा ॥ ९८ ॥

दिनेति।—विश्वस्य जगतः, विलोचनानि नेत्राणि, दिनाव-साने सायंसमये, तरणेः सूर्य्यस्य, अवलम्बनरूपनौकायाश्च, अकस्मात् सहसा, असम्भावितहेतोरित्यर्थः, निमज्जनात् प्रतीचीसागरनीरप्रवेशात्, जलमध्ये निमग्नीभूतत्वाच्च हेतोः, नक्तं रात्रौ, तमः अन्धकारनिमित्ता, विपत् विपत्ति-रेव, दृष्टिप्रतिबन्धकान्धकारे पदस्खलनादिरूपा विपद-वेत्यर्थः, द्वीपवती महानदी ताम्, अस्य दृश्यमानस्य, उडुपस्य नक्षत्राधिपस्य चन्द्रस्य प्लवस्य च, प्रसादात् प्रकाश-रूपात् अनुग्रहात्, तरन्ति उत्तीर्णानि भवन्ति, चन्द्रालोक-साहाय्येन पदार्थजातमवलोकयितुमर्हन्ति तटभूमिं प्राप्नुवन्ति त्यर्थः। चन्द्रेण तमो निरस्य सर्वं प्रकाशितमिति

किं नास्ति नोऽपि चणिकोऽणुकोऽयं
भानस्ति तेजोमयविन्दुरिन्दुः।
अत्रेस्तु नेत्रे घटते यदासीत्
मासेन नाशी महतो महीयान्॥ १२०॥

---

भावः। अन्येऽपि रात्रौ तरणेः नौकायाः अकस्मात् मज्जनात् हेतोः वडनरूपामापन्नटीम उडुपस्य अकस्मादागतस्य अल्पस्य यानपात्रस्य प्रसादात् तरन्ति इति तात्पर्य्यम्॥ ९९॥

किमिति।—नोऽपि अस्माकमपि, अमहतां पामराणाम् अपीति भावः, अच्णि नेत्रे विषये, अङ्गुल्या नयनप्रान्तचिपिटीकरणे इति यावत्, चणिकः चणमात्रावस्थायी, यावच्चिपिटीकरणकालमात्रस्थायीत्यर्थः, तथा अणुकः अल्पीयान्, अतिक्षुद्र इत्यर्थः, [ "अल्पे" इति कन् ] भान् शोभमानः, धवलवर्त्तुलाकारेणेति भावः, तेजोमयः तेजःस्वरूपः, विन्दुः विन्दुपरिमितः, नेत्रमध्यवर्त्ती ज्योतिर्विन्दुस्वरूप इत्यर्थः, अयम् अङ्गुल्या नयनप्रान्तचिपिटीकरणकाले दृश्यमान इत्यर्थः, इन्दुः चन्द्रः, किं नास्ति? न विद्यते किम्? अपि तु अस्मदादिनेत्रेऽपि इन्दुर्वर्त्तते एवेत्यर्थः; तर्हि अस्मात् चन्द्रात् तस्य वैलचण्यं कथमित्यत आह—महतः महानुभावस्य, अत्रेः तन्नामकमुनेः, नेत्रे नयने, तु पुनः, मासेन मासान्तेन, अमावस्यायामित्यर्थः, नाशी नाशशीलः, अदृश्यतां गत इत्यर्थः, मासावसानप्राप्तविनाशश्च, [ अस्त्यर्थे इनिः ] तेजोमयविन्दुः अयमिन्दुः महीयान् अस्माकं नेत्रगतविन्द्वपेचया नितरां महापरिमाणः, यत् आसीत् अवर्त्तत, तत् घटते युज्यते इत्यर्थः। "सर्वं हि महतां महत्" इति न्यायेन चिरस्थायिनो महतोऽत्रेः नेत्रतेजोमयविन्दुरपि

त्रातुं पतिं नौषधयः स्वशक्त्या मन्त्रेण विप्राः क्षयिणं न शेकुः।
एनं पयोधिर्मणिभिर्न पुत्रं सुधा प्रभावैर्न निजाश्रयं वा ॥१०१॥

अयमिन्दुर्मर्यादापरिमाणाचिरकालस्थायी चेति अस्यैवेतत्तेजोमय-विन्दोरन्दावैलक्षण्यं युक्तमेवेति भावः ॥ १०० ॥

त्रातुमिति।—ओषधयः मृतसञ्जीविन्यादयः ओषधिविशेषाः, स्वशक्त्या निजसामर्थ्येन, निजरसवीर्य्यविपाकप्रभावादिभि-रित्यर्थः, क्षयिणं प्रतिदिनं कलाक्षयवन्तम्, अथच क्षयरोगिणं, पतिं भर्त्तारम्, "ओषधीशो निशापतिः" इत्यमरोक्तेः चन्द्रस्य ओषधिपतित्वादिति भावः, एनं चन्द्रं, त्रातुं रक्षितुं, न शेकुः न समर्था बभूवुः; अत्र पतिशब्दप्रयोगेण अतिप्रियतमसम्बन्ध-प्रकटनात् ओषधिभिः भर्त्तृप्राणरक्षणचेष्टा निश्चितमेव साग्रहं कृता, किन्तु सर्वचेष्टावैफल्यात् अयं नितरां क्षीणो बभूवेति सूचितम्, एवं विप्रादिष्वपि ज्ञेयम्; तथा विप्राः द्विजाः, मन्त्रेण आतमन्त्रेण, महामृत्युञ्जयादिमन्त्रजपादिनेत्यर्थः, क्षयिणं पतिं, "द्विजराजः शशधरः" इत्यमरोक्तेः चन्द्रस्य द्विजाधिपति-त्वादिति भावः, एनं त्रातुं न शेकुः, तथा पयोधिः जलनिधि-रपि, क्षयिणम् एनं पुत्रम् "अब्जो जैवातृकः सोमः" इत्यमरोक्तेः चन्द्रस्य समुद्रजातत्वादिति भावः, मणिभिः अजरामरत्वादि-सम्पादनसामर्थ्यात् अनेकप्रभावैः अन्तरस्थैः रत्नैः, त्रातुं न शशाक इति वचनविपरिणामः; तथा सुधा वा अमृतमपि, प्रभावैः अजरामरत्वजनकैः निजवीर्य्यैः, निजाश्रयं स्वाधारभूतं, चन्द्रस्य सुधाश्रयत्वादिति भावः, क्षयिणम् एनं त्रातुं न शशाक, वा समुच्चये, ओषध्यादिभिः नियतिखण्डनस्य असम्भाव्य-त्वादिति भावः, ओषध्यादयः स्वशक्त्यादिरक्षणसाधने सति अपि पतित्वात् प्रसूत्वात् पुत्रत्वात् निजाश्रयत्वाच्च क्षयात्

मृषा निशानाथमहः सुधा वा हरेदमौ वा न जराविनाशौ।
पीत्वा कथं नापरथा चकोरा विधोर्मरीचीनजरामराः स्युः?
॥ १०२ ॥

---

रचितुम् अर्हम् अपि एनं रचितुं समर्थाः न बभूवुः इति विशेषोक्त्या पूर्वकर्मजः रोगः महानुभावैः अपि अपनेतुं न शक्यते इति व्यज्यते। अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः इति औषध्यादीनां सामर्थ्यं प्रसिद्धम्॥ १०१॥

मृषेति।—निशानाथस्य चन्द्रस्य, महः तेजः, सुधा पीयूषं, पीयूषरूपमित्यर्थः, मृषा वा असत्यः एव, ईदृशः लोकवादः मिथ्या वा इत्यर्थः, भवेदिति शेषः, वा अथवा, चन्द्रतेजः सुधैव इति लोकप्रवादः यदि सत्यः एव भवेदिति भावः, तर्हि अमौ चन्द्रतेजोरूपा सुधा, जराविनाशौ जरामरणे, न हरेत् न विनाशयेत्, चन्द्रतेजोरूपायाः सुधायाः जरामृत्युविध्वंसिनी शक्तिर्नास्तीत्यर्थः; चन्द्रतेजः सुधा नैव इति वा अङ्गीकार्य्यम, अथ वा एतद्रूपा सुधा अपि जरामरणे न नाशयतीति अङ्गीकार्य्यमिति निष्कर्षः,अपरथा अन्यथा,यदि चन्द्रतेजः सुधा, तथा तद्रूपा च सुधा जरामरणे विनाशयेत् इति प्रवादः सत्यः एव भवेदित्यर्थः, तर्हि, चकोराः तदाख्याः चन्द्रिकापायि-पक्षिणः, विधोः चन्द्रस्य, मरीचीन् किरणान्, किरणरूपायाः सुधा इत्यर्थः, पीत्वा सेवित्वा, अपीति शेषः, कथं किमिति, अजरामराः जरामरणरहिताः, न स्युः? न भवेयुः? चन्द्रतेजसः सुधात्वे एतस्याश्च सुधायाः जरामरणविनाशे सामर्थ्यसद्भावे तत्पाने चकोरैरपि अजरामरैर्भाव्यं, न च ते तथा, तस्मात् तत्तेजसः सुधात्वं वा मृषा भवेत्, सुधाभुक्त्याापि जरामरणापहारे सामर्थ्यं नास्तीत्येतत् वा अङ्गी-

वाणीभिराभिः परिपक्तिमाभिर्नरेन्द्रमानन्दजडञ्चकार।
मुहूर्त्तमाश्चर्य्यरसेन भैमी हैमीव वृष्टिस्तिमितञ्च त सा ॥१०३॥
इतो मुखाद्वागियमाविरासीत् पीयूषधारामधुरेति जल्पन्।
अचुम्बदस्याः स मुखेन्दुबिम्बं संवावदूकश्रियमम्बुजानाम् ॥ १०४॥

कर्त्तव्यमिति निष्कर्षः। तथा, "सुधा प्रभावैः न निजाश्रयं वा" इति पूर्वश्लोकांशसमाधानम् इत्याशयः। [ अजरामरौस्युरिति पाठे च्विः ] ॥ १०२ ॥

वाणीभिरिति।—सा पूर्वोक्तदिशा चन्द्रवर्णनपरा, भैमी दमयन्ती. परिपक्तिमाभिः परिपाकेन निर्वृत्ताभिः, परिणतकवित्वशक्तितया प्रसादादिगुणयुक्ताभिरित्यर्थः, [ डित्वान्निर्वृत्तेऽर्थे क्त्रिः, क्त्रेर्मम् ] आभिः पूर्वोक्ताभिः, वाणीभिः वचनैः, नरेन्द्रं मनुजाधिपं, तं नलम्, आनन्दजडं हर्षविमूढम्, आनन्दाधिक्येन कर्त्तव्याकर्त्तव्यनिर्द्धारणाक्षममित्यर्थः, तथा मुहूर्त्तं किञ्चित् कालम्, आश्चर्य्येण विस्मयापरनाम्ना, रसेन आस्वाद्येन, अथच तद्रूपेण जलेन, हैमी तुषारसम्बन्धिनी, वृष्टिरिव वर्षणमिव, तुषारवृष्टिरिवेत्यर्थः, स्तिमितं जडप्रायम्, अतिस्नेहात् प्राप्तस्तम्भमित्यर्थः वा, अथच आर्द्रं, चकार कृतवती, हिमवृष्टिर्यथा अन्यं जडम् आर्द्रञ्च करोति तथेयमपि आनन्दजडं सातिस्नेहञ्च चकार इत्यर्थः ॥ १०३ ॥

इत इति।—हे प्रिये! पीयूषधारावत् अमृतनिष्यन्दवत्, मधुरा मनोहारिणी, इयम् उक्तप्रकारा, वाक् वाणी, इतः अस्मात्, यन्मुखचन्द्रम् असकृत् दृष्ट्वाऽपि दर्शनपिपासा मे न निवृत्ता, मया चिवुके ध्रियमाणात् प्रत्यक्षदृश्यात् तस्मादेतस्मादित्यर्थः, मुखात् वदनात्, आविरासीत् प्रादुरभवत्, निःसृता इत्यर्थः, इति एवं, जल्पन् वदन्, सः नलः, अम्बुजानां

प्रियेण साऽथ प्रियमेवमुक्ता विदर्भभूमीपतिवंशमुक्ता ।
स्मितांशुजालं विततान तारा दिवः स्फुरन्तीव कृतावतारा ॥१०५॥

कमलानां, संवावदूका नितरां संवादिनी, अत्यन्तसदृशीत्यर्थः, [ अत्यर्थं संवदति संवावदूका, सम्पूर्वोऽयं मैत्र्यां वर्त्तते ] श्रीः शोभा यस्य तादृशं, कमलतुल्यसौन्दर्य्यसौरभसम्पन्नम्, अस्याः प्रियायाः भैम्याः, मुखेन्दुबिम्बम् आननचन्द्रमण्डलम्, अचुम्बत् चुम्बितवान्, चन्द्रकमलतुल्यं भैमीमुखं प्रीत्यतिशयात् अचुम्बत् इत्यर्थः। इतः इत्यनेन सामीप्याभिनयकारिणा करेण भैमीमुखं चिबुके धृतम् इति ध्वन्यते। मुखस्य इन्दुबिम्बत्वेन च पीयूषधारासम्बन्धौचित्यं सूच्यते, तथा च पीयूषधारया मधुरा इत्यपि व्याख्येयम्। संवावदूकेत्यादिना च भैम्याः पद्मिनीत्वं प्रसिद्धम्। चन्द्रबिम्बस्य कमलैः सह विसंवादः विरोधित्वात्; एतन्मुखचन्द्रबिम्बस्य तु कमलैः सह संवादः कामलसौभाग्यभाक्त्वात् इति बोद्धव्यम्। प्रसिद्धचन्द्रबिम्बात् एतन्मुखचन्द्रबिम्बम् अधिकमिति सूच्यते ॥ १०४ ॥

प्रियेणेति।—अथ नलचुम्बनानन्तरं, प्रियेण कान्तेन, एवम् उक्तरूपम्, "इतो मुखात्" इत्यादिरूपमित्यर्थः, प्रियं प्रीतिजनकं वचनम्, उक्ता भाषिता, विदर्भभूमीपतेः विदर्भराजस्य भीमस्य, वंशेन कुलेन, मुक्ता जनिता, यद्वा—वंशः कुलमेव वंशः वेणुः, तस्य मुक्ता तत्र जाता दैवधार्य्या मौक्तिकस्वरूपा इत्यर्थः, सा भैमी, स्फुरन्ती सोल्लासा, सात्त्विकभावोदयेन वेपमानाङ्गी सतीत्यर्थः, दिवः आकाशात्, कृतः विहितः, अवतारः अवतरणं यया तादृशी, स्वर्गात् क्षीणपुण्यतया स्वेच्छया वा भूलोकम् आगता, [ तरणं तारः "ऋदोरप्" इति अवन्तात् प्रज्ञादित्वात् स्वार्थे अणि पश्चादव-शब्देन सह "सह सुपा" इति समासः ]

स्ववर्णना न स्वयमर्हतीति नियुज्य मां त्वन्मुखमिन्दुरूपम्।
स्थानेऽत्युदास्ते शशिनः प्रशस्तौ धरातुरासाहमिति स्म साऽऽह
॥१०६॥

तयेरितः प्राणसमः सुमुख्या गिरं परीहासरसोर्म्मिरां सः।

---

स्फुरन्ती दीप्यमानकान्तिः, किरणं विकिरतीत्यर्थः, तारा इव काचित् तारकेव, स्मितस्य ईषद्धास्यस्य, तत्तुल्यालोकस्य च, अंशुजालं किरणसमूहं, विततान विस्तारयामास; तदेव नलाय प्रीतिदानमिव ददौ इति भावः॥ १०५॥

स्वेति।—सा भैमी, धरातुरासाहं भूमीन्द्रं नलं, ["छन्दसि सहः" इति ण्विप्रत्ययस्य छन्दोविषयत्वात् भाषाया तदप्राप्तेः अत्र चौरादिकात् साहयतेः क्विप्, विशेषस्तु तृतीयसर्गे धरातुरासाहेति श्लोके उक्तः] इति एवम्, आह स्म उक्तवती। हे प्रियतम! इन्दुरूप चन्द्रात्मक, त्वन्मुखं तव वदनं, [कर्त्तृ] स्वयम् आत्मनैव, स्वस्य आत्मनः, वर्णना प्रशंसाकीर्त्तनं, स्तुतिरित्यर्थः, न अर्हति न युज्यते, "सतामेतदकर्त्तव्यं परनिन्दाऽऽत्मनः स्तुतिः" इत्यादिवचनादिति भावः, इति हेतोः, शशिनः चन्द्रस्य, प्रशस्तौ गुणवर्णनविषये, चन्द्ररूपात्मस्तुतौ इति भावः, मां भैमीं, नियुज्य आज्ञाप्य, अत्युदास्ते अतिशयेन उदासीनं स्थितं, स्थाने एतत् युक्तमेव। स्वस्य चन्द्रतुल्यतया चन्द्रगुणवर्णनेन आत्मगुणवर्णनमेव भवेदिति ते तूष्णीम्भावः युक्तः एव; इयत्-पर्य्यन्तं मया चन्द्रः वर्णितः, इदानीं त्वया वर्णनीयः इत्याशयेन भैमी चन्द्रस्तुतौ तं सोत्प्रासं प्रावर्त्तयत् इति भावः॥ १०६॥

तयेति।—सुमुख्या सुवदनया मधुरभाषिण्या वा, तया भैम्या, ईरितः पूर्वोक्तप्रकारेण अभिहितः, तथा चन्द्रवर्णने प्रेरितः इत्यर्थः, अत एव प्रत्युत्तरदानस्यौचित्यमिति भावः,

भूलोकसारः स्मितवाक् तुषारभानुं भणिष्यन् सुभगां बभाण ॥ १०७ ॥

तवानने जातचरीं निपीय गीतिं तदाकर्णनलोलुपोऽयम् ।
हातुं न जातु स्पृहयत्यवैमि विधुं मृगस्त्वद्वदनभ्रमेण ॥ १०८ ॥

---

प्राणसमः दमयन्त्या एव जीवनोपमः, एवञ्च परिहासोऽपि आनन्दायते स्म इत्याशयः, भूलोके मर्त्यभूमौ, सारः श्रेष्ठतमः पुरुषः, स नलः, एतेन सरसपरिहासमपि तस्य विदितमेवेत्यभिप्रायः ; स्मिता ईषत् हास्ययुक्ता, वाक् वचनं यस्य स तादृशः सन्, अत एव परिहाससूचनम् इति भावः, तुषारभानुं शीतकिरणं, चन्द्रमित्यर्थः, भणिष्यन् वर्णयिष्यन्, [ ऌटोलटः शता ] सुभगां सौभाग्यवतीं भैमीं, परीहासरसस्य नर्मोक्तिरूपास्वाद्यव्यापारस्य, उक्तिराम् उद्भावयित्रीम्, [ इगुपधेति कः, पूर्वेण षष्ठीसमासः ] गिरं वाचं, बभाण उवाच ॥ १०७ ॥

तवेति ।—हे प्रिये ! अयं परिदृश्यमानः एषः, मृगः हरिणः, चन्द्रकलङ्कात्मक इति भावः, तव भवत्याः, आनने मुखे, जातचरीं जातपूर्वां, [ भूतपूर्वे चरट् ] पूर्वं निःसृतामिति यावत्, गीतिं गानं, स्वरमाधुरीमिति यावत्, निपीय आस्वाद्य, सादरम् आकर्ण्य इत्यर्थः, तस्याः भवद्गीतेः, आकर्णनाय इदानीम् अपि श्रवणाय, लोलुपः अतितरां लुब्धः सन्, मृगाणां सङ्गीतप्रियत्वप्रसिद्धेरिति भावः, [ लोलुपः इति यङन्तात् पचाद्यचि, यङोऽचि चेति यङो लुक् ] त्वद्वदनभ्रमेण अतिसादृश्यात् तव मुखमिदमिति भ्रान्त्या, विधुं चन्द्रं, हातुं त्यक्तुं, परित्यज्य गन्तुमित्यर्थः, जातु कदाचित् अपि, न स्पृहयति न अभिलषति, अवैमि मन्ये, इति युग्ममिति शेषः ;

इन्दोर्भ्रमेणोपगमाय योग्ये जिह्वा तवास्ये विधुवास्तुमन्तम् ।
गीत्या मृगं कर्षति भन्त्स्यता किं पाशीबभूवे नयनद्वयेन ?॥ १०९॥

मृगाः हि गानप्रियाः भवन्तीति चन्द्रं त्वन्मुखभ्रान्त्या त्यक्तुं नेच्छति इत्यहं शङ्के इत्यर्थः ; अत एव सदैव चन्द्रे मृगस्तिष्ठति दृश्यते च लोकैरिति भावः ॥ १०८ ॥

इन्दोरिति।—हे प्रिये ! इन्दोः चन्द्रस्य, भ्रमेण भ्रान्त्या, अतिसादृश्यात इन्दुरेवेदम् इति तव मुखमेव चन्द्र इतिविच्येत्यर्थः, उपगमाय उपस्थितये, त्वन्मुखचन्द्रमुद्दिश्यैव मृगस्य आगमनायेत्यर्थः, योग्ये प्राप्तम अर्हे, तव भवत्याः, आस्ये मुखे, वर्त्तमाना इति शेष, जिह्वा रसना, [ कर्त्री ] गीत्या गानेन, कण्ठस्वरमाधुर्य्या इति यावत्, विधुः चन्द्ररूप, वास्तु वसतिगृहं, विधौ चन्द्रे, वास्तु वसतिः, अवस्थानमित्यर्थः इति वा,तत् विद्यते यस्य तं तादृशं विधुवास्तुमन्तं चन्द्रमध्यस्थम् अपि, मृगं कलङ्करूपिणं हरिणं, कर्षति आकर्षति, गीतेः मधुरतरत्वात् मृगस्य च प्रियगानत्वात् स्वसमीपम् आनयति इत्यर्थ ; तदाकर्षणसाधनमुत्प्रेक्षते—भन्त्स्यता संयंस्यता, आगमिष्यतः मृगस्य बन्धनं करिष्यता इत्यर्थः, नयनद्वयेन आनयनसाधनश्रुतियुगलेन, कर्णविवरे गीतध्वनिप्रवेशादेव तत्रागमनहेतोः श्रुतियुगलस्य आनयनसाधनत्वमवगन्तव्यम् ;"श्रवणद्वयेन"इति पाठस्तु स्पष्टार्थ एव युक्तश्च ; पाशीबभूवे किम् ? रज्जुस्वरूपं जातं किम् ? तद्रूपया बन्धनरज्ज्वा समाकर्षति किम् ? इत्यर्थः। अन्योऽपि शबरो गीत्या मृगम् आकृष्य पाशेन बध्नाति। भवन्मुखं निष्कलङ्कम् अमृताधिकं गीतियुक्तञ्च, चन्द्रस्तु सकलङ्कः इति भावः। चन्द्रवर्णनावसरेऽपि मध्ये मध्ये भैमीमुखवर्णना अनुरागातिशयसूचनार्था। अयं श्लोकः क्षेपकः इति केचित् ॥ १०९ ॥

आप्यायनाद्वा रुचिभिः सुधांशोः शैत्यात्तमःकाननजन्मनो वा।
यावन्निशायामथ घर्मदुःस्थस्तावत् व्रजत्यह्नि न शब्दपान्थः॥११०॥

---

गगनस्थोऽपि मृगो मर्त्यवासिन्याः भैम्याः मुखगीतिं कथं श्रोतुमर्हतीत्याशङ्क्याह, आप्यायनादिति।—शब्दः ध्वनिरूपः, पान्थः नित्यपथिकः, सुधांशोः चन्द्रस्य, रुचिभिः प्रभाभिः, अमृतवर्षिणीभिरिति यावत्, आप्यायनात् वा वर्द्धितबलत्वात् वा, उदितचन्द्रायां निशायां तत्प्रभाभिः आप्यायनेन गतिशक्तेरौत्कर्ष्यात् वेत्यर्थः, तमः अन्धकार एव, काननं वनं, कृष्णवर्णत्वेन छायातुल्यत्वादिति भावः, तस्मात् जन्म यस्य तादृशात् गाढान्धकारजातात्, शैत्यात् वा शीतलत्वात् वा, अनुदितचन्द्रायां निशायां शैत्याधिक्यात् वा हेतोरित्यर्थः, असति तापे शैत्यस्य स्वाभाविकत्वात् तमसि वने च तापाभावेन शैत्यमेव अनुभूयते लोकैरिति भावः, तेजसः अभावे तमसः सम्भवात् औष्ण्याभावाच्च शैत्यमिति बोद्धव्यम्; निशायां रात्रौ, यावत् यावत्परिमितमध्वानं, व्रजति गच्छति,गन्तुं शक्नोतीत्यर्थः, अह्नि दिवसे, प्रखरसूर्य्यसन्तापे इति यावत्, घर्मेण आतपेन, दुःस्थः सन्तप्तः सन्, अथ कार्त्स्न्येन, सम्पूर्णतयेत्यर्थः, ("मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः) तावत् तत्परिमितमध्वानं, न, व्रजति इति क्रियया अन्वयः, तस्मात् दिने सूर्य्यतापेन क्लिष्टः अल्पमेव गन्तुं शक्नोति रात्रौ च तापाभावात् बहु गच्छति इत्यर्थः। पथिको यथा रात्रौ शैत्यात् दूरं गच्छति, दिने चाल्पम्, एवं शब्दाः अपि रात्रौ जनकोलाहलाभावेन निस्तब्धतया अतिदूरेऽपि श्रूयन्ते, दिवा तु लोकानामविरतकलकलेन मुखरतया कियतोऽपि दूरात् न तथा इति भावः। दूरश्रवणप्रतिपादकोऽयं श्लोकः॥ ११०॥

दूरेऽपि तत्तावकगानपानाल्लब्धावधिः स्वादुरसोपभोगे ।
अवज्ञयेव क्षिपति क्षपायाः पतिः खलु स्वान्यमृतानि भासः
॥ १११ ॥

अस्मिन्न विस्मापयतेऽयमस्मांश्चक्षुर्बभूवेष यदादिपुंसः ।
तदत्रिनेत्रादुदितस्य तन्वि ! कुलानुरूपं किल रूपमस्य ॥११२॥

---

दूरेऽपीति ।—हे प्रिये ! तत् तस्मात्, अस्य पान्थस्य निशायां दूराध्वगमनसामर्थ्यादित्यर्थः, खलु निश्चितं, क्षपायाः निशायाः, पतिः प्रभुः, चन्द्रः इत्यर्थः, दूरे अपि अतितरां देशव्यवधाने अवतिष्ठमानोऽपीत्यर्थः, तावकं त्वदीयं, गानं गीतिः, तस्य पानात् समास्वादनात्, सादरश्रवणात् हेतोरित्यर्थः, स्वादुरसस्य मधुरास्वाद्यस्य, उपभोगे स्वादनविषये, माधुर्य्यातिशयानुभवे विषये इत्यर्थः, लब्धावधिः प्राप्तमर्य्यादः सन्, अवज्ञया एव अनादरेणैव, अनुभूतभवद्गीतमाधुर्य्यापेक्षया अल्पमाधुर्य्यतया अपकृष्टत्वात् अश्रद्धयेव इत्यर्थः, स्वानि स्वकीयानि, अमृतानि पीयूषाणि, तत्स्वरूपा इत्यर्थः, भासः किरणानि, क्षिपति अधः मुञ्चति । अयं श्लोको भिन्नः एव न तु युग्मम् ॥ १११ ॥

अस्मिन्निति ।—तन्वि ! हे कृशाङ्गि ! एषः चन्द्रः, आदिपुंसः श्रीविष्णोः, यत् चक्षुः वामं नेत्रं, बभूव सञ्जज्ञे, अस्मिन् इह चक्षुर्भवने विषये, अयं चक्षुर्भूतः चन्द्रः, अस्मान् जनादीन्, न विस्मापयते आश्चर्य्यं न प्रापयति, अत्रार्थे अस्माकम् आश्चर्य्यबोधो न भवति इत्यर्थः ; [ "नित्यं स्मयतेः" इत्यात्वं, "भीस्म्योर्हेतुभये" इति तङ् । अस्मानिति जनान्तरापेक्षया बहुत्वम् ] यतः, अत्रिनेत्रात् तन्नामकमुनेर्नयनात्, उदितस्य उत्पन्नस्य, अस्य चन्द्रस्य, तत् चक्षुर्भवनं, कुलानुरूपं वंशोचितम्, उत्पत्त्यनुकूलमित्यर्थः, रूपं स्वभावः, किल एवं सम्भावयामीत्यर्थः,

आभिर्मृगेन्द्रोदरि ! कौमुदीभिः क्षीरस्य धाराभिरिव क्षणेन ।
अक्षालि नीली रुचिरम्बरस्था तमोमयीयं रजनीरजक्या ॥११३॥
पयोमुचां मेचकिमानमुच्चैरुच्चाटयामास ऋतुः शरत् या ।

---

निश्चये वा ; चक्षुःस्वरूपात् कारणात् जातस्य चक्षुर्भवनम् उचितम् एव, कार्य्यस्य कारणानुरूपभावित्वस्यौचित्यादिति भावः ; तस्मात् अस्य पुराणपुरुषचक्षुर्भवने न किञ्चित् अस्माकं चित्रम् इति निष्कर्षः ॥ ११२ ॥

आभिरिति ।—हे मृगेन्द्रोदरवत् सिंहजठर इव, उदरं कृशजठरं यस्याः सा तादृशि । [ नासिकोदरेति ङीष् ] रजनी रात्रिरेव, रजकी वसनप्रक्षालकजातिविशेषस्त्री तया, [ ष्वुनः षित्वात् ङीष् ] क्षीरस्य दुग्धस्य, धाराभिः प्रवाहैः इव स्थिताभिः, आभिः दृश्यमानाभिः, कौमुदीभिः धवलतराभिः ज्योत्स्नाभिः, अम्बरस्था गगनमण्डले तिष्ठन्ती, अन्यत्र—वसनस्थिता, तमोमयी अन्धकारात्मिका, इयम् एषा, नीली कज्जलवत् कृष्णवर्णा, [ ओषधिप्राणिजातित्वाभावात् नीलाव नीलीति ङीप् समर्थनीयः ] रुचिः प्रभा, अन्यत्र—गाढान्धकारतुल्या प्रगाढ़मलिनता, क्षणेन क्षणमात्रेण, अक्षालि अमार्जि, अन्धकारापनोदनेन शुभ्रीकृता, धौतीकरणेन धवलीकृता च इत्यर्थः; रजक्या वसनस्था कालो कान्तिर्दुग्धधाराभिः क्षणेन क्षाल्यते, तदुक्तं कलाकोषे "तैलं घृतेन तच्चोष्ण-जलैर्दुग्धेन कज्जलम् । नाशयेदम्बरस्थं तु मलं क्षारेण सोष्मणा ॥" इति । चन्द्रिकाभिः गगनं निर्मलीकृतम् इति भावः ॥ ११३ ॥

पय इति ।—या शरत् ऋतुः संवत्सरात्मककालस्य शरदृत्वाख्यः अंशः, पयोमुचां मेघानाम्, उच्चकैः अतिशयितम् अपि, वर्षाकालीनत्वादिति भावः, मेचकिमानं कालिमानं,

अपारि वामोरु! तयाऽपि किञ्चिन्न प्रोञ्छितुं लाञ्छनकालिमाऽस्य

॥ ११३ ॥

एकादशैकादशरुद्रमौलीनस्तं यतो यान्ति कला: किमस्य ?।
प्रविश्य शेषाश्च भवन्ति पञ्च पञ्चेषुतूणीमिषवोऽर्द्धचन्द्रा: ?

॥ ११५ ॥

---

कृष्णवर्णत्वमित्यर्थ:, [ वर्णवाचित्वादिमनिच् ] ( "कालश्यामलमेचका:" इत्यमर: ) उच्चाटयामास अपनोदयामास, दूरीचकारेत्यर्थ:, वामोरु! हे रमणीयोरुयुगशालिनि! तयाऽपि शरदृतुनाऽपि, कालिमापनयने दृष्टसामर्थ्ययाऽपीति भाव:, अस्य चन्द्रस्य, लाञ्छनकालिमा कलङ्कात्मककृष्णवर्णता, किञ्चित् अल्पम् अपि, प्रोञ्छितुं मार्जितुं, विशोधयितुमित्यर्थ:, न अपारि न अशाकि, न समर्थया अभावि इत्यर्थ:, तस्य यावच्चन्द्रावस्थायित्वादिति भाव:। शरदच्छे चन्द्रे मलिन: कलङ्क: अतितरां शोभते इति तात्पर्य्यम् ॥ ११४ ॥

एकेति।—अस्तम् अस्ताचलम् अदर्शनं वा, यत: गच्छत:, अस्य चन्द्रस्य, एकादश एकादशसङ्ख्यका:, कला: अंशा:, एकादशाना तत्सङ्ख्यकाना, रुद्राणां तत्संज्ञकदेवताना, मौलीन् शिरांसि, एकादशानिति भाव:, यान्ति किम् ? गच्छन्ति किम् ? तेषां चन्द्रचूडत्वादिति भाव:, शेषा: अवशिष्टास्तु, पञ्च पञ्चसङ्ख्यका:, कला: पुन: इति शेष:, पञ्चेषो: पञ्चशरस्य कामस्य, तूणीम् अल्पम् इषुधिम्, [ अल्पार्थविवक्षया स्त्रीत्वे गौरादित्वात् ङीप्-प्रत्यय: ] प्रविश्य ढौकित्वा, तूणीमध्ये गत्वेत्यर्थ:, अर्द्धचन्द्रा: अर्द्धचन्द्राकारत्वात् अर्द्धचन्द्राख्या:, इषव: शरा:, पञ्चेति भाव:, भवन्ति किम् ? जायन्ते किम् ? पञ्चसङ्ख्यकार्द्धचन्द्राख्यबाणरूपेण अवस्थिता: किम् ? इत्यर्थ:,

निरन्तरत्वेन विधाय तन्वि! तारासहस्राणि यदि क्रियेत।
सुधांशुरन्यः स कलङ्कमुक्तस्तदा त्वदास्यश्रियमाश्रयेत॥ ११६॥
यत् पद्ममादित्सु तवाननीयां कुरङ्गलक्ष्मा च मृगाक्षि! लक्ष्मीम्।

आकृतिमाहात्म्यात् उद्दीपकत्वाच्चेति भावः। विनाशसमये अपि अयं परोपकारनिरतः इति ध्वन्यते॥ ११५॥

सन्ध्यावर्णनाप्रसङ्गेन तदङ्गीभूतं चन्द्रं वर्णयन् राजा अन्तराऽन्तरा प्रियामुखचन्द्रमपि हर्षोच्छ्वासेन वर्णयति, निरन्तरेति।—तन्वि! हे कृशाङ्गि! ताराणां नक्षत्राणां, सहस्राणि दशशतानि, असङ्ख्यानि नक्षत्राणीति यावत्, निरन्तरत्वेन निविड़त्वेन, अन्योऽन्यसम्बन्धतया निरवकाशत्वेनेति यावत्, विधाय एकीकृत्य, आकृत्या चन्द्रवत् वृहत्करणार्थं भास्वरत्वनिष्पादनार्थञ्च परस्परं संयोज्येत्यर्थः, यदि चेत्, अन्यः अपरः, सुधांशुः चन्द्रः, कलङ्करहितः इति भावः, क्रियेत निर्मीयेत, विधिनेति शेषः, तदा तर्हि, कलङ्केन मृगात्मकलाञ्छनेन, तज्जन्यापवादेन च, मुक्तः विरहितः, ताराणाम् अकलङ्कत्वात् तन्मयत्वाच्चेति भावः, स सुधांशुः, त्वदास्यस्य तव मुखस्य, श्रियं शोभाम्, आश्रयेत अवलम्बेत, अनुकर्त्तुं शक्नुयादित्यर्थः, अयं परिदृश्यमानचन्द्रस्तु न, कलङ्कमलिनत्वादिति भावः [क्रियातिपत्तेः अविवक्षितत्वात् लृङ्भावः]॥ ११६॥

यदिति।—मृगाक्षि! हे कुरङ्गनयने! यत् यस्मात्, पद्मं कमलं, तव भवत्याः, आननीयां मुखसम्बन्धिनीं, लक्ष्मीं शोभां, ["न लोका—"इति षष्ठीनिषेधः] आदित्सु जिघृक्षु, ग्रहीतुकाममित्यर्थः, तथा कुरङ्गलक्ष्मा च मृगाङ्कः चन्द्रश्च, तव आननीयां लक्ष्मीम् आदित्सुः ग्रहीतुकामः, अत्र लिङ्गविपरिणामेन

एकार्थलिप्साकृत एष शङ्के शशाङ्कपङ्केरुहयोर्विरोधः ॥ ११७ ॥
लब्धं न लेखप्रभुणाऽपि पातुं पीत्वा मुखेन्दोरधरामृतं ते ।
निपीय देवैर्विघसीकृतायां घृणां विधोरस्य दधे सुधायाम् ॥११८॥

---

अन्वयः, वर्त्तते इति शेषः, तत एव इति अध्याहार्य्यं, यत्तदोर्नित्यसम्बन्धात्, शशाङ्कपङ्केरुहयोः तयोः चन्द्रपद्मयोः, एषः प्रसिद्धः, विरोधः विद्वेषः, चन्द्रप्रकाशे कमलम्लानता, कमलविकाशे चन्द्रादर्शनरूपपरस्परासहिष्णुतेति भावः, एकः अभिन्नः, अर्थः वस्तु, तव मुखशोभारूपमिति यावत्, तस्य लिप्सा प्राप्तिवाञ्छा, तया कृतः तन्निमित्तः सञ्जात एव इत्यर्थः, शङ्के इति मन्ये, अहमिति शेषः। एकस्यैव द्रव्यस्याभिलाषिणां लोकानां परस्परं विरोधः प्रायशो दृश्यते। चन्द्रपद्मयोरपि विरोधः प्रसिद्धः एव। एवञ्च चन्द्रपद्मयोर्योऽयं सुप्रसिद्धः सहज-विरोधः, स तव आननलक्ष्मीलिप्सुतया परस्परप्रतिद्वन्द्विताकृत इति मन्ये इति निष्कर्षः। चन्द्रपद्माभ्यां सकाशात् ते मुखम् अधिकमिति भावः ॥ ११७ ॥

लब्धमिति।—हे प्रिये! लेखानां देवानां, प्रभुणाऽपि अधीश्वरेणापि,अन्येषां तु का कथा? साक्षात इन्द्रेणापि इत्यपि-शब्दार्थः, पातुं स्वदितुं, न लब्धं न प्राप्तं, कृतप्रयत्नस्य अपि तस्य त्वया अवरणात् तेन दुष्प्रापम्, अत एव केनापि अनुच्छिष्ट-मिति भावः, ते तव, मुखेन्दोः वदनसुधाकरस्य, अधररूपम् ओष्ठात्मकम्, अमृतं सुधां, पीत्वा आस्वाद्य, अहमिति शेषः, देवैः सर्वैः अपि अमरैः, निपीय निःशेषं पीत्वा, विघसीकृतायां भुक्तशेषीकृतायाम, उच्छिष्टीकृतायामिति यावत्, ("विघसो यज्ञशेषभोजनशेषयोः" इत्यमरः) अस्य परिदृश्यमानस्य वर्ण्य-मानस्य च, विधोः चन्द्रस्य, सुधायाम् अमृते विषये, घृणां

एनं स बिभ्रद्विधुमुत्तमाङ्गे गिरीन्द्रपुत्रीपतिरोषधीशम्।
अश्नाति घोरं विषमब्धिजन्म धत्ते भुजङ्गांश्च विमुक्तशङ्कः॥११९॥
नास्य द्विजेन्द्रस्य बभूव पश्य दारान् गुरोर्यातवतोऽपि पातः।

जुगुप्सां, दधे धारयामि, देवैर्विषमीकृतत्वादेवेति भावः। अन्योऽपि उच्छिष्टभोजने जुगुप्सां धारयति इति दृश्यते। चन्द्रसुधायाः सकाशात् त्वदधरामृतं स्वादुतरम् इति निष्कर्षः॥ ११८॥

एनमिति।—सः चन्द्रचूडः अहिभूषणः कालकूटभुक् इत्यादि नाम्ना जगति प्रसिद्धः, गिरीन्द्रपुत्रीपतिः पार्वतीवल्लभः शम्भुः, ओषधीशं वीरुधादीनामारण्यभेषजानां पतिम्, एनम् दृश्यमानं, विधुं चन्द्रम्, उत्तमाङ्गे शिरसि, बिभ्रत् धारयन्, इवेति शेषः, विमुक्ता उज्झिता, शङ्का त्रासः येन स तादृशः, विषपानादौ निर्भयः सन्नित्यर्थः, शिरःस्थितचन्द्रस्य ओषधीशत्वात् ओषधीनाञ्च विषवीर्य्यनाशकत्वादिति भावः, अब्धिजन्म समुद्रमन्थनोत्पन्नं, घोरं दारुणम् अपि, विषं कालकूटम्, अश्नाति खादति, भुजङ्गांश्च सर्पांश्च, वासुकिप्रभृतिसर्पान् इत्यर्थः, [जात्यभिप्रायेणैकवचनम्] धत्ते धारयति, कण्ठादौ इति शेषः, भूषणत्वेनेति भावः; ओषधिस्वामिनः अस्य शिरसि धारणादेव निःशङ्कं विषं भक्षयति सर्पांश्च धारयति, अतः शम्भोरपि उपकारकत्वेन पूज्यः श्रेष्ठश्च अयमिति निष्कर्षः॥ ११९॥

नेति।—हे प्रिये! गुरोः बृहस्पतेः पितुश्च, दारान् भार्य्यां गर्भधारिणीव्यतिरिक्तामपरां भार्य्याञ्च, यातवतः अपि गतवतोऽपि, गुरुतल्पगामिनोऽपि इत्यर्थः, द्विजेन्द्रस्य द्विजराजस्य ब्राह्मणश्रेष्ठस्य च, अस्य चन्द्रस्य कस्यचिज्जनस्य च, पातः स्थानात् भ्रंशः पातित्यञ्च, तेन महता पापेनेति भावः, न

प्रवृत्तयोऽप्यात्ममयप्रकाशान् नह्यन्ति न ह्यन्तिमदेहभासान्
॥ १२० ॥

बभूव न जज्ञे, इति पश्य आलोकय, चित्रमेतत् विलोकय इत्यर्थः, त्वमिति शेषः ; गुरुदारगमनस्य महापातकत्वे मनुः,—"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुस्तत्संसर्गी च पञ्चमः ॥" इति। अस्य प्रायश्चित्त-विवेके शूलपाणिकृतव्याख्या यथा—"अत्र गुरुपदं पितृपरम्, अङ्गनापदञ्च विमातृपरमिति। महापातकस्य पातित्यञ्चाह गौतमः प्रायश्चित्ततत्त्वे—'पञ्चैतानि महापातकानि कृत्वा ब्राह्मणः सद्भिर्नानुभाष्यः नानुग्राह्य अभिशस्तः सर्वकर्मविवर्जितः पतिततमो भवति' इति"। अथवा यत् न पतितो बभूव, तत् युक्तम् एव, इत्यत्राह—हि यतः, प्रवृत्तयः धर्माधर्महेतुभूत-कर्मणामारम्भा अपि, आत्ममयः निजस्वरूप एव, प्रकाशः तेजः येषां तान् प्रकाशान्तरनिरपेक्षान्, स्वप्रकाशस्वरूपान् इत्यर्थः, तेजोमयानिति यावत्, अन्यत्र—आत्ममयः परमात्म-विषयकः, प्रकाशः ज्ञानं येषां तान् परमात्मस्वरूपातिरिक्त-प्रकाशानभिज्ञान् स्वप्रकाशात्मवादिनः, ब्रह्मज्ञानिनः इत्यर्थः, अन्तिमदेहं तेजोरूपशरीरं, पौर्णमास्यां पूर्णषोड़शकलतया सम्पूर्णशरीरं वा, अन्यत्र—जीवब्रह्मणोरभेदज्ञानोदयेन अनन्तर-भाविमोक्षत्वात् देहान्तरग्रहणासम्भवेन प्राचीनशरीरप्रवाहा-पेक्षया तात्कालिकमेव शेषशरीरम्, भासान् प्राप्तान्, चन्द्र-पक्षे—पूर्णाङ्गान्, अन्यत्र—जीवन्मुक्तान् पुरुषान् इति यावत्, न नह्यन्ति न बध्नन्ति, शुभाशुभफलसम्बन्धेन न वशीकर्त्तु-मर्हन्तीत्यर्थः। तेषां तेजोविशेषेण प्रत्यवायो न विद्यते इति प्रामाणिकवचनात् तेजोरूपस्य अस्य चन्द्रस्य यत् पातो न

स्वधाकृतं यत् तनयैः पितृभ्यः श्रद्धापवित्रं तिलचित्रमम्भः ।
चन्द्रं पितृस्थानतयोपतस्थे तदङ्करोचिःखचिता सुधेव ॥१२१॥
पश्योच्चसौधस्थितिसौख्यलक्ष्ये त्वं केलिकुल्याम्बुनि बिम्बमिन्दोः ।

अभूत् तत् युक्तमेव, नात्र चित्रमिति भावः। तत्र चन्द्रः स्वयम् आत्ममयप्रकाशः पौर्णमास्याम् अन्तिमदेहं सम्पूर्णतां प्राप्तश्च; ब्राह्मणश्रेष्ठोऽपि ब्रह्मज्ञानसम्पन्नः जीवन्मुक्तश्च भवितुमर्हति ॥ १२० ॥

स्वधेति।—तनयैः पुत्रैः, श्रद्धया आस्तिक्येनेत्यर्थः, परलोकास्तित्वबुद्ध्या वितीर्णत्वात् इति यावत्, श्रद्धेति पितृलोकप्राप्तौ हेतुगर्भविशेषणम्; पवित्रं शुचि, तिलैः कृष्णतिलैः, तदाख्यप्रसिद्धद्रव्यविशेषैरित्यर्थः, चित्रम् एकाधिकवर्णविशिष्टं, मिश्रितमिति यावत्, पितृभ्यः लोकान्तरप्रस्थितस्वपूर्वजेभ्यः, स्वधाकृतं निवापीकृतं, "स्वधा" इत्युच्चार्य्य दत्तमित्यर्थः, यत् अम्भः उदकं, पितृस्थानतया "चन्द्रो वै पितृलोकः" इति श्रुतेः पितृलोकतया, लोकान्तरप्रस्थितपूर्वजानामावासतयेति यावत्, चन्द्रं विधुम्, उपतस्थे उपगतं, चन्द्रेण सङ्गतम् अभूदित्यर्थः, तत् कृष्णतिलमिश्रजलमेव, अङ्कस्य कलङ्कस्य, कलङ्कात्मकमृगस्य इत्यर्थः, या रोचिः कान्तिः, कृष्णवर्णप्रभेति यावत्, तया खचिता मिश्रिता, सुधा पीयूषं, वर्त्तते इति शेषः, कृष्णतिला एव कलङ्कः, तत्संलग्नं जलमेव पीयूषं, न तु अन्यः कलङ्को न चान्यत पीयूषमित्यर्थः ॥ १२१ ॥

पश्येति।—हे प्रिये! त्वं भवती, उच्चसौधस्थित्या उन्नतप्रासादे अवस्थानेन हेतुना, सौख्येन निरन्तरायम्, अक्लेशेनेत्यर्थः, [ स्वार्थे सुखिनः भावः इति भावे वा ष्यञ् ] सौक्ष्म्येति पाठे —सूक्ष्मत्वेन लक्ष्ये, उच्चतरदेशस्थितं प्रत्यक्षोदेशस्थितस्य वस्तुनः

चिरं निमज्ज्येह सतः प्रियस्य भ्रमेण यच्चुम्बति राजहंसी ॥१२२॥
सौवर्गवर्गैरमृतं निपीय कृतोऽह्नि तुच्छः शशलाञ्छनोऽयम्।
पूर्णोऽमृतानां निशि तेऽत्र नद्यां मग्नः पुनः स्यात् प्रतिमाच्छलेन
॥१२३॥

सूक्ष्मतया प्रतिभानादिति भावः ; लक्ष्ये दृश्ये, केलिकुल्यायाः क्रीडार्थं निर्मितस्वल्पजलकृत्रिमनद्याः, "त्वम्" इत्यत्र "त्वत्" इति पाठे—तव भवत्याः केलिकुल्यायाः इत्यन्वयः ; अम्बुनि जले, प्रतिफलितमिति शेषः, राजहंसी लोहितचञ्चुचरणशुभ्रवर्णहंसीविशेषः, इह केलिकुल्याम्बुनि, निमज्ज्य निमग्नीभूय, चिरं दीर्घकालं, सतः अन्तर्वर्त्तमानस्य, प्रियस्य राजहंसस्य, भ्रमेण भ्रान्त्या, शुभ्रतासाम्यादिति भावः, यत् इन्दोः चन्द्रस्य, बिम्बं प्रतिच्छायां,चुम्बति स्वचञ्च्वा स्पृशति, चुम्बनं करोतीत्यर्थः, तत् पश्य अवलोकय ॥१२२॥

सौवर्गेति।—स्वर्गे भवाः सौवर्गाः देवाः, तेषां वर्गैः वृन्दैः, अह्नि दिवसे, अमृतं सुधा, चन्द्रस्थेति शेषः, निपीय निःशेषेण पीत्वा, तुच्छः रिक्तः, अमृतशून्य इत्यर्थः, कृतः विहितः, अयं परिदृश्यमान एषः, शशलाञ्छनः मृगाङ्कः चन्द्रः, निशि रात्रौ, ते तव, अत्र अस्यां केलिकुल्यायां, प्रतिमाच्छलेन प्रतिबिम्बव्याजेन, मग्नः अन्तःप्रविष्टः सन्, पुनः भूयः, अमृतानां जलानां, जलैरित्यर्थः, अथच पीयूषैः, [ तृप्त्यर्थत्वात् करणे षष्ठी ] पूर्णः भरितः, स्यात् भवेत्, इति अहं सम्भावयामि इति शेषः। एतेन केलिकुल्याम्बुनः अमृतवत् स्वादुत्वं सूचितम्। अह्नि तुच्छः कृतोऽपि पुनः क्रमेण अमृतैः पूर्णः सन् रात्रौ तव क्रीडानद्यां प्रतिमाव्याजेन मग्नः पुनः पानभयात् इव पलाय्य निलीनः स्यात् इति अहं शङ्के इति वा ॥ १२३ ॥

समं समेते शशिनः करेण प्रसूनपाणाविह कैरविण्याः ।
विवाहलीलामनयोरिवाह मधुच्छलत्यागजलाभिषेकः ॥१२४॥
विकासिनीलायतपुष्पनेत्रा मृगीयमिन्दीवरिणी वनस्था ।
विलोकते कान्तमिहोपरिष्टान्मृगान्तरेषाऽऽननचन्द्रभाजम् ॥१२५॥

समेमिति ।—इह तव अस्यां केलिकुल्यायां, कैरविण्याः कुमुदिन्याः, प्रसूने पुष्पात्मके, पाणौ हस्ते, शशिनः चन्द्रस्य, करेण रश्मिना, अथच पाणिना, समं सह, समेते सङ्गते सति, मधु पुष्परसः एव, छलं व्याजः यस्य तादृशस्य, त्यागजलस्य कन्यादानसम्बन्धिसङ्कल्पोदकस्य, अभिषेकः अभिषिञ्चनं, [ कर्त्ता ] अनयोः शशिकैरविण्योः, विवाहलीला परिणय-विलासम, आह इव स्पष्टं सूचयति इव । चन्द्रकरस्पर्शमात्रेण कुमुदानि विकसितानि मकरन्दपूर्णानि च जातानीति भावः । विवाहे उभयोः पाणिमिलनं, पाणौ दानजलाभिषेकोऽपि भवति इति शास्त्रीयव्यवहारः ॥ १२४ ॥

विकासीति ।—हे प्रिये ! इह तव केलिकुल्यायां, वनस्था जलनिवासिनी काननिवासिनी च, ( "वने सलिलकानने" इत्यमरः ) तथा विकासि प्रस्फुटितं, नीलं कृष्णवर्णम्, आयतं विस्तृतञ्च, पुष्पं कुसुमम् एव, नेत्रं लोचनं यस्याः सा, अन्यत्र — विकासिनीलायतपुष्पवत् नेत्रं यस्याः सा तादृशी, इयं प्रत्यक्ष-दृश्या, इन्दीवरिणी नीलोत्पलिनी, नीलोत्पललता इत्यर्थः, अत्र 'यत्' इति पदम् ऊहनीयं, परतोऽवस्थित-'तत्'शब्द-साहचर्य्यात् ; यत् यस्मात्, मृगी हरिणी, वनस्थत्वात् विकासिनीलायतपुष्पनेत्रत्वाच्च हरिणीस्वरूपेत्यर्थः, तत् तस्मात्, एषा इन्दीवरिणीरूपा मृगी, उपरिष्टात् ऊर्द्धदेशे, गगनमण्डले इत्यर्थः, अस्मिन् उद्यानसौधे च, आननम् इव सामर्थ्यात् तव

तपस्यतामम्बुनि कैरवाणां समाधिभङ्गे विबुधाङ्गनायाः ।
अवैमि रात्रेरमृताधरोष्ठं मुखं मयूखस्मितचारु चन्द्रम् ॥ १२६ ॥

वदनतुल्यः, यः चन्द्रः विधुः, अन्यत्र—आननं चन्द्र इव, तद्भाजं तत्रावस्थितं कान्तं भर्त्तारं, तुल्यजातीयं स्वप्रियमिति यावत्, अन्यत्र—सुन्दरं, मृगं हरिणं, कलङ्कात्मकमिति यावत्, अन्यत्र—मृगनाभिचित्रितपत्रावलीञ्च, विलोकते पश्यति, इवेति शेषः, अनुरागाधिक्यादिति भावः। विकसितकुसुम-नेत्राणि ऊर्द्ध्वप्रसारितानि दृश्यन्ते, तर्हि प्रायेण चन्द्रस्थम् उपरि वर्त्तमानं निजभर्त्तारं मृग मृगी पश्यति इति। त्वदाननम् एव यः चन्द्रः तत्रस्थं चन्द्रत्वात् अनुरागमृगम् उपरि-ष्टात् पश्यति : त्वं प्रासादोपरि वर्त्तसे, इयञ्च अधोदेशे वर्त्तते; नर्नति पदच्छेदं कृत्वा चन्द्रभाजं निजप्राणे मृगम् उपरि-ष्टान्न पश्यतीति न किन्तु पश्यत्येवेति वा व्याख्येयम्। अन्याऽपि वनस्था मृगी हि नीलायतनेत्रा सती स्वकान्तं मृगम् इतस्ततः विलोकयति इत्यर्थः ॥ १२५ ॥

तपस्यतामिति।—हे प्रिये! अम्बुनि जले, तपस्यतां तपः कुर्वतां, सदा जलमध्ये अवस्थाय तपस्यामाचरतामित्यर्थः, [ "कर्मणो रोमन्थतपोभ्याम्" इति क्यप्, तपसः परस्मैपदञ्चेति शता ] कैरवाणां कुमुदानां,तद्रूपाणां तपस्विनामित्यर्थः, समाधेः ध्यानस्य, दिवा सङ्कोचरूपस्येव इति भावः, भङ्गे त्याजने विषये निमित्ते वा, विकासनेन, सङ्गीतादिना चित्तविकारोत्पादनेन च इति भावः, रात्रेः रात्रिरूपिण्याः, विबुधाङ्गनायाः सुर-कामिन्याः, अप्सरसामित्यर्थः, चन्द्रं विधुमेव, अमृतं पीयूषम् एव, अधरोष्ठः रदनच्छदो यस्य तं तादृशम्, अन्यत्र—अमृतम् अमृततुल्यः, तद्वत् स्वादुरित्यर्थः, अधरोष्ठः यस्य तत् तादृशं,

अल्पाङ्कपङ्का विधुमण्डलीयं पीयूषनीरा सरसी स्मरस्य।
पानात् सुधानामजलेऽप्यमृत्युं चिह्नं बिभर्त्त्यत्र भवं स मीनम्
॥ १२७ ॥

यद्वा—अमृतम् अधरं तुच्छं यस्मात् पीयूषादपि अधिकरसः इत्यर्थः, ओष्ठः यस्य तादृशं, तथा मयूखः किरणः, स्मितमिव ईषद्धास्यमिव, अन्यत्र—मयूख इव स्मितं, तत्समाधिभङ्गात् एव चन्द्रकरवत् उज्ज्वलं यत् स्मितमित्यर्थः, धावल्यसाम्यादिति भावः, तेन चारु रमणीयं, [ चन्द्रविशेषणे लिङ्गविपरिणामः ] मुखम् आननम्, आननस्वरूपमित्यर्थः, अवैमि मन्ये, अहमिति शेषः। देवाङ्गनानाम् अपि एवंविधं मुखं रात्रौ जले तपस्यतां दुश्चरं तपश्चरतामपि मुनीनां समाधिभङ्गं करोति॥ १२६ ॥

अल्पेति।—अल्पः क्षुद्रः, स्वल्पस्थानव्यापीत्यर्थः, अङ्कः कृष्णवर्णचिह्नमेव, पङ्कः कर्दमः, कृष्णवर्णेन तुल्यत्वादिति भावः, यस्यां सा तादृशी, तथा पीयूषमेव अमृतमेव, नीरं जलं, स्वादुत्वद्रवत्वसामान्यादिति भावः, यस्या सा तादृशी, इयं परिदृश्यमाना एषा, विधुमण्डली चन्द्रबिम्बं, स्मरस्य कामस्य, सरसी विशालं सरः एव, अवगाहनकाले नियतकामगात्रसंस्पृष्टाया अस्याः दर्शनस्य कामोद्दीपकत्वादिति भावः, अत एव सः स्मरः, अत्र अस्यां, विधुमण्डलीरूपकामसरस्यामित्यर्थः, भवं समुत्पन्नं, सुधानामितदीयामृतानां, पानात् सेवनात्, अजले जलरहिते अपि स्थले, जलाभावे अपि वा, अमृत्युं मरणरहितं, मीनं मत्स्यं, चिह्नं लक्षणं, मीनध्वजोऽयमिति स्वप्रख्यापकं व्यञ्जनमिति यावत्, अथच सुधासरोजातत्वात् अनुमापकं लिङ्गं, बिभर्त्ति धारयति; मीनाः हि जलात् बहिर्भूताः म्रियन्ते एव, अयं तु अजलेऽपि न म्रियते, तस्मात् चन्द्रामृतसरसी-

ताराखिभूषा शशिजह्नुजाभृच्चन्द्रांशुपांशुच्छुरितद्युतिर्द्यौः।
छायापथच्छद्मफणीन्द्रहारा स्वं मूर्त्तिमाह स्फुटमष्टमूर्त्तेः
॥ १२८ ॥
एकैव तारा मुनिलोचनस्य जाता किलैतज्जनकस्य तस्य।

---

भवत्वेन सदा अमृतपानात् जलाभावेऽपि मृत्युरहितोऽयम् इति सर्वं युक्तमित्यर्थः॥ १२७॥

तारेति।—तारा: नक्षत्राणि एव, अस्थीनि कीकशानि, शौक्ल्यात् खण्डखण्डाकारेण अवस्थानाच्चेति भाव:, तान्येव भूषा अलङ्कारा: यस्या: सा तादृशी,तथा शशी चन्द्र एव,जह्नुजा गङ्गा, शुक्लत्वसाम्यादिति भाव:, ता, यद्वा—शशिनं चन्द्रं, शिखरीभूतचन्द्रञ्च, जह्नुजाम् आकाशगङ्गां, जटान्त:स्थगङ्गाञ्च, बिभर्त्ति धारयतीति सा तादृशी, तथा चन्द्रांशव: इन्दुकरा एव, पांशव: भस्मानि, अत्रापि शुभ्रत्वसाम्यादिति भाव:, तै: छुरिता रञ्जिता, मिश्रितेत्यर्थ:, द्युति: शोभा यस्या: सा तादृशी, तथा छायापथ: तिमिराच्छन्ननिशायां गगने दृश्यमाना दण्डाकारा दक्षिणोत्तरस्था धवला रेखा एव, छद्म छलं यस्य स तादृश: छायापथरूप:, फणीन्द्र: वासुकि:, हार: कण्ठभूषा यस्या: सा तादृशी, द्यौ: खं, स्वम् आत्मानम्, अष्टमूर्त्ते: क्षित्यादि-मूर्त्त्यष्टकधारिणो हरस्य, मूर्त्तिं शरीरं, स्फुटं व्यक्तम्, आह ब्रवीति, हरमूर्त्ति: अपि उक्तविशेषणविशिष्टा, द्यौरपि एतादृशीति मूर्त्यन्तरापेक्षया व्यक्तमेव महेशस्य मूर्त्तिं गगनं कथयतीव इति भाव:॥ १२८॥

एकेति।—एतस्य चन्द्रस्य, जनकं पिता, उत्पादकमिति यावत्, उत्पादकत्वेन पितृतुल्यमिति भाव: तस्य, तस्य प्रसिद्धस्य, मुनिलोचनस्य अत्रिनेत्रस्य, तारा कनीनिका,

तादधिका सम्पदभूदियं तु सप्तान्विता विंशतिरस्य यत्ताः ॥१२९॥
मृगाक्षि ! यन्मण्डलमेतदिन्दोः स्मरस्य तत्पाण्डुरमातपत्रम् ।
यः पूर्णिमानन्तरमस्य भङ्गः स च्छत्रभङ्गः खलु मन्मथस्य ॥१३०॥

नक्षत्रस्य, एका एव द्वितीयरहिता एव, एकस्मिन् नयने एकस्या एव कनीनिकाया अवस्थानस्य स्वाभाविकत्वादिति भावः; जाता अभूत्, किल इति पुराणादौ प्रसिद्धा। अस्य तत्पुत्रस्य चन्द्रस्य, तु पुनः, इयं दृश्यमाना, सम्पत् ऐश्वर्य्यं, तारारूपा समृद्धिरिति यावत, तातात् निजपितुः अत्रिनेत्रात्, अधिका बहुला, अनेकसङ्ख्यकेत्यर्थः, अभूत् जाता, यत् यस्मात्, ताः ताराः, सप्तभिः सप्तसङ्ख्याभिः, अन्विता युक्ता, विंशतिः विंशति-सङ्ख्यकाः, सप्तविंशतिरित्यर्थः, अस्य वर्त्तन्ते इति शेषः। पितुरपि अधिकसम्पत्तिशालित्वात् सभाग्योऽयमिति भावः। "सप्त-विंशतिमिन्दवे" इति दक्षः सप्तविंशतिकन्याः अश्विन्यादिकाश्चन्द्राय ददौ इति पुराणम् ॥ १२९ ॥

मृगाक्षीति।—मृगाक्षि ! हे हरिणीनेत्रे ! यत् एतत् प्रत्यक्षदृश्यम, इन्दोः चन्द्रस्य, मण्डलं बिम्बं, दृश्यते इति शेषः, तत् मण्डलं, स्मरस्य कामस्य, पाण्डुरं श्वेतं, साम्राज्य-सूचकमिति भावः, आतपत्रं छत्रं, जानीयादिति शेषः, श्वेतच्छत्रस्य सम्राजा एव धार्य्यत्वेन तद्दर्शने च सर्वे सम्राजः वश्याः भवन्ति, पूर्णधवलचन्द्रमण्डलस्य चोद्दीपकत्वात् तद्दर्शने सर्वेऽपि कामस्य वश्या भवन्ति, तस्मात् एतत् कामस्य श्वेतातपत्रमेव इति भावः; यश्च पूर्णिमानन्तरं पौर्णमास्यास्तिथेः परम्, अस्य छत्रभूतस्य इन्दुमण्डलस्य, भङ्गः कलाक्षयः मोटनञ्च, सः भङ्गः, मन्मथस्य कामसम्राजः, छत्रभङ्गः राज्यक्षयः, छत्रस्य मोटनञ्च, भवतीति शेषः, खलु उत्प्रेक्षायां, निश्चये वा।

दशाननेनापि जगन्ति जित्वा योऽयं पुराऽपारि न जातु जेतुम्।
म्लानिर्विधोर्मानिनि! सङ्गतेय तस्य त्वदेकाननिर्जितस्य ॥१३१॥
इष्टो निजा तावदियन्त्यहानि जयन्नयं पूर्वदिशां शशाङ्कः।

---

कृष्णपक्षे चोद्दीपकमित्रचन्द्रक्षये कामः क्षीणः एव, ततश्च शुक्लपक्षवत् लोकैः कामवश्यताऽगमनात् कृष्णपक्षे यः अस्य भङ्गः सः कामस्य कृत्तभङ्गः इव स एव वा इति भावः॥ १३०॥

दशेति।—पुरा पूर्वं, दिग्विजयकाले इत्यर्थः, दशाननेन रावणेन अपि, दिग्विजयप्रवृत्तेनेति भावः, जगन्ति भुवनत्रयं, जित्वा स्वाधीनीकृत्य, अयं परिदृश्यमानः, यः चन्द्रः, जातु कदाचित् अपि, जेतुं वशीकर्त्तुं, न अपारि न अशाकि, मानिनि! हे मानवति! स्वमुखस्पर्द्धिनं चन्द्रम् असहमाने भैमि! इत्यर्थः, तव भवत्याः, एकेन एकमात्रेण, न दशाधिकेन इति भावः, आननेन वदनेन, निर्जितस्य पराभूतस्य, सौन्दर्य्येणेति भावः, तस्य दशाननेनापि जेतुमशक्तस्य, विधोः चन्द्रस्य,इयं प्रत्यक्षतो दृश्यमाना, म्लानिः कलङ्करूपा मलिनता, लज्जाजनितविषण्णता च, सङ्गता लग्ना, युक्ता च एव, यो हि दशाननेन दशभिरपि मुखैर्जेतुं नाशाकि,तस्य स्त्रियास्तव एकेन मुखेन निर्जितत्वे लज्जया मालिन्यम् उचितमेव इत्यर्थः; तन्मुखम् एतस्मात् अधिकमनोरमम् इति भावः। लज्जया म्लानिर्भवतीति प्रतीयमानोत्प्रेक्षा। पुरा किल दिग्विजये वहिर्गतः रावणश्चन्द्रं जेतुं प्रवृत्तः तुषाराग्निना दह्यमानः कम्पमानतनुः तम् अजित्वैव परावृत्तः इति रामायणीयोत्तरकाण्डे कथा॥ १३१॥

इष्ट इति।—हे प्रिये! अयं परिदृश्यमानः, शशाङ्कः चन्द्रः,

पूर्णस्त्वदास्येन तुलां गतश्चेदनन्तरं द्रक्ष्यसि भङ्गमस्य ॥ १३२ ॥
च्युताणि राम: परिभूय रामात् च्युतादृथथाऽभज्यत स द्विजेन्द्र:।

---

इयन्ति एतावन्ति, अहानि दिनानि यावत्, शुक्लपक्षदिवसानि व्याप्य इत्यर्थ:, [अत्यन्तसंयोगे द्वितीया] निजां स्वकीयां, पूर्वदशां पूर्वपूर्वदिनावस्थां, जयन् तावत जयन्नेव, निकामम् उत्तरोत्तरदिनेषु कलावृद्ध्या उत्कर्षेनां गच्छन्नेवेत्यर्थ:,तावच्छब्दोऽत्र अवधारणार्थक:, ("यावत्तावच्च साकल्ये एवार्थेऽपि समुच्चये" इत्यमर:) दृष्ट: अवलोकित:, त्वयेति शेष:, किन्तु पूर्ण: सम्पूर्णतां प्राप्त: सन्, अनया एव पारपाख्या पौर्णमास्या पूर्णबिम्ब:, सन्नित्यर्थ:, त्वदास्येन तव मुखेन सह, ["तुल्यार्थै: अतुलोपमाभ्याम्" इति निषेधेऽपि सहयोगे तृतीया। तथाच कालिदास: "तुला यदारोहति दन्तवाससा" इत्यादि] तुलां साम्यं तोलनयन्त्रञ्च, गत: प्राप्त: आरूढश्च, चेत् यदि, भवेदिति शेष:, तर्हि अनन्तरं शीघ्रमेव, परदिनमारभ्यैव इति यावत्, अस्य शशाङ्कस्य, भङ्गं पराजयं, क्रमश: कलाक्षयञ्च, द्रक्ष्यसि अवलोकयिष्यसि, त्वमिति शेष:, शुक्लप्रतिपदारभ्य चतुर्दशीपर्य्यन्तम् असम्पूर्णकलतया तव मुखेन सह तुलां गन्तुं नार्हति, अत एव तावन्ति दिनानि प्रत्यहमेव चन्द्रस्य वृद्धिस्त्वया दृष्टा, किन्तु यदैव पूर्णतां गत: सन् तवाननेन सह तुलामारूढ: भवेत्, तत्परदिने एवास्य भङ्गारम्भोऽपि दृश्येत, एवञ्च त्वदास्येन सह तुलारोहणमेवास्य भङ्गत्वे मुख्यकारणम्, उत्तमेन सह स्पर्द्धमानस्य अधमस्य भग्नताया अपरिहार्य्यत्वादिति भाव:। तुलादिव्येन हि हीनस्य पराजय: सर्व्वैर्दृश्यते इति ॥ १३२ ॥

च्युताणीति।—द्विजेन्द्र: ब्राह्मणश्रेष्ठ:, जमदग्न्यपत्यत्वा-

तथैष पद्मानभिभूय सर्वांस्त्वदास्यपद्मात् परिभूतिमेति ॥ १३३ ॥
अन्तः सलक्ष्मीक्रियते सुधांशो रूपेण पश्ये ! हरिणेन पश्य ।
इत्येष भैमीमदर्शदस्य कदाचिदन्तः स कदाचिदन्तः ॥ १३४ ॥

---

दिति बोध्यं, सः अतिप्रसिद्धपराक्रमः, रामः परशुरामः, क्षत्राणि निखिलक्षत्रियजातीः, परिभूय पराजित्य, अपीति शेषः, क्षत्रात् क्षत्रियजातेरेव, रामात् दाशरथेः सकाशात्, यथा यादृक्, अभज्यत भग्नतां गतः, पराभवं प्राप इत्यर्थः, तथा तादृगेव, एषः अयं, द्विजेन्द्रः द्विजराजः चन्द्रः, सर्वान् निखिलान्, पद्मान् कमलानि, ( "वा पुंसि पद्मम्" इत्यमरः ) अभिभूय पराभूय, अपीति शेषः, रात्रौ सङ्कोचोत्पादनादिति भावः, त्वदास्यपद्मात् तव वदनकमलात्, परिभूतिं पराभवम्, एति प्राप्नोति, सकलक्षत्रियाधिक्यं यथा श्रीरामस्य, तथा सर्वपद्माधिक्यं त्वन्मुखपद्मस्य इति भावः ॥ १३३ ॥

अन्तरिति ।— पश्ये ! हे चन्द्रदर्शनप्रवृत्ते ! भैमि ! [पाघ्रा-ध्मेत्यादिना कर्त्तरि एव शः ] हरिणेन पाण्डुरेण, ( "हरिणः पाण्डुरः पाण्डुः" इत्यमरः ) रूपेण वर्णेन,[कर्त्रा] सुधांशोः चन्द्रस्य, अन्तः प्रान्तभागः, मध्येतरप्रदेश इति यावत्, सलक्ष्मीक्रियते सश्रीकः क्रियते, पूर्वम् अश्रीकः अपि इदानीं श्रीसमन्वितो दृश्यते इत्यर्थः, पश्य अवलोकय, त्वमिति शेषः, अन्यत्र— हरिणेन मृगेण, [ कर्त्रा ] रूपेण आकारेण, स्वीयकृष्णवर्णेनेति भावः, सुधांशोः चन्द्रस्य, अन्तः मध्यं, सलक्ष्मीक्रियते सकलङ्कः क्रियते ; [ लक्ष्मीशब्दस्य समासान्तविधेः अनित्यत्वात् कबभावे सलक्ष्मीशब्दात् च्विः, पक्षे—असलक्ष्म सलक्ष्म क्रियते इति सलक्ष्मशब्दात् च्विः ] पश्य । सः उक्तरूपवर्णनाकारी, एषः अयं नलः, इति अमुना प्रकारेण, कदाचित् अस्य चन्द्रस्य, अन्तं

सागरान्मुनिविलोचनोदरात्
यत् द्वयादजनि तेन किं द्विजः ?।
एवमेव च भवन्नयं द्विजः
पर्य्यवस्यति विधुः किमत्रिजः ? ॥१३५॥

---

पर्य्यन्तभागं, कदाचिच्च अन्तः मध्यभागम्, [ अन्त इत्यकारान्तः एकत्र प्रान्तवाची, अन्तरित्यव्ययमपरत्र मध्यवाचि ] दमयन्तीं भैमीं, [ दृशेर्बुद्ध्यर्थत्वात् गतिबुद्धीति अणौ कर्त्तुर्णौ कर्मत्वात् भैमीमिति द्वितीया ] अदर्शत् दर्शयामास, अङ्गुल्यादिना चन्द्रश्वेतनीलप्रान्तमध्यभागप्रदर्शनपूर्वकं श्लिष्टपदैः तया सह क्रीड़ां चकारेति भावः ; इति मध्ये कवेरुक्तिः ॥ १३४ ॥

सागरादिति।—अयम् एषः,विधुः चन्द्रः, सागरात् क्षीरोद-समुद्रात्, मुनिविलोचनोदराच्च अत्रिनयनाभ्यन्तराच्च, द्वयात् मतभेदेन एतद्रूपात् उभयात्, कस्यचिन्मते क्षीरोदसागरात् कस्यचिन्मते वा अत्रिनेत्रादित्यर्थः, यत् अजनि प्रादुरभूत्, उत्पन्नः इत्यर्थः, तेन द्वाभ्यां जातत्वेन कारणेन, किं द्विजः ? द्विजन्मा ? उच्यते इति शेषः, एवमेव चानयैव रीत्या, द्वाभ्यां जातत्वादेवेत्यर्थः, द्विजो भवन् द्वाभ्यां सञ्जातः सन्, किं त्रिभ्यो जायते इति त्रिजः, स न भवति इति अत्रिजः द्विजत्वात् त्रिजाभाववान् इत्यर्थः, पर्य्यवस्यति ? परिणमति ? यो हि द्वाभ्यां जायते सः त्रिजः न भवति, एवमेवायम् अत्रिजः कथ्यते किम् ? यतः द्विजस्त्रिजो न भवत्येवेत्यर्थः, अथ च द्विजः भवन्नपि अत्रेः मुनेः जातः किं कथं पर्य्यवस्यति ? द्वाभ्यां जातत्वे सति अपि अत्रिमुनेः एव जातः इति तात्पर्य्यवृत्त्या कथमुच्यते ? इत्यर्थः। अथ चैवमेव यथा अनेन प्रकारेण द्विजत्वं, तथैव अत्रिमुनिजः भवन् अयं द्विजः पर्य्यवस्यति। किं

तारविहारभुवि चन्द्रमयीं चकार
यन्मण्डलीं हिमभुवं मृगनाभिवासाम् ।
तेनैव तन्वि ! सुकृतेन मते जिनस्य
स्वर्लोकलोकतिलकत्वमवाप धाता ॥ १३६ ॥

---

द्वाभ्यां जातत्वात् यथा द्विज उच्यते तथा द्विजात् अत्रिमुनेः जातत्वादपि द्विजः उच्यते ? द्विजोत्पन्नः हि द्विजः एव भवतीत्यर्थः । अथच द्वाभ्यां जातत्वात् द्विजो भवन्नेव न त्रिभ्यो जातः इति अत्रिज इति तात्पर्य्यवृत्त्या कथ्यते ॥१३५ ॥

तारेति ।—तन्वि ! हे कृशाङ्गि ! धाता स्रष्टा, जिनस्य बुद्धदेवस्य,तस्य च नारायणावतारत्वेन तत्प्रकृतिभूतस्य पुराणपुरुषस्य श्रीविष्णोरित्यर्थः, मते अनुमतौ सत्यां, तदादिष्टः सन् इत्यर्थः, ताराणां नक्षत्राणां, विहारभुवि सञ्चरणस्थाने गगने, हिमस्य तुषारस्य, भुवं स्थानभूताम्, अतिशीतलामिति यावत्, तथा मृगस्य हरिणस्य, नाभौ मध्यभागे, वासः अवस्थितिः यस्याः तां तादृशीं, यस्याः मध्ये मृगोऽस्तीति यावत् तादृशीं, मृगाधिष्ठितमध्यप्रदेशामिति भावः, चन्द्रमयीं चन्द्रात्मिकां, मण्डलीं बिम्बं, यत् चकार निर्ममे, सूर्य्यातपविदग्धजीवलोकानां सन्तापहरणार्थममृतवर्षणद्वारा आप्यायनार्थञ्चेति भावः, तेनैव उक्तकार्य्यजन्येनैव, सुकृतेन पुण्येन, शोभनेन लोकोत्तरव्यापारेण इति यावत्, स्वर्लोकः स्वर्गभुवनं, तत्र ये लोकाः सुराः, तेषां मध्ये तिलकत्वं श्रेष्ठत्वम्, अवाप लेभे ; अन्येषां सुराणाम् एतादृग्व्यापारकरणे सामर्थ्याभावात् ब्रह्मैव श्रेष्ठोऽभूत् इति निष्कर्षः । अन्यत्र—धाता तारायाः बुद्धदेव्याः, ( "बुद्धदेव्यां मता तारा" इति विश्वः ) विहारभुवि सुगतालयभूमौ, मठाभ्यन्तरप्रदेशे इति यावत्, ( "विहारो भ्रमणे स्कन्धे

इन्दुं मुखात् बहुतृणं तव यत् गृणन्ति
नैनं मृगस्त्यजति तन्मृगतृष्णयेव।
अत्येति मोहमहिमा न हिमांशुबिम्ब-
लक्ष्मीविडम्बिमुखि! वृत्तिषु पाशवीषु॥ १३७॥

लीलायां सुगतालये" इति मेदिनी ) हिमभुवं शीतलां, शुभ्रत्वात् हिमाचलरूपा वा, तथा मृगनाभेः कस्तूर्य्याः, वासः परिमलः अवस्थानं वा यस्यां तादृशीं, कस्तूरीमिश्रितामिति यावत्, चन्द्रमयीं कर्पूरात्मिकां, मण्डलीं राशिं, राशीकृतकर्पूरस्थापनमित्यर्थः, यत् चकार विदधे, तेनैव सकस्तूरीकर्पूरराशिस्थापनरूपेणेत्यर्थः, तेनेवेति पाठे उत्प्रेक्षा ; सुकृतेन पुण्यकर्मणा, जिनस्य बुद्धदेवस्य, मते दर्शने, बौद्धदर्शने इत्यर्थः, स्वर्लोकलोकतिलकत्वं सुरश्रेष्ठत्वम्, अवाप लेभे। बौद्धा हि बुद्धदेवप्रासादे यः तत्पूजार्थं सकस्तूरीकर्पूरराशिं ददाति स लोकमध्ये श्रेष्ठो भवतीति स्वदर्शने प्रत्यपादयन्। ब्रह्मा चैवमकृत तस्मादेव सर्वश्रेष्ठो जातः इति भावः॥१३६॥

इन्दुमिति।—हे हिमांशुबिम्बस्य चन्द्रमण्डलस्य, लक्ष्म्याः शोभायाः, विडम्बि परिहासकारि, स्वस्मात् न्यूनत्वात् ततोऽपि अधिकशोभमिति भावः, मुखं वदनं यस्याः तादृशि! भैमि! इन्दुं विधुं, तव भवत्याः, मुखात् आननात् सकाशात्, त्वन्मुखम् अपेक्ष्य इति वा, [ ल्यब्लोपे पञ्चमी ] बहुतृणम् ईषदसमाप्तं तृणं यवसं,तृणत्वम् अपि यस्य पूर्णं न सम्पन्नं तादृशमित्यर्थः, तृणादपि निःसारम् इति यावत्, [ "ईषदसमाप्तौ विभाषा सुपो बहुच्" इति बहुच् ] अथच बहु अधिकं, तृणं यवसं यत्र तत् तादृशं, यत् यस्मात्, गृणन्ति कथयन्ति, पण्डिताः इति शेषः, तत् तस्मात् हेतोः, मृगः हरिणः, चन्द्रमण्डले दृश्यमान

स्वर्भानुना प्रसभपानविभीषिकाभिः
दुःखाकृतेनमवधूय सुधा सुधांशुम्।

इति भावः, मृगतृष्णायेव मरीचिकातुल्यया भ्रान्त्या इव, मरु-भूमिस्थवालुकोपरिपतितसूर्य्यकिरणे जलभ्रान्तिर्यथा मृगतृष्णा, तृणविवर्जिते चन्द्रलोके बहुतृणभ्रान्तिरपि तथैव तयेवेत्यर्थः, यद्वा—मृगसम्बन्धिन्या तृष्णया कोमलतृणकवलनाभिलाषेणेव, अथवा—चन्द्रे प्रयुक्तस्य बहुतृणशब्दस्य बहु च तत् तृणञ्च, बहूनि तृणानि यस्मिन् तत् ताद‍ृशम् इति वा, इत्येवंरूपार्थ-ग्रहणरूपया भ्रान्त्या इव, एनम् इन्दुं, न त्यजति न मुञ्चति, तृणभोजनलोभादिति भावः, मृगो हि बहु तृणं, बहुतृणं देशं वा न मुञ्चति इति दृश्यते। ननु भ्रान्तिः खलु एकं, द्वौ, त्रीनपि वा वारान् सम्भवति, परन्तु यावज्जीवं तस्याः स्थायित्वं न उपपद्यते इत्याशङ्क्य अर्थान्तरन्यासमाह—पाशवीषु पशु-सम्बन्धिनीषु, वृत्तिषु व्यापारेषु विषये, मोहमहिमा भ्रान्ति-बाहुल्यम्, आ-मृत्युस्थायिनी भ्रान्तिरित्यर्थः, न अत्येति न अतिक्रामति, बहुकालातिक्रमेऽपि न अपयाति इत्यर्थः। पशवो हि सर्वदा मूढा एवेति कदापि अस्य मृगस्य भ्रान्तिर्नापयाति, तस्मादेवायमेनं न त्यजतीति युक्तमिति भावः॥ ११७॥

स्वर्भानुनेति।—हे प्रिये! स्वर्भानुना राहुणा, प्रसभं बलात्, यत् पानं ग्रसनं वारंवारं कवलीकरणं, तेन विभीषिकाभिः भयोत्पादनैः, दुःखाकृता प्रातिलोम्याचरणोत्-पादितदुःखा, प्रतिकूलाचरणेन दुःखितीकृता इत्यर्थः, ["दुःखात् प्रातिलोम्ये" इति डाच्] सुधा अमृतम्, एनं परिदृश्यमानं, सुधांशुं चन्द्रं, स्वकीयं चिरकालीनमाश्रयमिति भावः, अवधूय

स्वं निह्नुते सितिमचिह्नममुष्य रागैः
ताम्बूलताम्रमवलम्ब्य तवाधरोष्ठम् ॥ १३८ ॥
हर्य्यर्च्चाभवतः कुरङ्गमुदरे प्रक्षिप्य यद्वा शशं
जातस्फीततनोरमुष्य हरिता सूतस्य पत्न्या हरेः।

अवज्ञाय, त्यक्त्वा इत्यर्थः, ताम्बूलेन पर्णेन, ताम्बूलचर्वणेनेत्यर्थः, ताम्रं ताम्रवद्रारक्तवर्णं, तव भवत्याः, अधरोष्ठं रदनच्छदम्, अवलम्ब्य आश्रित्य, अमुष्य रक्तस्य तव अधरोष्ठस्य, रागैः रक्तवर्णैः, रक्तवर्णैः स्वं रञ्जयित्वा इत्यर्थः, सितस्य भावः सितिमा धावल्यमेव, चिह्नं ज्ञापकलक्षणं यस्य तं तादृशं, धवलरूपमपि इत्यर्थः, स्वम् आत्मानं, निह्नुते गोपायतीव, पुनः स्वर्भानुपान-भिया तिरोदधातीवेत्यर्थः, पुनः राहुकर्त्तृकपानभिया त्वदधरमिव स्थानान्तरम् आश्रित्य रूपान्तरेण आत्मानं गोपायतीवेति भावः। अन्योऽपि सभयं स्थानं हित्वा स्थानान्तरमाश्रित्य तत्रापि रूपान्तरं धृत्वा स्वं निह्नुते इति लोके दृश्यते। सुधया चिरकालीनाश्रयचन्द्रपरित्यागपूर्वकं त्वन्मुखाश्रयणात् त्वन्मुखं चन्द्रात् अधिकम् इति निष्कर्षः। ताम्बूलताम्रम् इति उक्तरीत्या उपमोत्प्रेक्षा वा ॥ १३८ ॥

हर्य्यर्च्चेति।—हे प्रिये! कुरङ्गं कलङ्करूपं हरिणं, यद्वा अथवा, मतभेदेनेत्यर्थः, शशं मृगविशेषम्, उदरे मध्यदेशे इत्यर्थः, प्रक्षिप्य निपात्य, स्थितस्येति शेषः, हरेरच्चिकनीनिकात्वसम्पादनार्थ-मिति भावः, अत एव हरेः श्रीविष्णोः, अच्चीभवतः वामनेत्री-भवतः, तथा जाता उद्भूता, स्फीता परिपुष्टा, सम्पूर्णकलत्वादिति भावः, तनुः शरीरं यस्य तादृशस्य, तथा हरेः इन्द्रस्य, पत्न्या भार्य्यया, इन्द्रस्य पूर्वदिगधिपतित्वात् पत्नीस्वरूपयेत्यर्थः, हरिता दिशा, प्राच्या दिशा इत्यर्थः, ("दिशस्तु ककुभः काष्ठा आशाश्च

भङ्गस्त्वद्वदनाम्बुजादजनि यत् पद्मात्तदेकाकिनः
स्यादेकः पुनरस्य स प्रतिभटो यः सिंहिकायाः सुतः ॥ १२८ ॥

हरितश्च ताः" इत्यमरः ) सूतस्य उत्पादितस्य, तत्र सञ्जातो-दयस्येत्यर्थः, यद्वा—जातस्फीततनोः सञ्जातपूर्णशरीरस्य, कुरङ्गं यद्वा शशं कलङ्कं मध्ये निक्षिप्य, मध्यस्थितकलङ्कस्य कनीनिका-तुल्यत्वात् श्रीविष्णोः वामनेत्रीभवतः, अमुष्य चन्द्रस्य, त्वद्-वदनाम्बुजात् तव मुखपद्मात् सकाशात्, यत् भङ्गः पराजयः, अजनि जातः, तत् भङ्गजननं, पराभवप्राप्तिरित्यर्थः, पद्मात् तव मुखपद्मरूपात् पद्मात् तदाख्यसङ्ख्याविशेषात्, एकाकिनः एक-मात्रस्य, द्वितीयसहायरहितस्येत्यर्थः, अमुष्येति शेषः, स्यात् भवेत्,तव वदनाम्बुजमेकमात्रमपि सौन्दर्य्योत्कर्षात् पद्मसङ्ख्यक-मेव, तेन च तस्मात् हर्य्यक्षीभवतश्चापि एकाकिनः अमुष्य चन्द्रस्य भङ्गः नासम्भवः, यतो दृश्यते च लोके, संहतीभूतैः दुर्बलैरपि बहुभिः महाबलस्यापि एकाकिनः भङ्गः सर्वदा, अतो नात्र किमपि आश्चर्य्यमिति भावः, यद्वा—एकाकिनः सर्वदा असहायात् एकस्मात्, पद्मात्, न तु अन्यस्मात् कमलात्, न हि अन्यैः पद्मैः अयं पराजीयते, प्रत्युत अयमेव पद्मानि पराजयते इत्यर्थः, अथवा—अम्बुजतुल्यात् त्वद्वदनादेव पद्मात् अथच पद्मसङ्ख्यकात् त्वद्वदनरूपात् अम्बुजात यत् अस्य भङ्गः जातः, तत् एकाकिनः असहायस्य, स्यात् भवेत्, बहुभिः एकः पराजीयते इति युक्तमेव इत्यर्थः ; परन्तु यः सिंहिकायाः तदाख्यायाः कश्यपपत्न्याः, सुतः पुत्रः, राहुरित्यर्थः, सः पुनः स राहुः खलु, अस्य सिंहभूतस्य चन्द्रस्य, एकः एकमात्र एव, प्रति-भटः प्रतिमल्लः, समकक्षवीर इत्यर्थः, वर्त्तते इति शेषः, ग्रहणेऽपि स्वयमेव स्वस्य मोचनात् [illegible] इति

भावः; "स प्रतिभटः" इत्यत्र "सम्प्रति भटः" इति पाठे—अस्य पुनः अप्येकः भटः प्रतिभटः सिंहिकायाः सुतः स्यात्,एकाकिनः अस्य त्वन्मुखपद्मः प्रतिद्वन्द्वो न भवति अतुल्यत्वात्, किन्तु एकाकी राहुरेव अस्य प्रतिभटो युक्तः इत्यर्थः; किञ्च, स्वशत्रु-भूतात् राहोः अपि अस्य अन्यः पराजयः इति महत् अस्य कष्टं प्राप्तमित्यर्थः। अन्यत्र—हरिता हरिद्वर्णया, हरेः सिंहस्य, पत्न्या भार्य्यया, सिंह्योरूपया इत्यर्थः, सूतस्य प्रसूतस्य, अत एव हर्य्यक्षीभवतः सिंहतां प्राप्नुवतः, सिंह्याः प्रसूतत्वादिति भावः, ("हर्य्यक्षः केशरी हरिः" इत्यमरः) [प्रथमपक्षे हर्य्यक्षशब्दात् च्वि,द्वितीयपक्षे हर्य्यक्षशब्दादेव] तथा कुरङ्गं मृगं,यद्वा अथवा, शशं कुरङ्गविशेषम्, उदरे जठराभ्यन्तरे, प्रक्षिप्य आहार्य्यरूपेण प्रेरयित्वेत्यर्थः, भक्षयित्वा इति यावत्, स्थितस्य इति शेषः, अत एव जातस्फीततनोः सञ्जातपुष्टशरीरस्य, उदरविवरे कुरङ्गादि-प्रेरणादिति भावः, अमुष्य सिंहस्य, त्वद्वदनाम्बुजात् त्वन्मुख-पद्मात्, यत् भङ्गः पराजयः, अजनि, तत् एकाकिनः केवलात्, पद्मात् गजात् एव, पराजयः; सिंहस्य गजात् भङ्गः यथा, तद्वत् एतत् महत् चित्रमित्यर्थः, अथच पद्मसङ्ख्यकात् एकस्य पराजयः, सिंहोऽपि एको बहुसङ्घैः पराजीयते एव इत्यर्थः, अथच पद्मात् शरभात् अष्टपदात् एव, भङ्गः, सिंहस्य केवलम् अष्टपदात् एव भङ्गः; ("गजाब्जशरभाः पद्माः" इति अनेकार्थे भोजः) परन्तु यः सिंहिकायाः अन्यस्याः सिंहभार्य्यायाः, सुतः तनयः, सिंहः इत्यर्थः, सः पुनः स सिंहः खलु, एकः एकमात्र एव, अस्य सिंहस्य, प्रतिभटः, पद्मचन्द्राभ्यां सकाशात् त्वन्मुखम् अधिकमिति भावः॥ १३८॥

वाक्पारीणरुचिः स चेन्मुखमयं पद्मः प्रिये ! तावकम् ।
कः शीतांशुरसौ तदा ? मखमृगव्याधोत्तमाङ्गस्थल-
स्थास्नुस्वस्तटिनीतटावनिवनीवानीरवासी वकः ॥१४०॥

---

यदिति ।—हे प्रिये ! पद्मात् कमलात्, श्रीविष्णोः नाभौ वर्त्तमानादिति भावः, भवतीति पद्मभूः कमलयोनिः, एवञ्च जनकत्वमेव पद्मपूजाविधाने हेतुरिति भावः, वेधाः स्रष्टा, नयनद्वयमेव नेत्रयुगलमेव, तदेति भावः, उत्पले नीलोत्पल-युग्मं, तन्मयीं तद्रूपां, तदुपहारप्रदानरूपामित्यर्थः, यस्य पद्मस्य, पूजाम् अर्चनां, व्यधात् व्यरचयत्, स हि पितृभक्त्या नेत्रद्वयेनैव नीलोत्पलयुगेन स्वजनकस्य पद्मस्य महतीं पूजामकृतेति भावः, वाक्पारीणा वाचः परतीरे भवाः, वाचा वर्णयितुम् अशक्या इत्यर्थः, [अत्रार्थे "राष्ट्रावारपारात् घखौ" इत्यत्र अवारपाराद्-विपरीतादपि विगृहीतादपीति वचनात् खः ] रुचिः प्रभा यस्य सः तादृशः सः वेधसो जनकः, अयम् एषः, पद्मः कमलं, चेत् यदि, तावकं त्वदीयं, मुखं वदनम्, अभूदिति शेषः, सः एव भवन्मुखरूपः जातः, अनन्तरं ब्रह्मणा स्वपितृबुद्ध्या नेत्रनीलोत्-लाभ्यां कृतपूजनत्वात् अत्र तव मुखे नेत्रनीलोत्पले दृश्येते इति चेत् इत्यर्थः, तदा तर्हि, असौ परिदृश्यमानः, शीतांशुः चन्द्रः, कः ? को नाम ? अपि तु न कश्चित् इत्यर्थः,त्वन्मुखस्य पुरस्तात् अयं स्मरणार्होऽपि न इति भावः,जनकत्वात् यो हि वेधसाऽपि पूजितः,तादृशनपिण्डमात्रस्य शीतांशोः तेन पद्मेन समं तुलनायाः प्रसङ्गोऽपि न सम्भवतीति भावः ; तर्हि त्वन्मुखसविधे असौ कः ? इति चेत् तत्राह—मखः यज्ञः, दक्षयज्ञः इति यावत्, स एव मृगः हरिणः, मृगरूपधारी दक्षयज्ञ इत्यर्थः, तस्य व्याधः मृगयुः, हरः इत्यर्थः, तस्य उत्तमाङ्गं शिरः, तल्लक्षणे स्थले प्रदेशे,

जातं शातक्रतव्यां हरिति विहरतः काकतालीयमस्याम्
अश्यामत्वैकमत्यस्थितमकलकलानिर्मितेर्निर्मलस्य।

महेश्वरस्य मस्तकदेशे इत्यर्थः, स्थास्नुः स्थितिशीला, या स्वस्तटिनी स्वर्गगङ्गा, मन्दाकिनीत्यर्थः, तस्याः तटावन्यां तीरभूम्यां, या वनी महत् अल्पं वा यत् काननं, तत्र ये वानीराः वेतसाः, वेतसलतापरिवेष्टितभूभागा इत्यर्थः, तत्र वसति तिष्ठतीति सः तादृशः, वकः तदाख्यपक्षिविशेषस्वरूपः इत्यर्थः. धावल्येन उभयोरपि साम्यात् पद्मसमीपे वको यथा दृश्यते, तव मुखपद्मसमीपे चन्द्रोऽपि तथा दृश्यते इति भावः। चन्द्रश्च हरजटाजूटवासी इति प्रसिद्धम्। वाक्पारीणरुचिः इति अञ्जविशेषणं वा ; अत्र यदपत्यस्य ब्रह्मणोऽपि सौन्दर्य्यं वागगोचरं, तत्पितुः पद्मस्य सौन्दर्य्यं मनसोऽपि गोचरं न भवति इत्यर्थः। त्वन्मुखस्य चन्द्रस्य च महत् अन्तरं, साम्यसम्भावनापि नास्ति इति भावः। एतेन चन्द्रादिसुन्दरवृन्दं ब्रह्मणा सृष्टं, भवदीयमुखपद्म तु ब्रह्मणोऽपि स्रष्टृत्वात् सर्वाधिकमिति सूचितम्। मखमृगेत्यादिना चन्द्रस्य अतिदैन्यं तथा त्वन्मुखपद्मसाम्यप्राप्त्यर्थं तपश्चरणञ्च सूचितम्। अन्योऽपि विशिष्टवस्तुप्राप्तये शिवस्थानयुक्तनदीतीरवासी भवन् तपस्यति। नदीतीरवानीरवासित्वं वकस्वभावः ॥ १४० ॥

जातमिति।—अस्याम् अङ्गुलीनिर्दिष्टायां पुरो दृष्टायामेतस्यां, शतक्रतोः इन्द्रस्य इयं शातक्रतवी तस्याम् ऐन्द्र्यां, पूर्वस्यामित्यर्थः, हरिति दिशि, विहरतः सञ्चरतः, उदच्छतः इत्यर्थः, अत एव तद्दिगवस्थायिनः इन्द्रगजस्यैरावतस्य दानद्रवलवलगनं सम्भवतीति भावः, तथा अश्यामत्वे श्यामत्वाभावे, कलानां शुभ्रताविषये इत्यर्थः, यत् ऐकमत्यं सर्वसंवादः,

इन्दोरिन्दीवराभं बलविजयिगजग्रामणीगण्डपिण्ड-
द्वन्द्वापादानदानद्रवलववलगनादङ्कमङ्के विशङ्के ॥ १४१ ॥

सर्वेषामेव एकविधमतिरित्यर्थः, तेन तत्र वा स्थिताभिः वर्त्तमानाभिः, सर्ववादिसम्मतशुभ्रवर्णाभिरित्यर्थः, सकलाभिः समग्राभिः, षोडशभिरेवेत्यर्थः,कलाभिः अंशैः, निर्मितिः निर्माणं यस्य तादृशस्य, अश्यामत्वैकमत्येन स्थिता सकलकलानिर्मितिः यस्य सः तादृशस्य इति वा, अत एव निर्मलस्य उज्ज्वलस्य, सकलकलानिर्मितत्वात् अतीव शुभ्रस्येत्यर्थः, "कारणगुणाः कार्य्यगुणमारभन्ते" इति न्यायेन कारणभूतकलानां शुभ्रवर्ण-तया कार्य्यभूतचन्द्रस्यापि शुभ्रवर्णताया अवश्यम्भाव्यत्वात्,ततश्च ऐरावतदानद्रवलवलगनाभावे श्यामत्वरूपकलङ्कासम्भव इति भावः ; यद्वा—प्रत्येकं कलानां धावल्यस्य दृष्टत्वात् धवलसक॰-कलानिर्मितत्वात् कारणधावल्यात् धवलस्य ; अश्यामत्वैक-मत्येन स्थिताः याः सकलाः कलाः ताभिः या निर्मितिः तस्या वा हेतोः [ हेतौ पञ्चमी ] धवलस्य, इन्दोः चन्द्रस्य, अङ्के क्रोडे, मध्यदेशे इत्यर्थः, इन्दीवराभं नीलोत्पलतुल्य, श्यामवर्णमात यावत्, मदजलस्य श्यामवर्णत्वादिति भावः, अङ्कं कलङ्कं, बल-विजयिनः बलासुरविध्वंसिनः इन्द्रस्य, यः गजग्रामणीः हस्तिषु मध्ये प्रधानं, प्राच्यामेव वर्त्तमानः ऐरावतः इत्यर्थः, तस्य गण्डयोः कपोलयोः, पिण्डयोः शिरःस्थितकुम्भस्थलयोश्च, यत् द्वन्द्वं युगलं, गण्डद्वन्द्वञ्च पिण्डद्वन्द्वञ्च इत्यर्थः, तदेव अपादान निर्गमनस्थानं येषां ते तादृशाः, ये दानद्रवलवाः मदजलकणाः, तेषां लगनात् सम्पर्कात्, इन्दोरङ्के लग्नत्वादित्यर्थः,काकतालीयं काकोपवेशनानन्तरमेव तालपतनन्यायतुल्यम् आकस्मिकं दैव-सिद्धं यथा तथा ; तालतरुतले यदैव काकस्य उपवेशनं

अंशं षोड़शमामनन्ति रजनीभर्त्तुः कलां वृत्तय-
न्त्येनं पञ्चदशैव ताः प्रतिपदाद्यारकावर्द्धिष्णवः ।
या शेषा पुनरुद्धृता तिथिमृते सा किं हरालङ्कृतिः ?
तस्याः स्थानविलं कलङ्कमिह किं पश्यामि सश्यामिकम् ? ॥१४२॥

---

तदैव दैवात् काकस्योपरि तालफलपातः इति, तालफलो-परि उपविष्टस्य काकस्य उड्डयनमात्रेण अकस्मात् तालफलं पतति, न च तत्पतने काकस्य कोऽपि हेतुता इति वा न्यायः काकतालीयः ; [ काकतालमिव काकतालीयं समासान्तात् च तद्विषयादिति छः ] जातम् उत्पन्नं, विशङ्के मन्ये, अहमिति शेषः ; पूर्वं कारणाभावस्यात् सकलोऽपि अयं धवलः एव अभूत्, पश्चात् तु पूर्वदिग्भ्रमणवशात् तत्रैव भ्रमतः ऐरावतस्य कपोल-कुम्भस्थलगलन्मदजलं दैववशात् लग्नं, तेन अयं मध्ये कालः प्रतिभाति इति भावः ॥ १४१ ॥

अंशमिति ।—हे प्रिये ! रजनीभर्त्तुः निशानाथस्य चन्द्रस्य, षोड़शम् अंश षोड़शभागैकभागं, कला तत्संज्ञकम्, आमनन्ति सत्य कथयन्ति, लोका इति शेषः, लोकाः षोडशकलश्चन्द्र इति यत् कथयन्ति, तत्र न कोऽपि संशयावकाश इति भावः, प्रतिपत् तदाख्या तिथिः, आदिः प्रथम यस्मिन् कर्मणि तत् यथा तथा, आराकं राका पूर्णिमाम् अभिव्याप्य, पूर्णिमापर्य्यन्तमित्यर्थः, ( "पूर्णे राका निशाकरे" इत्यमरः ) वर्द्धिष्णवः वृद्धिशीलाः, प्रतितिथि एकैककलाभिवृद्धया क्रमशो वर्द्धमानाः इति भावः, [ "अलंकृञ्" इति इष्णुच् ] पञ्चदशैव पञ्चदशसङ्ख्यकाः एव, न पुनस्तदातिरिक्ता इति भावः, ताः कलाः, एनं चन्द्रं, वृत्तयन्ति वृत्तं वर्त्तुलं कुर्वन्ति, तिथिसङ्ख्यासाम्यात् सम्पूर्णमण्डलं कुर्वन्ति इत्यर्थः, [ "तत् करोति" इति णिच् ] शेषा अवशिष्टा,

ज्योत्स्नामादयते चकोरमिथुना द्राघीयसी लोचने
लिप्सुर्मूलमिवोपजीवितुमितः सन्तर्पणाभीक्ष्णतात् ।
अङ्के रङ्कुमयं करोति च परिष्पृष्टुं तदेवादृतः
त्वद्वक्त्रं नयनश्रियाऽप्यनधिकं मुग्धे ! विधित्सुर्विधुः ॥ १४३ ॥

षोड़शसङ्ख्याका इत्यर्थः, [ शेषशब्दस्य अभिधेयलिङ्गत्वं ] या पुनः या तु कला,तिथिं पञ्चदशातिरिक्तां षोडशीं तिथिम्,ऋते विना, षोडशतिथ्यभावादित्यर्थः, उद्धृता उत्तोल्य पृथक् स्थापिता इत्यर्थः, अतिरिक्तत्वेन प्रयोजनाभावात् विधात्रा चन्द्रात् वहिष्कृत्य नीता इति भावः, सा षोड़शी कला, किं हरालङ्कृतिः ? शिवशिरोभूषणं, जाता ? इति शेषः, चन्द्रे प्रयोजनाभावात् हरालङ्कृतिरिव अभूत् किम् ? इत्यर्थः ; तथा स्यामिकं श्यामिकया नीलिम्ना सह वर्त्तमानं,पश्चाद्देशस्थनभसः कालिम्ना सह वर्त्तमानमित्यर्थः, [ मनोज्ञादेः आकृतिगणत्वात् भावे वुञ् ] तस्या उद्धृतायाः षोडश्याः कलायाः, स्थानस्य पूर्वावस्थितेः सम्बन्धि, बिलं विवरं,विधात्रा तत्कलोद्धरणेन शून्यं नीलं नभोभागम् एव इति भावः, इह चन्द्रमण्डलमध्ये, कलङ्कं लाञ्छनरूपं, पश्यामि किम् ? अवलोकयामि किम् ? मध्यवर्त्ति नीलं तत्स्थानविलमेव अहं कलङ्कत्वेन शङ्के इत्यर्थः ॥ १४२ ॥

ज्योत्स्नामिति ।—मुग्धे ! हे सुन्दरि ! त्वद्वक्त्रं भवत्या आननं, सौन्दर्य्यादिगुणैः स्वस्य समानम् अपीति भावः, नयनश्रिया अपि तव नेत्रसौन्दर्य्येणापि, स्वस्य नेत्राभावादिति भावः, अनधिकम् अनुत्कृष्टं, स्वापेक्षयेति भावः, तव नेत्रयो. समानमेव इत्याशयः, विधित्सुः विधातुमिच्छुः, अत एव आदृतः आदरान्वितः, आग्रहान्वित इत्यर्थः, अयम् एषः, विधुः चन्द्रः, द्राघीयसी अतिदीर्घे, [ अतिशायने ईयसुनि "प्रियस्थिर—"

लावण्येन तवास्यमेव बहुना तत्पात्रमात्रस्पृशा
चन्द्रः प्रोञ्छनलब्धताऽद्‌र्द्रमलिनेनारम्भि शेषेण तु।

इति द्राघादेशः ] लोचने तव नयनद्वयमिव नयनद्वयं, लिप्सुः लब्धुमिच्छुः सन्, [ लिप्सुः विधित्सुः इति च नलोकेति षष्ठी-निषेधः ] सन्तर्पणेन निजचन्द्रिकामृतपायनाकृतसम्यकृद्धिसि-साधनेन, आत्मीकृतात् आत्मीयीकृतात्, स्ववशीकृतादिति यावत्, इतः चकोरशिशोः सकाशात्, मूलं स्वचान्द्रिकापायना-हेतुभूतम् एतदीयातिदीर्घनेत्रद्वयम्, उपजीवितुम् आदातुम् इव, यद्वा—किञ्चित् स्वचन्द्रिका पाययित्वा ततः नेत्रद्वयलक्ष्मी-प्राप्त्या मूलं चन्द्रिकारूपमूलधनं वर्द्धयितुम् इव ; चकोरशिशुना तदाख्यपक्षिशावकेन, [ प्रयोज्येन ] शिशुः सुप्रताप्य इति सूचयितुं शिशुपदम् ; ज्योत्स्ना स्वीयां चन्द्रिकाम्, आदयते भक्षयति, [ अदेर्निगरणार्थत्वेऽपि "अदेः प्रतिषेधो वक्तव्यः" इति वक्तव्यात् निगरणादिपरस्मैपदाभावे "णिचश्च" इति तङ्, "आदिखाद्योर्न" इति अणौ कर्मत्वाभावः ] तथा तत् मूलभूतम् अतिविशालं तदीयनयनयुगलं, परिप्युष्टमिव संलग्नं कर्तुम् एव, वस्तुतः आनीय आत्मनि योजयितुमिवेति भावः, परिप्रष्ट-मिति पाठे—एतन्नेत्ररामणीयकप्राप्त्युपाय प्रष्टुमिव इत्यर्थः ; अङ्के मध्ये, अथच उत्सङ्गे, रङ्कुञ्च हरिणञ्च, करोति विदधाति, धारयतीत्यर्थः, उत्सङ्गे धृत्वा लालयति इति यावत् ; त्वन्मुख-साम्यनिमित्तरमणीयनेत्रद्वयसम्पादनाय अयं चन्द्रः चकोर-हरिणौ वश्यति इति भावः ; चन्द्रात् उत्कृष्ट त्वन्मुखमिति निष्कर्षः। अन्योऽपि जनः बालात् किञ्चित् आदातुं तं मोदकलड्डुकादिना सन्तोषयन् क्रोड़े कृत्वा उत्तमम् इष्टं वस्तु ततः गृह्णाति इति दृश्यते॥ १४३॥

निर्माय द्वयमेतदप्सु विधिना पाणी खलु चालितौ
तल्लेशैरधुनाऽपि नीरनिलयैरम्भोजमारभ्यते ॥ १४४ ॥

लावण्येनेति ।—हे प्रिये! विधिना विधात्रा,बहुना प्रभूतेन, प्रयोजनकाले तत्क्षणमेव यथा प्राप्तिः स्यात् तदर्थं क्वचित् पात्रे सञ्चितेन अखिलेन इत्यर्थं, लावण्येन कान्तिविशेषेण, तव भवत्याः, आस्यमेव मुखमेव, आरम्भि निरमायि, इवेति शेषः, तवानने एव निखिललावण्यदर्शनादिति भावः ; चन्द्रस्तु विधुः पुनः, तस्य लावण्यस्य, पात्रम् आधारभाजनं, तन्मात्रं केवलं लावण्याधारपात्रं,न तु किञ्चिदपि लावण्यमित्यर्थः, स्पृशति स्पर्शं करोति,तत्पात्रस्य गात्रमात्रे लगतीति यावत्, तेन तादृशेन लावण्याधारपात्रमात्रलग्नेन, अत एव प्रोञ्छनेन अङ्गुल्या पात्र-निघर्षणेन, या लब्धता प्राप्तता, यत्किञ्चित् प्राप्तिरित्यर्थः, तया अङ्कं कियदंशं, मलिनं विवर्णं यस्य तादृशेन, पात्रगात्रं प्रोञ्छयित्वा ग्रहणात् किञ्चिन्मलिनेन इत्यर्थः, शेषेण भवन्मुख-निर्माणावशिष्टेन, लावण्यांशेन इति शेषः, आरम्भि निरमायि, इवेति शेषः,कलङ्केन मध्यभागे मालिन्यदर्शनादिति भावः ; अत एव शबलमण्डलोऽयं शोभते इति निष्कर्षः ; शेषेण तु चन्द्रः आरम्भि इति वा अन्वयः । एतत् द्वयं त्वन्मुखं चन्द्रश्चेत्युभय-द्रव्यं, निर्माय सृष्ट्वा, अप्सु जलेषु, तड़ागादिषु पद्माकरेषु इति यावत्, पाणी निजकरद्वयं, चालितौ खलु निश्चयमेव धौतीकृतौ, अन्योऽपि कुम्भकारः घटशरावादिकं निर्माय अप्सु हस्तौ प्रचालयति इति दृश्यते ; नीरं तज्जलमेव,निलयः आवासः येषां तादृशैः, हस्तप्रचालनावसरे जलमध्ये पतितैरिति भावः, तस्य चालनरजोमिलितलावण्यस्य, लेशैः अल्पैः अंशैरेव कर्त्तृभिः, अधुनाऽपि अद्यापि, अम्भोजं पद्मानि, [ जातावेकवचनम् ]

लावण्येन तवाखिलेन वदनं तत्पात्रमात्रस्पृशा
चन्द्रः प्रोञ्छनलब्धताऽर्द्धमलिनेनारम्भि शेषेण यः।
तल्लेखाऽपि शिखामणिः सुषमयाऽहङ्कृत्य शम्भोरभूत्
अब्जं तस्य पदं यदस्पृशदतः पद्मञ्च सद्म श्रियाः॥ १४५॥

आरभ्यते निर्मीयते, इवेति शेषः, अम्भोजेऽपि लावण्यलेशदर्शना-दिति भावः ; एवञ्च कमलनिर्माणे ब्रह्मणः कोऽपि प्रयासो न इत्याशयः। कमलाच्चन्द्रोऽधिकः, तस्मादपि त्वन्मुखलावण्यं साकल्येन निर्मितत्वात् अधिकमिति तात्पर्य्यम्॥ १४४॥

किञ्चित् वैशिष्ट्यं प्रतिपादयितुमुक्तमेवार्थं भङ्ग्यन्तरेणाह, लावण्येनेति।—हे प्रिये। अखिलेन सकलेन, लावण्येन सौन्दर्य्यविशेषेण, तव भवत्याः, वदनं मुखम, आरम्भि निरमायि, इव वेधसा इति शेषः ; ततः भवद्वदनकामनीयवर्णनाचिन्ता अपि दूरे तिष्ठतु, अशक्यकरत्वादिति भावः, परन्तु तत्पात्र-मात्रस्पृशा उक्तरीत्या केवलं लावण्याधारगात्रलग्नेन, अत एव प्रोञ्छनलब्धताऽर्द्धमलिनेन उत्थानकाले अङ्गुल्या पात्रनिघर्षणेन प्राप्ततया किञ्चिद्विवर्णांशेन, शेषेण अवशिष्टलावण्येन, यः चन्द्रः विधुः, आरम्भि निरमायि, इव विधिना इति शेषः, तस्य चन्द्रस्य, लेखाऽपि रेखाऽपि, लावण्यशेषनिर्मितस्य चन्द्रस्य षोडशांशरूपकलामात्रमपीत्यर्थः, सुषमया परमशोभया, निष्कलङ्कत्वात् इति भावः, अहङ्कृत्य अहङ्कारं कृत्वा, अस्या-पेक्षया अहमेव रमणीयेति दर्पम् अवलम्ब्य इत्यर्थः, इवेति शेष, शम्भोः हरस्य, शिखामणिः शिरोभूषणम्, अभूत् अजायत, शिवशिरः अध्यारोहत् इत्यर्थः, अन्योऽपि अविवेकी कस्यापि गुणस्य लेशोऽपि स्वस्मिन् वर्त्तते चेत् सदर्पं महतः शिरः अधि-रोहति इति दृश्यते। अब्जं कुमुदं, तथा पद्मञ्च कमलञ्च,

[ कर्त्तृ ] यत् यस्मात्, तस्य चन्द्रस्य, पदं स्थानं, प्रतिबिम्ब-स्थानं जलमिति भावः, अस्पृशत्, स्पर्शमकरोत्, अतः अस्मादेव हेतोः, श्रियाः शोभायाः, सद्म आलयः, अभूत् अजायत, चन्द्रकरसंस्पर्शादेव हि कुमुदं सश्रीकं भवति, तथा जलस्य चन्द्रकिरणस्पर्शात् पद्मस्य तत्रोत्पन्नत्वात् वर्त्तमानत्वात् कुमुद-साहचर्य्याच्च पद्ममपि श्रियाः स्थानमभूदित्यर्थः। यद्वा— पद्मञ्च अतः कुमुदात् हेतोः, श्रियाः सद्म अभूत्, अब्जत्वजाति-योगात् कुमुदाधारजलयोगाच्च कुमुदादेव परम्परया पद्मानां लक्ष्मीगृहत्वमभूदित्यर्थः। "तल्लेखा" इत्यत्र "यल्लेखा" इति पाठे—यस्य लेखा शम्भोः शिखामणिरभूत्, तस्य शिखामणि-भूतस्य चन्द्रस्य, पदं स्थानं, शिवमस्तकमिति यावत्, यस्मात् अब्जं पद्मञ्च अस्पृशत्, पूजासमये इति भावः, अतस्तदुभयं श्रियाः सद्म अभूत्, चन्द्रसम्बद्धशिरःसम्बन्धात् उभयं श्रीगृह-मभूत् इत्यर्थः। यद्वा—अब्जं कुमुदं, पद्मञ्च तस्य शम्भोः, पदं चरणं, यत् यस्मात्, अस्पृशत्, पूजाकाले इति भावः, अतः अस्मात् हेतोः, उभयं श्रियाः सद्म अभूत्, शम्भोः पदे अव-स्थिततया शम्भोरेव शिरःस्थचन्द्रलेखया परम्परासम्बन्धेन साहचर्य्यलाभादिति भावः। यल्लावण्यपरम्परया संयोगवशात् कमलकैरवयोः, तथा लावण्याधारमात्रलग्नेन लेशमात्रलावण्येन निर्माणाच्च चन्द्रस्य ईदृशी शोभा जाता, तेन अखिलेन लावण्येन निर्मितस्य तवाननस्य शोभा अनिर्वचनीयैवेति निष्कर्षः। तस्य लावण्यस्थानं विधिहस्तलावण्यलेपक्षालनजलं यस्मात् कुमुदं पद्मञ्च अस्पृशत्, यद्वा पद्ममेव अस्पृशत्, यतोऽब्जं तस्मात् कुमुदं पद्मञ्च पद्ममेव वा श्रीसद्माभूदिति वा। त्वन्मुखलावण्य-लेशपरम्परासंस्पर्शप्राप्तशोभानि चन्द्रादीनि,अतः त्वन्मुखलावण्यं वाङ्मनसगोचरं न भवतीति भावः। अर्थान्तरस्य स्पष्टत्वात्

सपीतेः सम्प्रीतेरजनि रजनीशः परिषदा
परीतस्ताराणां दिनमणिमणिग्रावमणिकः।
प्रिये! पश्योत्प्रेक्षाकविभिरभिधानाय सुशकः
सुधामभ्युद्धर्त्तुं धृतशशकनीलाश्मचषकः॥ १४६॥

पूर्वार्द्धस्य तु अर्थान्तरप्रतिपादनार्थमनुवादत्वात् नायं श्लोकः पुनरुक्तः॥ १४५॥

सपीतेरिति।—हे प्रिये! सम्प्रीतेः सम्यक् या प्रीतिः ताराणामन्योऽन्यं सौहार्दं तस्मात् हेतोः, या सपीतिः सह साईं, परस्परम् एकत्रावस्थाय इत्यर्थः, पीतिः पानं तस्याः सपीतेः हेतोः, [ "वोपसर्जनस्य" इति वा "सहस्य" इति योगविभागाद्वा सहस्य सः ] सुहृदो हि सहपानं कुर्वन्ति इति लोकाचारो दृश्यते, यद्वा—सपीतेः हेतोः या सम्प्रीतिः रुच्यभिवृद्धिः तस्या हेतोः, परिषत्त्व प्रति अयमेव हेतुरिति बोद्धव्यम्; ताराणा नक्षत्राणां, परिषदा सभया, सङ्घेनेति यावत्, परीतः समन्तात परिवेष्टितः, रजनीशः निशापतिश्चन्द्रः, दिनमणिः सूर्य्यः, तस्य मणिः सूर्य्यकान्ताख्यरत्नं, तद्रूपः यो ग्रावा शिला, तस्य मणिकः अलिञ्जरः, सूर्य्यकान्तमणिनिर्मितः अतिधवलः स्थूलः पेयद्रव्याधारभूतः इव इत्यर्थः, अजनि सम्भूतः, विधिना तारापरिषदा वा व्यरचि इति भावः, पश्य अवलोकय, एतत् त्वमिति शेषः, अत एव सुधाम् अमृतम्, अभ्युद्धर्त्तुम् उत्तोलयितु, तारापरिषदैव इति भावः, धृतः उपरि विन्यस्तः, ताराभिर्वेति शेषः, यः शशकः मृगविशेषः, चन्द्रमध्यस्थितः कलङ्कः इति यावत्, स एव नीलाश्मा नीलकान्तमणिः, नीलवर्णत्वपरिमाणयोस्तुल्यत्वादिति भावः, तस्य चषकं पानपात्रं, नीलकान्तमणिघटितपानपात्रमित्यर्थः, यस्मिन् स

आस्यं शीतमयूखमण्डलगुणानाकृष्य ते निर्मितं
शङ्के सुन्दरि! शर्वरीपरिवृढस्तेनैष दोषाकरः।
आदायेन्दुमृगादपीह निहिते पश्यामि सारे दृशौ
त्वदङ्के सति वा विधौ द्युतिमयं दध्यादनङ्कः कुतः?॥१४७॥

तादृशः,("चषकोऽस्त्री पानपात्रम्"इत्यमरः) इव अयमिति शेषः, इति उत्प्रेक्षायां सादृश्येन वस्त्वन्तरसम्भावनारूपोत्प्रेक्षालङ्कार-सम्पादनविषये, कविभिः कवयितृभिः, विशिष्टसम्भावनाचतुरैः श्रीहर्षादिभिर्महाकविभिरित्यर्थः, [ खलर्थयोगात् न षष्ठी ] अभिधानाय एवं वर्णयितुं, सुशकः सुखेन शक्यः, [ सुशकः इति खल् ] चन्द्रो धावल्यात् पीयूषपूर्णः सूर्य्यकान्तमणि-घटितमाणिकः इव, कलङ्कश्च नीलमणिघटितः चषक इव दृश्यते एतत् पश्येत्यर्थः। यथा मणिकस्थोदकाद्युद्धरणाय मणिकमुखे चषकः स्थाप्यते, तथा ताराभिः परस्परं मिलित्वा सुधापानं कर्त्तुं परिवेष्टितस्य सुधापूरितस्य अस्यापि चन्द्रमणिकस्य मुखे सुधोद्धरणाय शशनामनीलमणिचषको निक्षिप्तः इति कविभिः उत्प्रेक्षितुं शक्यते इति सरलार्थः॥ १४६॥

आस्यमिति।—हे सुन्दरि! शीतमयूखस्य चन्द्रस्य, मण्डलं विम्बं, तस्य गुणान् कान्तिमत्त्वाह्लादकत्वादिधर्मान्, आकृष्य गृहीत्वा, ते तव, आस्य मुखं, यतः निर्मितं विरचितं, तेनैव विधिनेति शेषः, तेन गुणगणाकर्षणेन हेतुना, एषः परिदृश्यमानः अयं, शर्वर्य्याः निशायाः, परिवृढः प्रभुः, चन्द्रः इत्यर्थः, दोषाणां दूषणानां, गुणाभावानामित्यर्थः, आकरः आधारः, आश्रयस्थानमित्यर्थः, जातः इति शेषः, इति शङ्के मन्ये, अहमिति शेषः, तथा च सर्वे एव पदार्थाः दोषगुणमिश्रिता भवन्तीति स्वभावः, एवञ्चायं निशापतिरपि

शुचिरुचिमुडुगणमगणनममुमति-
कलयसि कृशतनु ! न गगनतटमनु ।

तादृश एवासीत्, ततश्च विधिना तस्मात् गुणानाकृष्य तैः तव मुखनिर्माणे कृते सति दोषा एव अवशिष्टाः स्थिताः, तेनैवायं दोषाणामाकर इति व्युत्पत्त्या दोषाकरनाम्ना ख्यातः, न तु दोषा रात्रिः तत्करोतीति व्युत्पत्त्या दोषाकरः इति नाम्ना प्रसिद्ध इति भावः । तथा इन्दोः चन्द्रस्य, मृगात् अङ्कस्वरूप-हरिणात् सकाशादपि, सारे उत्कृष्टे, "सारम्" इति क्वचित् पाठः ; दृशौ नेत्रे, आदाय गृहीत्वा, इह भवन्मुखे, निहिते स्थापिते, योजिते इति यावत्, विधिनैवेति शेषः, इति च पश्यामि अवलोकयामि, तर्कयामीति यावत्, अहमिति शेषः, तेन चायं मृगः अन्ध एव जात इति भावः ; ननु कुतस्त्वया एव ज्ञातमिति चेत् ? आह—त्वदङ्के तव मुखे, चन्द्रादपि अति-सुन्दरे इति भावः, सति विद्यमाने, अनन्धः चक्षुष्मान्, एवञ्च उभयतारतम्यविचारचतुरः इति भावः, अयम् इन्दोर्मृगः, विधौ चन्द्रे, कुतो वा कस्मात् वा कारणात्, धृतिं धैर्य्यम्, अवस्थानजनितसन्तोषमित्यर्थः, अथच समीचीनाधारपरि-तोषमिति यावत्, दध्यात् ? धारयेत् ? अपि तु न कुतो-ऽपीत्यर्थः, नेत्रोद्धरणात् अन्धत्वेनैव त्वन्मुखरामणीयकदर्शनाशक्तेः अन्यत्र गन्तुम् अशक्तेश्च त्वन्मुखं त्यक्त्वा तत्रैव अयं स्थितः, अन्यथा विधुं परित्यज्य त्वन्मुखचन्द्रे एव धृतिं दध्यादिति भावः । त्वन्मुखं चन्द्राधिकं, नेत्रे च मृगनेत्राभ्यामधिके इति निष्कर्षः ॥ १४७ ॥

शुचीति ।—कृशतनु ! हे क्षीणाङ्गि ! गगनतटं नभःस्थलं, [ कर्मप्रवचनीययोगे द्वितीया ] अनु लक्ष्यीकृत्य, वर्त्तमानमिति

प्रतिनिशशशितलविगलदमृतभृत-
रविरथहयचयखुरविलकुलमिव ॥ १४८ ॥
उपनतमुडुपुष्पजातमास्ते
भवतु जन: परिचारकस्तवायम् ।

---

शेष:, शुचिरुचिं श्वेतकान्तिं, तथा अगणनं बहुत्वात् सङ्ख्यातुम् अशक्यम, अमुम् अङ्गुल्या निर्देश्यं प्रत्यक्षगम्यम्, उडुगणं नक्षत्रसमूहं, प्रतिनिशं निशायां निशायां, प्रतिरात्रौ इत्यर्थ:, [ वीप्सायामव्ययीभाव: ] शशितलात् चन्द्राधोभागात्, विगलता स्रवता, अमृतेन पीयूषेण, भृतं परिपूर्णं, रविरथस्य सूर्य्यस्यन्दनस्य, य: हयचय: अश्वसमूह:, तस्य खुराणां शफानां, यानि विलानि गर्त्ता:, खुरन्यासजनितविवराणि इत्यर्थ:, तेषां कुलं वृन्दमिव, स्थितमिति शेष:, न अतिकलयसि ? न अतिशयेन विवेचयसि ? अपि तु तदिव अतितरां जानीहि इत्यर्थ:, त्वमिति शेष:, नक्षत्रवदेव अमृतस्यापि शुभ्रत्वादिति भाव: । प्रतिनिशं चन्द्रात् गलता धवलेन अमृतेन पूर्णा: सूर्य्याश्वखुरगर्त्ता: इव तारका: शोभन्ते इति निष्कर्ष: ॥ १४८ ॥

अथातिशयेन उद्दीपकचन्द्रगुणवर्णनात् कामावेशाधिक्येन सम्भोगवासनां प्रकटयति, उपनतमिति ।—हे प्रिये । उडूनि नक्षत्राणि एव, "रक्तो भौम: शनि: कृष्णो गुरु: पीत: सित: कवि:" इत्यादिज्योति:शास्त्रादिप्रामाण्यात् नानावर्णाकृतीनि इति भाव:, पुष्पजातं कुसुमसमूह:, शुभ्रत्वोज्ज्वलत्वादिसाम्यादिति भाव:, [ "जातिर्जातञ्च सामान्यम्" इत्यभिधानाज्जातशब्द: सामान्यवाची पुष्पमात्रे पर्य्यवस्यति ] उपनतम् उपस्थितम्, आस्ते वर्त्तते । अयं मल्लक्षण:, जन: लोक:, तव भवत्या:, परिचारक: सेवक:, प्रारब्धकामदेवपूजायां चन्दनाद्युप-

तिलतिलकितपर्पटाभमिन्दुं
वितर निवेद्यमुपास्स्व पञ्चबाणम् ॥ १४९ ॥
स्वर्भानुप्रतिवारपारणमिलद्दन्तौघयन्त्रोद्भव-
श्वभ्रालीपतयालुदीधितिसुधासारस्नुधारद्युतिः ।

---

चारापनायकः इति यावत्, अथच सम्भोगसुखप्रद इत्यर्थः, भवतु सम्पद्यताम्, अन्योऽपि देवपूजकः पुष्पादिसामग्र्या देवं पूजयति, कश्चित् परिचारकोऽपि तस्य वर्त्तते इति दृश्यते; तिलैः तदाख्यकृष्णवर्णशस्यविशेषैः, तिलकितं सञ्जाततिलकं, तिलैः एव वा तिलकवत् कृतम्, उपरिभागे कृष्णतिलविकीरणेन तिलकोपमशोभासम्पन्नमित्यर्थः, [ "तारकादित्वात् इतच्" "तत्करोति" इति वा ण्यन्तात् निष्ठा ] यत् पर्पटं शालि-तण्डुलपिष्टरचितः चिपिटः तिलशष्कुलीसंज्ञः पिष्टकविशेषः, ( "पर्पटं पिष्टभेदे स्यात् पर्पटो भेषजान्तरे" इति मेदिनी ) तद्वत् आभा कान्तिः यस्य तादृशं, सकलङ्कमध्यत्वादिविशिष्ट-पर्पटसदृशम् इत्यर्थः, उपरिभागे तिलवत् कृष्णवर्णमृगचिह्न-सत्त्वात् अंशान्तरे च श्वैत्यवशात् गोलाकारत्वाच्चेति भावः, इन्दुमेव चन्द्रमेव, निवेद्य नैवेद्यं, नैवेद्यतया इत्यर्थः, वितर समर्पय, कामाय इति शेषः, एवं पञ्चबाणं कामदेवं, पञ्चबाणः इत्यनेन कामस्य अतिपीडाकारित्वं सूच्यते ; उपास्स्व पूजय । सर्वाणि नक्षत्राणि उदितानि, कामोद्दीपकः चन्द्रोऽपि उदितः, सुरतान्तरायकारी निषिद्धः सन्ध्यासमयश्च अतिक्रान्तः, तस्मात् कामम् उपास्स्व, सुरतेच्छुः अस्मीति भावः ॥ १४९ ॥

इदानीं काव्यसमाप्तिं चिकीर्षुः श्रीहर्षो नायकमुखेन चन्द्रदेवोल्लेखपूर्वकम् आशिषमाशास्ते, स्वर्भानुरिति ।—हे प्रिये ! स्वर्भानोः राहोः, प्रतिवारं पौनःपुन्येन, प्रत्येकग्रहणः

पुष्पेष्वासनतत्प्रियापरिणयानन्दाभिषेकोत्सवे
देवः प्राप्तसहस्रधारकलशश्रीरस्तु नस्तुष्टये ॥१५०॥

काले इत्यर्थः, यत् पारणं भक्षणं, चन्द्रस्यैव गिलनमित्यर्थः, तेन तत्र वा मिलन् संलग्नीभवन्, यः दन्तौघः दशनपङ्क्तिः, तद्रूपं यन्त्रं छिद्रकरणसाधनोपायविशेषः, तस्मात् उद्भवः उत्पत्तिः यस्याः सा तादृशी, या श्वभ्रालो छिद्रसमूहः, दन्तदंशनकृतविवरपरम्परा इत्यर्थः, तया तस्याः सकाशात् वा पतयालुः पतनशीला, दीधितिसुधा किरणामृतं, तद्रूपः सारः श्रेष्ठः भागः यस्य स तादृशः, दीधितिसुधायाः सार इति वा; यद्वा—पतयालुः पतनशीलः, दीधितिसुधायाः आसारः धारासम्पातः, दीधितिसुधारूपः वा आसारः यस्य सः तादृशः, अत एव पुष्पेष्वासनस्य कुसुमधनुषः, कामदेवस्येत्यर्थः, तत्प्रियायाः कामकान्ताया रतेश्च, परिणयः परि सर्वतोभावेन, नयः नयनम्, आनयनमित्यर्थः, तद्रूपः विवाहः इति यावत्, तत्र यः आनन्दः सम्भोगप्रमोद एव नृत्यगीताद्यनुष्ठानरूपप्रमोदः, तत्र यः अभिषेकः वीजनिषेक एव वैवाहिकमङ्गलस्नानं, तस्य उत्सवे आनन्दानुष्ठाने, यद्वा—परिणयानन्दः विवाहरूपः आनन्दः, तत्सम्बन्धिनि अभिषेकोत्सवे महाभिषेकार्थं, प्राप्ता लब्धा, सहस्रधारस्य सहस्रच्छिद्रगलज्जलासारस्य, सहस्रच्छिद्रेण जलपतनोपयोगिन इत्यर्थः, कलशस्य कुम्भस्य, श्रीरिव श्रीः शोभा येन सः तादृशः, महोत्सवे हि सहस्रधारेण सुवर्णकलशेन महाभिषेकः क्रियते, तथा च राहुदन्तकृतच्छिद्रपरम्परागलदमृतधारः चन्द्रः गलज्जलसहस्रच्छिद्रसुवर्णकलशः इव शोभमानः इत्यर्थः, देवः प्रकाशमानः, देवताप्रभावसम्पन्नः इत्यर्थः, तुषारद्युतिः हिमकरः चन्द्रः, अथच तुषारद्युतिः

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
द्वाविंशो नवसाहसाङ्कचरिते चम्पूकृतोऽयं महा-
काव्ये तस्य कृतौ नलीयचरिते सर्गो निसर्गोज्ज्वलः ॥१५१॥

रिव देवः, नः आवयोः, वर्णनां पूजाञ्च कुर्वतोरिति भावः, [ "अस्मदोर्द्वयोश्च" इति द्वित्वेऽपि बहुवचनम् ] तुष्टये सन्तोषाय, उत्कटमन्मथोद्रेकात् दीधितिसुधावर्षणेन सुरत-श्रमापनोदनाच्च परमानन्दाय इत्यर्थः, अस्तु भवतु। पूर्वोक्त-वर्णनया उक्तविधत्वत्कृतपूजया च सुरतप्रवृत्तयोः आवयोः उद्दीपकतया परमानन्दं कुर्य्यात् इति भावः। एतेन तत्समयोचितरतिकामविवाहोत्सवाभिधानेन, चन्द्रोऽस्तु नः तुष्टये इत्यनेन च विलासिना नलेन स्वानिर्वर्त्त्य-तृतीयपुरुषार्थ-पयोधिपीयूषरसास्वादनलालसः अभिव्यज्यते। सुधाधार इत्यपि पाठे—दीधितिसुधायाः धारा यस्य सुधायाः आधारः इति वा। आनन्दपदेन तुष्टये अस्तु इत्याशिषा च ग्रन्थसमाप्तिं द्योतयति। महाभारतादौ वर्णितस्यापि उत्तरनलचरितस्य नीरसत्वात् नायकानुदयवर्णने रसभङ्गसद्भावाच्च काव्यस्य च सहृदय-हृदयाह्लादनफलकत्वाच्च तथा "रसैः कथा यस्य सुधाऽवधीरिणी" इत्यादिना आदावेव कविना शृङ्गाररसस्यैव मुख्यत्वेन वर्ण-नाभिप्रायप्रकटनाच्चात्र उत्तरचरित्रं श्रीहर्षेण न वर्णितम् इत्यादि ज्ञातव्यम् ॥ १५० ॥

श्रीहर्षमिति।—पूर्वार्द्धार्थः स्पष्टः। नवः य साहसाङ्कः तन्नामगौडाधिपतिः, तस्य चरिते चरित्रे विषये, "नृपसाहसाङ्क" इति पाठे—नृपश्च असौ साहसाङ्कश्च तस्य गौडेन्द्रस्य चरिते विषये, चम्पूं गद्यपद्यमयं काव्यं करोतीति चम्पूकृत् तस्य चम्पूं

यथा यूनस्तद्वत् परमरमणीयाऽपि रमणी
कुमाराणामन्तःकरणहरणं कैव कुरुते ? ।
मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषानादरभरैः ? ॥ १५२ ॥

---

विनिर्मितवतः, "गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते" इति दर्पणोक्तलक्षणात्, एतेन सः अपि ग्रन्थः येन कृतः इति सूच्यते ; तस्य श्रीहर्षस्य, "चम्पूकृतः भोजराजस्य विक्रमार्कस्य वा" इति केचित् ; द्वाविंशः द्वाविंशतेः पूरणः इति [ पूरणे डटि टिलोपः ] सर्गः गतः समाप्तिं प्राप ॥ १५१ ॥

एवं ग्रन्थं समाप्य सम्प्रति रसानभिज्ञानामवज्ञया आत्मनः न काऽपि क्षतिरिति मनसिकृत्य कविः स्वमेव आश्वासयति, यथेति ।—यथा यादृक्, परमरमणीयाऽपि अतिशयेन मनोहारिणी अपि, रमणी नारी, यूनः तरुणस्य कामिनः, अन्तः-करणहरणं मनोविमोहनं, कुरुते करोति, सौन्दर्यादिगुणेनेति भावः, कुमाराणां पञ्चमवर्षवयःपर्यन्तबालानां, क्षीरलाभमात्रेण परमपुरुषार्थप्राप्तिम् अभिमन्यमानानाम् अननुभूतकामसुखानां शिशूनामिति भावः,तद्वत् तथा,अन्तःकरणहरणमिति शेषः, का एव,रमणीति शेषः ; "कैव" इत्यत्र"नैव"इति पाठः स्पष्टार्थकः ; कुरुते ? करोति ? अपि तु न का अपि इत्यर्थः, एतच्च सर्वेषामेव प्रत्यक्षसिद्धमिति भावः, ततश्च मदुक्तिः मम वाक्यावली, परमरमणीया मम इयं काव्यरचना इत्यर्थः, सुधीभूय अमृतत्वं प्राप्य, श्रवणमननादिवशात् पीयूषस्वरूपिणी भूत्वा इत्यर्थः, सुधियः विदुषः,सकलदर्शनरहस्यवेदिनः अतिसरसस्य पण्डितस्य इति भावः, अन्तः चेतः, चेत् यदि, मदयति आनन्दयति, सर्व-काव्यलक्षणसम्पन्नतयेति भावः, तर्हि अरसानां नीरसानां,

दिशि दिशि गिरिग्रावाणः स्वां वमन्तु सरस्वतीं
तुलयतु मिथस्तामापातस्फुरद्ध्वनिडम्बराम् ।

रसभावादिबोधविरहितानामित्यर्थः, सर्वथैव असंस्पृष्टरस-ग्रन्थानाम् अपि चलदुपलप्रायाणाम् अहृणादापुच्छपशूनां पुरुषाणामिति भावः,अनादरभरैः तत्कृतावज्ञाऽऽतिशय्यैः, अस्याः मदुक्तेः,सुधीभिः अत्यादृतायाः इति भावः,किं नाम सम्भावनायां, स्यात् ? भवेत् ? अपि तु न किञ्चिदपीत्यर्थः, सुधीभिः आदरे कृते सति नीरसैः अकृते वाऽप्यादरे न किञ्चिदप्यस्याः तैः अपकर्त्तुं शक्यते इति सरलार्थः ; कुमाराणामिव अरसपुरुषाणां रसग्रहणसामर्थ्याभावादेव अनादरातिशय्यं, न तु मदुक्तेरपकृष्ट-त्वात्, तथात्वे चैषा मदुक्तिः यून इव सुधियोऽपि अन्तःकरणं न मर्दयितुं समर्था भवेत्, एवञ्च न मे उक्तः काऽपि लाघवता, न खलु नारायणचरणारविन्दे समर्पणाहतुलसीवृन्दे श्वभिः मूत्र-त्यागे कृतेऽपि यथा तस्य माहात्म्यहानिः स्यात् तथेति भावः । यूनः सुधियः इत्यत्र एकवचनप्रयोगस्य कुमाराणामित्यत्र बहु-वचनप्रयोगस्य चायमभिप्रायो यत् यून इव एकमात्रस्य सुधियो-ऽपि आनन्दोत्पादनेनैव मदुक्तेः सफलता भवेत्, न पुनः कुमाराणामिव बहूनामपि अरसपुरुषाणामनादरभरैः काऽपि गौरवहानिरिति। सुधीभिः आदृतत्वात् सकलगुणपूर्णाऽतिसरसा इयं मदुक्तिः इति निष्कर्षः । [ मदुक्तेः सुधारूपत्वाभावात् चोदा-नन्तरञ्च सरसत्वप्रतीतिः सुधात्वात् सुधीभूयोति चिन्त्यः ] सुधियः इति जात्यभिप्रायेण,एकेनापि सुधिया आदरे कृते महत् गौरवं, बहुभिरपि मन्दैः अनादरेषु कृतेषु अपि न किञ्चित् लाघवम् इत्यभिप्रायेण वा । यूनः इति प्रतियोगिनः एकवचनान्त-त्वाच्च एकवचनम् । कवेः स्वग्रन्थमुद्दिश्येयम् उक्तिः ॥ १५२ ॥

स परमपरः क्षीरोदन्वान् यदीयमुदीर्यते
मथितुरमृतं खेदच्छेदि प्रमोदनमोदनम् ॥ १५३ ॥

कविरर्थान्तरोक्त्या स्वरचितकाव्यस्य तथा अन्यकविभ्यः स्वस्य च सर्वथैव उत्कृष्टता प्रतिपादयितुं स्वोयामुक्तिं वर्णयति, दिशीति।—गिरिग्रावाणः अद्रिगतपाषाणाः, दिशि दिशि सर्वासु दिक्षु, स्वां निजां, सरस्वतीं तदाख्यनदीवदेव अन्तर्गत-जलं प्रस्रवणं, वमन्तु उद्गीरयन्तु, निःसारयन्तु इत्यर्थः, आपातेन समन्तात् ऊर्द्ध्वदेशात् अधःपतनेन, स्फुरन् प्रकाशमानः, ध्वनि-डम्बरः शब्दाडम्बरः, शब्दप्रचण्डतेत्यर्थः यस्याः तादृशीं, तां पूर्वोक्तां सरस्वतीं नदीं, मिथः परस्परं, तुलयतु तुलनां करोतु, अन्यनद्या सह समीकरोतु इत्यर्थः, जनः इति शेषः, अथवा—आपाते प्रथमारम्भे एव, स्फुरद्ध्वनिडम्बरां स्फुरत्-प्रपातघोषां, तां जनः मिथः तुलयतु, उभयव्याख्यानेऽपि परिणामे तु न नदी न च तस्याः शब्दाडम्बरः चिरन्तनः इति भावः; यद्वा—आपातः इति विसर्गान्तम् असमस्तपदम्; तेन,आपातः गिरिरुन्नतप्रदेशात् प्रस्रवणनिःसृतजलस्यैव प्रपतनं, स्फुरन् प्रबलवमनवेगेन प्रकाशमानः, ध्वनिडम्बरः शब्दबाहुल्यं, घोरशब्द इत्यर्थः यस्यास्तादृशीं, तां सरस्वतीं, मिथः आत्मना सह परस्परं, तुलयतु; "आपातः इति विसर्जनीयान्तपाठे—आपातः प्रतिभासः तां तुलयतु" इति प्राञ्चः; सः प्रसिद्धः, क्षीरोदन्वान् दुग्धसागरः, परं केवलम्, अपरः न विद्यते परः उत्कृष्टः यस्मात् तादृशः सर्वोत्कृष्टः, अथवा—अपरः अन्यः, पूर्वोक्तसरस्वतीप्रभृतिनदीभ्यः भिन्न इत्यर्थः, यतः यस्य क्षीरोदस्य इदं यदीयं यत्क्षीरोदसागरोत्थम्, अमृतं पीयूषं, मथितुः मन्थनकर्त्तुः, देवासुरादेरित्यर्थः, खेदच्छेदि क्लमापहं,

मथनजनितक्लेशापहमित्यर्थः, तथा प्रमोदनं नितराम् आनन्द-दायि, आदनं भक्ष्यम्, आस्वाद्य-मिष्टान्नरूपं खाद्यमित्यर्थः, उदीर्य्यते उत्पाद्यते। अथ वा—एवम्भूतं परम् उत्कृष्टम् अमृतं यदीयम् उदीर्य्यते सः क्षीरोदन्वान् अपरः परः अन्यो नास्ति, किन्तु एकः एव। यद्वा—यदीयममृतं मथितुः खेदच्छेदि प्रमोदनमोदनम् उदीर्य्यते, स क्षीरोदन्वान् परम् अत्यर्थम्, अपरः अन्यः, पूर्वोक्तमरस्वत्यादिभ्यः सम्पूर्णपृथगेवेत्यर्थः, अथच—प्रतिदिशं सर्वदेशेषु, गिरि वाण्यां विषये, ग्रावाण: पाषाणतुल्याः जडाः रसानभिज्ञाश्च, अन्ये कवयः इति शेषः, स्वां स्वीयां, निजनिजप्रतिभाऽनुरूपामिति यावत्, सरस्वतीं काव्यमयीं वाणीं, वमन्तु उद्गिरन्तु, आपातेन श्रुतिकुहरे प्रवेश-मात्रेणैवेत्यर्थः, "प्रतिभामात्रेण" इति प्राचां व्याख्या ; स्फुरन् प्रकाशमानः, ध्वनेः ध्वन्याख्यकाव्यविशेषस्य, डम्बरः आडम्बरः यस्यां तादृशीं,यद्वा—आपाते प्रथमारम्भे एव, स्फुरन् द्योतमानः, ध्वनिडम्बरः यमकानुप्रासादिशब्दाडम्बरः यत्र तादृशीं, तां प्रागुक्तां सरस्वतीं, केवलं शब्दाडम्बरविशिष्टत्वेन अर्थगौरवा-भावात् अनुपादेयामिति भावः, मिथः अन्योऽन्यं, मत्प्रणीत-काव्येन सह तत्प्रणीतकाव्यं परस्परमित्यर्थः, तुलयतु समीकरोतु, जनः इति शेषः, तस्य कवेः उक्तिः अस्येव, अस्य च तस्येव इत्येव तुलनां करोतु इत्यर्थः, तथाविधसमालोचनायां न मे काऽपि आपत्तिरस्तीति भावः, यदीयं यत्सम्बन्धि, अमृतं पीयूषं, पीयूषोपमं यस्य इदं काव्यमित्यर्थः, मथितुः एतत्-काव्यामृतस्य समालोचयितुरित्यर्थः, जनस्येति शेषः, खेदच्छेदि आनन्दोत्पादकत्वात् समालोचनाजनितश्रमनाशकमित्यर्थः, प्रमोदनं प्रकृष्टरूपेण हर्षजनकम्, ओदनम् अन्नम्, अन्न-वदेव तृप्तिजनकमित्यर्थः, उदीर्य्यते सम्पद्यते, सः तादृशः,

ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञम्मन्यमना हठेन पठिती माऽस्मिन् खलः खेलतु।

क्षीरोदन्वान् दुग्धसमुद्रतुल्यः श्रीहर्षकविरिति भावः, परम् अत्यर्थम्, अपरः नास्ति परः द्वितीयो यस्मात् तादृशः, किन्तु एकः एव, अन्यकविभ्यः सम्पूर्णः पृथगेवेत्यर्थः, अन्ये कवयः पर्वतग्रावतुल्याः, अहं श्रीहर्षस्तु क्षीरसमुद्रतुल्यः इति भावः; यथा क्षीरसागरः नीरार्थिनोऽपि नीरमात्रस्थान् क्षीरेण तर्पयति लक्ष्मीकौस्तुभामृतादिभिः परमानन्ददायिभिः कृतार्थयति च, तथा मदीयकाव्यविचारकस्यैव खेदच्छेदि प्रमोदनवचनामृतम् उत्पद्यते नान्यकाव्यविचारकस्य इति अन्ये ग्रावतुल्याः क्षीरोदतुल्यश्च अहम् इति निष्कर्षः। क्षीरोदसमुद्रो यथा सर्वजलाशयेभ्यः श्रेष्ठः, अहं श्रीहर्षोऽपि तथा सर्वकविभ्यः श्रेष्ठः इति ममेदं काव्यमपि सर्वकाव्येभ्यः श्रेष्ठमिति कवेराशयः॥ १५३॥

इदानीं प्रसादरूपमुख्यगुणाभावात् अतिदुर्बोधत्वाच्च रसबोधपरिपन्थि अकाव्यमिदं रचयित्वा कथमीदृक्तया विकत्थनां करोषि? इति ये वदन्ति तच्छङ्काम् अपनुदन् खलदर्पदलनार्थं गुरुसम्प्रदायेन विना दुर्बोधम् इति अतिगाम्भीर्यप्रतिपादनार्थञ्च बुद्धिपूर्वमेव मया इदं काव्यं तथा दुर्बोधं व्यरचि इत्याह, ग्रन्थेति।—आत्मानं प्राज्ञं विद्वांसं मन्यते इति प्राज्ञम्मन्यं पण्डिताभिमानि, मनः चित्तं यस्य एवंविधः, न तु तत्त्वतः प्राज्ञ इति भावः, अत एव अस्मिन् नैषधचरिताख्ये काव्ये, हठेन सहसा, बलपूर्वकमित्यर्थः, अर्थबोधमकृत्वैवेति भावः, पठिती पठितं पठनमस्यास्तीति तादृशः, अस्य काव्यस्य पाठकः इत्यर्थः, [ "क्तस्य चेन्-विषयस्य" इति कर्मणि सप्तमी ] खलो दुर्जनः,

श्रद्धाऽऽराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-
त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः॥ १५४॥

दोषाविष्करणाभिप्रायेणैव पाठप्रवृत्तेरिति भावः, मा खेलतु न क्रीडतु, निन्दाकरणाभिप्रायेणैव तात्पर्य्यादिकमबुद्धा क्रीडावत् न अवजानात् इत्यर्थः, किमत्र अस्ति इति अश्रुतमव व्याकर्त्तुं शक्यते इति अवज्ञापूर्वां दर्पाभिव्यक्तिं मा कार्षीत् इति यावत्, इति हेतोः इह अस्मिन् नैषधचरिते काव्ये, क्वचित् क्वचित् अपि तत्र तत्र स्थले, "अत्रामा वामार्द्धे" "वस्तु वास्तु घटते न भिदानाम्" "ईशाणिमैश्वर्य्यविवर्त्तमध्ये" इत्यादि स्थाने इत्यर्थः, क्वचित् क्वचित् अपि इत्यनेन प्रायशः सर्वत्रैव प्रसादमाधुर्य्यादि-गुणान्विता अपि श्लोका अत्र विन्यस्ता इति न काव्यत्वहानिः अस्य इति सूच्यते; मया श्रोहर्षेण,प्रयत्नात् विशेषयत्नपूर्वकं,बुद्धि-पूर्वकं स्वेच्छानुसारेणेवेत्यर्थः, ग्रन्थस्य नैषधचरिताख्यस्य अस्य महाकाव्यस्य, ग्रन्थि. ग्रन्थिवत् ग्रन्थिः बन्धः, दुर्मोच्यरज्ज्वादि-ग्रन्थिवत् अतिकठिनवंशादिपर्ववद्वा दुरुद्घाटदुर्बोधबन्धविशेष इत्यर्थः, तात्पर्य्योद्घाटनाशक्यत्वात् कठिनत्वाच्च दन्तस्फुटना-समर्थः प्रबन्धविशेष इति यावत्, ग्रथ्यमानशब्दार्थकुटिलिका इति भावः, ("ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणोः" इति मेदिनी) न्यासि अस्थापि, व्यरचि इत्यर्थः, खलमुखभङ्गार्थं बुद्धिपूर्वकं मया इदं काव्यं दुर्बोधं व्यरचि, न तु प्रसन्नकाव्य-करणाशक्तेः इति भावः। सज्जनस्य तु ग्रन्थविवेचनोपायमाह, श्रद्धेति—श्रद्धया भक्तिविशेषसहितविश्वासेनेत्यर्थः, गुरौ दैवतैक-बुद्धा इति यावत्, आराद्धेन पूजितेन, सन्तोषितेनेति यावत्, [ राधेरनुदात्तत्वात् इड्भावः ] गुरुणा उपाध्यायेन, श्लथीकृतः पूर्वमश्लथोऽपि श्लथः कृतः व्याख्यया सुबोधः कृतः, दृढ़ः कठिनः,

ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरात्।
यः साक्षात् कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम्।

स्वरूपतः दुर्बोधः इति यावत्, ग्रन्थिः पूर्वोक्तबन्धविशेषः यस्मै स तादृशः, गुरुसम्प्रदायावगतार्थः इति भावः, अत एव सज्जनः साधुः, दयार्द्रचित्यात् गुर्वाराधनाच्चेति भावः, एतत्-काव्यस्य अस्य नैषधचरितस्य, रसाः शृङ्गारादिका आस्वाद्या इव रसाः जलानि, तेषाम् ऊर्मिषु तरङ्गेषु, अमृतलहरीषु इति यावत्, यत् मज्जनं निमग्नीभवनम्, अन्तःप्रवेशनमित्यर्थः, तेन यत् सुखम् मनोवानन्दानुभवः, तस्य व्यामज्जनं विशेषासक्तिं, प्रकृष्टसम्बन्धमित्यर्थः, यद्वा—तज्जनितसुखेषु वि विशेषेण, आ समन्ताद्भावेन च, मज्जनम् अवस्थानं, समासादयतु प्राप्नोतु, सहजग्रन्थयः स्वत एव सर्वेषां सुबोधाः, दृढग्रन्थयस्तु भक्त्या-राधितगुरुकृपामन्तरेण नैव बोद्धुं शक्याः, तस्मात् गुरुपरम्परया एव अध्येयमिदं काव्यं, यतः गुरुपरम्परया विना एकस्यापि पदस्य अर्थो बोद्धुं न शक्यते इति भावः। यश्च इदं गुरुपरम्परया अधीते सः सततं सुखी भवति इति महाकविः तस्य आशिषं ददाति॥ १५४॥

ननु आत्मश्लाघा मूर्खलक्षणं, न पण्डितलक्षणम्, अतः ईदृगात्मश्लाघापरस्त्वं मूर्ख एव भवसि, इति केषाञ्चित् निन्दा-वादं परिहर्त्तुम् आत्मश्लाघापरस्यापि स्वस्य पण्डितत्वं ख्यापयति, तथा पाण्डितानन्दजननद्वारा स्वकृतेरभ्युदयमाशास्ते च, ताम्बूलेति।—यः कान्यकुब्जेश्वरात् कान्यकुब्जदेशाधिपतेः सका-शात, ताम्बूलद्वयं वीटिकायुगलं, सज्जितपर्णद्वयमित्यर्थः, सकलपण्डिताधिक्यव्यञ्जनं सम्मानाधिक्यसूचकञ्चेति भावः, तथा आसनञ्च पीठञ्च, राजसभायां सर्वसामाजिकेभ्यः

यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः
श्री-श्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम् ॥१५१॥

वैशिष्ट्यसूचकं विद्वद्योग्यमुन्नतञ्चेति भावः, लभते प्राप्नोति; पुरा भारते वर्षे एषा रीतिरासीत् यत्, सम्मानार्हान् यशस्विनो विद्वज्जनान् राजानो राजमात्रा वा पुरुषाः ताम्बूलोच्चासन-दानादिना सभामध्ये अभिनन्दयन्ति; इदानीमपि आर्य्य-नृपतिषु मध्ये एषा प्रथा दृश्यते, वङ्गदेशेऽपि श्राद्धादिसभायां ताम्बूलगुवाकादिना माननीयमभ्यर्च्चणप्रथा वर्त्तते इति सुधीभिर्विभाव्यम्; ननु त्वया ईदृक् किं कृतम्? येन कान्यकुब्जाधिपतेरपि ईदृशसमादरपात्रः सञ्जातः? इत्या-शंसायामाह, न केवलं राजपूज्यः एव, किन्तु यः अहं श्रीहर्ष, समाधिषु अष्टाङ्गयोगेषु ध्यानेषु वा विषये, प्रमोदार्णवं परमानन्दपारावारस्वरूपं, "सत्य ज्ञानमानन्दं ब्रह्म" इति श्रुतिदर्शनादिति भावः, परं वागाद्यगोचर, "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुतेरिति भावः, ब्रह्म परमात्मानं, साक्षात् कुरुते प्रत्यक्षं पश्यति, ध्याननिमीलित-लोचनः सन् हृत्कमलासने अवलोकयतीत्यर्थः; अथ तर्हि त्वं केवलं ब्रह्मानन्दानुभूतिपर एव, न तु काव्यरसास्वादाभिज्ञ इत्याशङ्कायामाह, न परं पूर्वोक्तगुणविशिष्टः ब्रह्मविदेव, परन्तु यस्य काव्य नैषधचरितादिरूप सरसं वाक्य, मधुवर्षि अतिसरसत्वात् अमृतनिष्यन्दि, श्रोतृणां पाठकानाञ्च अतीव तृप्तिजननादिति भावः; भवतु, तर्हि महाकविरेव भवान्, न पुनः शास्त्रान्तराभिज्ञः? इत्याशंसायामाह, न परं पूर्वोक्तगुणविशिष्टः अतिसरसः महाकविरेव, परन्तु तर्केषु तर्कशास्त्रेषु अपि, यस्य मम श्रीहर्षस्य, उक्तयः वचनानि,

प्रश्नवाक्यानि इत्यर्थः, धर्षिताः मर्दिताः, पराभूतिं प्रापिता इत्यर्थः, परे विपक्षाः, प्रतिवादिनः इत्यर्थः याभिः तादृश्यः, तस्य एवम्भूतस्य सुप्रसिद्धस्य, राजसम्मानितस्य साक्षात्कृत-परब्रह्मणः महाकवेः तार्किकश्रेष्ठस्य च विद्वच्चक्रचूडामणेरिति भावः, श्रीश्रीहर्षकवेः तदाख्यस्य मम, इयम् एषा, कृतिः काव्यरचनारूपा क्रिया, मत्कृतमिदं महाकाव्यमित्यर्थः, कृतिनां सुधियां विदुषां, मुदे आनन्दाय, अभ्युदीयात् अभ्युदयं प्राप्नुयात्, सर्वतोभावेन विराजतामिति यावत्, कृतिनाम् आनन्दं कुर्वती सती आकल्पम् अतिवृद्धिं प्राप्नुयात् इत्याशीः । [ईगवावित्यस्य रूपम् ] सर्वत्र यच्छब्दनिर्वाहः गुणः एव ॥ १५५ ॥

इति उत्तरनैषधव्याख्या समाप्ता ।